श्रियै नमः

ஸ்ரீமதே ரங்கராமாநுஜ மஹாதேசிகாய நம:
ஸ்ரீமதே வேதாந்தராமாநுஜ மஹாதேசிகாய நம:
ஸ்ரீமதே ஸ்ரீநிவாஸ மஹாதேசிகாய நம:
ஸ்ரீமதே கோபாலார்ய மஹாதேசிகாய நம:

ஸ்ரீமதே ஸாக்ஷாத் ஸ்வாமீதி
विख्याताय ज्ञानवैराग्यानुष्ठानशेवधये

श्री वेदान्त रामानुज महादेशिकाय नमः
श्रीरङ्गनाथ दिव्यमणिपादुकाभ्यां नमः

व्याख्यान पञ्चक सहित

# ।। श्रीमद्रहस्यत्रयसारः ।।

## மூன்றாவது பாகம்


ஸம்பாதகர்:
ஸ்ரீ உ.வே. வித்வான் பாஷ்யமணி, வீரவல்லி,
வடுவூர் ஸ்ரீ தேசிகாசார்யர்
(ஸ்ரீகார்யம், ஸ்ரீரங்கம் ஸ்ரீமத் ஆண்டவன் ஆச்ரமம்.)


श्रीरङ्ग श्रीमदाण्डवनाश्रमः
Srirangam Srimad Andavan Ashramam, Chennai.

2011

श्रियै नमः

ஸ்ரீமதே ரங்கராமாநுஜ மஹாதேசிகாய நம:
ஸ்ரீமதே வேதாந்தராமாநுஜ மஹாதேசிகாய நம:
ஸ்ரீமதே ஸ்ரீநிவாஸ மஹாதேசிகாய நம:
ஸ்ரீமதே கோபாலார்ய மஹாதேசிகாய நம:

ஸ்ரீமதே ஸாக்ஷாத் ஸ்வாமீதி
विख्याताय ज्ञानवैराग्यानुष्ठानशेवधये

श्री वेदान्त रामानुज महादेशिकाय नमः
श्रीरङ्गनाथ दिव्यमणिपादुकाभ्यां नमः

व्याख्यान पञ्चक सहित

# ।। श्रीमद्रहस्यत्रयसारः ।।

## மூன்றாவது பாகம்

ஸம்பாதகர்:
ஸ்ரீ உ.வே. வித்வான் பாஷ்யமணி, வீரவல்லி,
வடுவூர் **ஸ்ரீ தேசிகாசார்யர்**
(ஸ்ரீகார்யம், ஸ்ரீரங்கம் ஸ்ரீமத் ஆண்டவன் ஆச்ரமம்.)

श्रीरङ्गं श्रीमदाण्डवनाश्रमः
Srirangam Srimad Andavan Ashramam, Chennai.

2011

**Rahasyathraya Saram (Part-III)**

1st Edition, 2011

Copies - 1000



**Price Rs. 750.00**

*Copies can be had :*

**Srirangam Srimad Andavan Asramam**

**# 21, Desikachari Road**

**Mylapore, Chennai - 600 004.**

Printed at :

**Elango Achukoodam**

Mylapore, Chennai - 600 004.

Phone : 2499 1821

Cell No. 98841 84061

श्रियै नमः

श्रीमते लक्ष्मीहयवदन परब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमन्निगमान्तमहादेशिकன் அருளிச் செய்த

# ।। श्रीमद्रहस्यत्रयसारम् ।।

श्रीभाष्यं श्रीनिवासाचार्यர் அருளிச் செய்த **सारदीपिका**

श्रीमद्गोपालार्य महादेशिकன் அருளிச் செய்த **उत्तरसारास्वादिनी**

श्रीमद्भारद्वाज श्रीनिवासाचार्यர் அருளிச் செய்த **सारप्रकाशिका**

श्रीशैल श्रीनिवासाचार्यர் அருளிச் செய்த **सारविवरणी**

श्रीपरकाल संयमीन्द्रमहादेशिकர் அருளிச் செய்த **सारप्रकाशिकासङ्ग्रहम्**

இந்த ஐந்து வ்யாக்யாநங்களுடன்

श्रीमद्वेदमार्गेत्यादि

வேளியநல்லூர் ஸ்ரீ நாராயணாசார்யரால்

பரிசோதிக்கப்பட்டு, ஸ்ரீரங்கம் ஸ்ரீமதாண்டவன் ஆச்ரம ஸ்ரீகார்யம்

வடுவூர், ஸ்ரீ உ.வே. தேசிகாசாரியரால் வெளியிடப்பட்டது.

श्रियै नमः

श्रीमते निगमान्त महादेशिकाय नमः

வ்யாக்யான பஞ்சகங்களுடன் கூடிய ஸ்ரீமந் நிகமாந்த மஹா தேசிகன் அருளிச் செய்த ஸ்ரீமத் ரஹஸ்யத்ரய ஸாரத்தின் த்ருதீய சம்புடத்தில் அடங்கிய அதிகாரங்களுடைய ஸூசிகை.

---

।। श्रियै नमः ।।

।। श्रीमते रामानुजाय नमः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

।। श्रीमते श्रीनिवासमहादेशिकाय नमः ।।

।। श्रीमते वेदान्तरामानुजमहादेशिकाय नमः ।।

# ।। श्रीमुखम् ।।

कल्पितैतिह्यमानस्थैरनल्पैर्जल्पपण्डितैः ।
श्रुतिस्मृतिसदाचारभिन्नमार्गप्रपोषकैः ।। १ ।।

प्रच्छन्नभूमिकाभेदैस्संप्रदायविदूषकैः ।
संप्रदायविरुद्धार्थग्रन्थिग्रन्थशतैर्युतैः ।। २ ।।

गुरुपरम्परालब्धरहस्यार्थप्रभेदिभिः ।
न नश्छिन्नो भवेदर्थो रहस्यत्रयसारतः ।। ३ ।।

पञ्च व्याख्यायुतश्श्रीमान् पञ्चाननसमो भुवि ।
रहस्यत्रयसारोऽयं परपक्षप्रभेदकः ।। ४ ।।

स्वमतप्रकाशकश्चायं परतत्त्वप्रकाशकः ।
मानमेयप्रमातॄणां प्रमितेश्च प्रबोधकः ।। ५ ।।

फलप्राप्तेः कारणत्वात् फलविद्याधिकारवान् ।
संख्यया चैव शूद्राणां स्त्रीणां ज्ञानप्रदायकः ।। ६ ।।

शेषिदिव्यशरण्ययोः दम्पत्योः परभूतयोः ।
पुमर्थतत्त्वहितयोः कृपया विन्दते शुभम् ।। ७ ।।

बहुग्रन्थकृतां श्रीमद्देशिकानां प्रभाषणे ।
यत्र कुत्रापि नैवस्यात् विरोधस्स्वोक्तिमूलतः ।। ८ ।।

लोके ग्रन्थकृतां मध्ये वेदान्तदैशिकैस्समः ।
सर्वसिद्धान्तसारविन्न भूतो न भविष्यति ।। ९ ।।

ततो हि यस्य कस्यापि तस्य ग्रन्थस्य चिन्तनात् ।
तत्त्वज्ञानविवृद्धिश्च शुद्धभक्तिश्च सिद्ध्यति ।। १० ।।

नारायण ! नारायण !! नारायण!!!

इत्थं
श्रीरङ्गरामानुजयतिः

।। श्रियै नमः ।।

।। श्रीमते रामानुजाय नमः ।।

।। श्रीमते निगमान्त महादेशिकाय नमः ।।

# ।। व्याख्यानपञ्चकसहित श्रीमद्रहस्यत्रयसारम् ।।

# (३) तृतीय सम्पुटम् ।।

## ।। मूलमन्त्राधिकारः ।।

मूलं। तारं पूर्वं - ...

---

(सा.दी.) वेदान्ताचार्यवर्यस्याभिप्रायः केन गम्यते।
तथापि तत्कृपाभूम्ना ह्येतावद्विवृतं मया ।।

---

(सा.स्वा.) रहस्यवाणीं विवृणोति यस्य गुरोर्हिवाणी पदवाक्यभङ्ग्या।
शरण्यवाण्या शरणीकृता तं पुराणवाणी शिखरार्यमीडे ।।

இப்படி भागद्वयத்திலே तत्त्वहितपुरुषार्थங்களுக்கு उपदेशமும், प्रतिष्ठानமும் பண்ணி இந்த कृत्स्नार्थங்களும் रहस्यत्रयத்திலே तत्तत्प्रदेशங்களிலே प्रतिपाद्यங்களாயிருக்கிறதாக तत्तदधिकारங்களிலே சொன்னது கூடுமோ? திருमन्त्रத்தில் प्रणवमखण्डமான एकपदமோ? खण्डत्रयात्मको? आद्यपक्षத்தில் अर्थपञ्चकाधिकारத்திலே "आदौ प्राप्यम्" इत्यादिना अकार नारायण शब्दங்களிலே प्राप्यமும், मकारத்திலே प्राप्तृ स्वरूपமும் प्रतिपादिக்கப் படுகிறதென்று சொன்னது विरोधिக்கும் - द्वितीय पक्षத்தில் निर्विभक्तिकाकार मकारங்களுக்கு असाधुत्वமும் अनन्वयமும் प्रसङ्गिக்கும் । परदेवता पारमार्थ्याधिकारத்தில் अखण्ड प्रणवप्रतिपाद्यं परतत्त्वமென்று சொன்னதுவும் विरोधिக்கும் - नमस्ஸு स्वातन्त्र्यनिवृत्तिपरமென்னில் अर्थपञ्चकाधिकारादिகளிலே उपायपरமென்று சொன்னது विरोधिக்கும் - उपायपरமென்று சொல்லில் प्रधानप्रतितन्त्राधिकारादिகளிலே स्वातन्त्र्यनिवृत्तिपरமென்று சொன்னது विरोधिக்கும் - नारायण पदं तत्पुरुषसमाननिष्पन्न மாகில் पुल्लिङ्गत्वम् विरोधिக்கும் - बहुव्रीहिसमास மென்னில் तत्पुरुषனாலே धारकत्वं प्रतिपाद्य மென்று சொன்னது विरोधिக்கும். पक्षद्वयத்திலும் आनुकूल्य सङ्कल्पादि परமென்று கீழ்ச்சொன்னதுவும் दुर्घटम् । तद्वाचकपद மில்லையே? किञ्च सकृत्प्रयुक्त शब्दத்துக்கு युगपदनेकार्थपरत्वமும் अनुपपन्नम् - एकवाक्यமான திரு मन्त्रத்திலே विरुद्धानेकार्थप्रतिपत्तिயும் दुर्घटै। - ...

---

(सा.प्र.) एवं रहस्यत्रयतात्पर्य सिद्धसारतमार्थेषु प्रपत्ति योग्याधिकार पर्यन्तैस्तत्त्व ज्ञापन - ...

---

(सा.वि.) पितृव्याश्श्रीनिवासार्या जयन्ति मम देशिकाः।
मच्चित्तवृत्तावलिखन्ये मन्त्रार्थान् कृपारसैः ।।

---

(सा.सं.) अथैवमनुशिष्टस्थिरीकृतार्थजात प्रकाशकस्य रहस्यत्रयस्य मध्ये यावदर्थस्वार्थकतया - ...

वेदान्ताचार्यवर्योऽयं परं ब्रह्मगुरुश्च नः। निस्समाभ्यधिकस्तस्य महिमैवं - प्रबोधयेत्॥

(सा.दी.) चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहसमाप्तये। वेदान्ताचार्यचरण द्वन्द्वमन्तर्निदध्महे॥

क्वाहं मन्देषु मन्दः कविकथकमृगाधीशवाचोगभीराः
क्वाप्येतास्तत्प्रसादाद्विपरिषति मनो मामकं वीतभीति॥
क्षन्तव्यस्तन्महद्भिर्गुणदृगभिमतैस्साहसं मामकीनं
वाधूल श्रीनिवासो मम गुरुरनिशं मानसे सन्निधत्ताम्॥

இப்படி स्थिरीकरणभागं व्याख्यातமாய் நின்றது - अनन्तरं पदवाक्ययोजनात्मकமான तृतीय भागं व्याख्यात மாகிறது - அதில் முந்த திரு मन्त्रத்தின் पदवाक्य योजनैகளிருக்கும் படியையரு ளிச்செய்கிறார் - அதில் முதலிலே "मन्त्रे तद्देवतायां च तथामन्त्रप्रदे गुरौ। त्रिषु भक्तिस्सदा कार्या साहि प्रथमसाधनम्" என்கிறபடியே मन्त्रप्रतिपाद्यदेवतै मन्त्रप्रदன் मन्त्रமென்று - ...

(सा.स्वा.) द्वयத்திலும் शरणशब्दं रक्षकपरமாகில் - भरसमर्पणपरत्वाभावं प्रसङ्गिக்கும் - उपाय परமாகில் उत्कृष्टे सामान्योक्त्यापचारं प्रसङ्गिக்கும் - किञ्च, प्रपद्ये என்கிற क्रियापदं समर्पण परமென்று சொல்லில் परिकरविभागाधिकारத்தில் गोप्तृत्ववरणमहाविश्वासपरமென்று சொன்னது विरोधिக்கும் - महाविश्वासपर மென்று சொல்லில் साङ्गप्रपदनाधिकारத்தில் समर्पणपरமென்று சொன்னது विरोधिக்கும் - प्रोपसर्गமும் व्यर्थம் - उत्तरखण्डं फलपरமாகில் पूर्वखण्डத்தோடே अनन्वयं प्रसङ्गिக்கும் - समर्पण पर மாகில் पूर्वखण्डத்தோடு पौनरुक्त्यं प्रसङ्गिக்கும் - क्रियापदानन्वयமும் வரும் - चरमश्लोकத்திலும் सर्वधर्मत्यागवचनं बहुशास्त्रविरुद्धम् - बहुत्वं धर्मानिति बहुवचनसिद्ध மாகையாலே सर्वशब्दवैय्यर्थ्यமும் प्रसङ्गिக்கும் माम् என்று एकत्वमेकवचनसिद्धமாகையாலே एकशब्दवैयर्थ्यமும் प्रसङ्गिக்கும் "मोक्षयिष्यामि" என்று उत्तमனாலே अर्थसिद्धமாகையாலே "अहम्" என்கிற पदवैय्यर्थ्यமும் प्रसङ्गिக்கும் - "पापेभ्यः" इति बहुवचनसिद्धत्वात्सर्वशब्द वैय्यर्थ्यமும் प्रसङ्गिக்கும் - सर्व पापेभ्यो मोक्षणवचनं सर्वपापमोक्षणपर மாகில் उत्तरक्षण एव प्रपन्नानां विनिपातं प्रसङ्गिக்கும். किञ्च सर्वार्थமும் एक रहस्यத்தாலே सिद्धिக்கையாலே रहस्यान्तरवैय्यर्थ्यமும் प्रसङ्गिக்கும் इत्यादि शङ्कैயில் सकलविरोधமும் शमिக்கும்படி रहस्यत्रयத்துக்கு पदवाक्ययोजनै अवश्यं कर्तव्यै யென்று திருவுள்ளம் பற்றி प्रथमं திரு मन्त्रத்திற்கு पदवाक्ययोजनै திரு मन्त्राधिकारத்தாலே विस्तरेण பண்ணக்கடவராய் "मन्त्रनाथं गुरुं मन्त्रं समत्वेनाभिपूजयेत्" इत्यादिகளிற்படியே मन्त्रप्रतिपाद्यदेवताविषय - ...

(सा.प्र .) पूर्वकमधिकारमुक्त्वानन्तरं द्वाभ्यां साङ्गमुपायं निरूप्यानन्तरं त्रिभिः प्रपत्त्यसाधारणफलं निरूप्यानन्तरं सप्तभिस्साधारणफलान्युक्त्वा ततस्सिद्धसाध्यरूपोपायं विशोध्यानन्तरमुपाय तन्निष्ठ प्रभावयोर्व्यवस्थारक्ष्ये कृत्वेदानीं रहस्यत्रयपदवाक्ययोजनां दर्शयितुं - ...

(सा.वि.) तत्त्वहितपुरुषार्थ विषयार्थान् शिक्षित्वा तद्विषयिकण्टकशोधनेन स्थिरीकृत्य तदखिलार्थ - ...

(सा.सं.) व्यापकतममन्त्र ब्रह्मप्रथमं पदवाक्ययोजनया व्याख्यातुमाम्नायोक्त पाठक्रमेण सार्थं स्वाचार्यदत्तं मन्त्रमैनुसन्धतस्स्वस्य स्वीयानां च विषये भगवत अत्यन्ताकिञ्चनत्वनिबन्धनान्‌ ाभरस्वीकरणानुगुण करुणोत्तम्भनाय मन्त्र प्रतिपाद्ये जगत्कारणे - ...

मूलं। तदनुहृदयं तच्च नारायणायेत्याम्नायोक्तं पद – ...

(सा.दी.) இவர்களை अनुसन्धिக்கிறார் - श्लोकत्रयத்தால் - அவற்றிலும் முந்துரतारं पूर्वமென்கிற श्लोकத்தாலே திரு मन्त्रार्थத்தை सङ्ग्रहेणகாட்டா நின்றுகொண்டு मन्त्रप्रतिपाद्यदेवतानुसन्धानद्वारास्वाभीष्टप्रार्थनैபண்ணியருளுகிறார் - तारं पूर्वम् என்று. तारமென்று प्रणवமும் हृदयமென்று नमः पदமும், मन्त्रशास्त्रங்களில் व्यवहरिக்கப்படும் - पूर्वम् ''ओमित्यग्रे व्याहरेत्'' என்கையால். तदनु, तदनन्तरं - हृदयं, नमः पदத்தையும் - तच्च என்று नारायणपदத்தின் श्रुति प्रसिद्धिயையும், प्रभावத்தையும் अनुसन्धिக்கிறார் - आम्नायोक्तमिति - ''नारायणायेत्युपरिष्टात्'' என்று - ...

(सा.स्वा.) மாகவும், मन्त्र प्रवर्तक ऋषि विषय மாகவும், मन्त्रविषयமாகவும், क्रमेणமூன்று श्लोकத்தாலே प्रार्थनाद्यात्मकमङ्गलं செய்தருளாநின்று கொண்டுआद्यश्लोकத்தாலே अधिकारार्थத்தை सङ्ग्रहिக்கிறார் - तारं पूर्वमिति पूर्वं तारं, मन्त्रशास्त्रे तारमिति प्रसिद्धम् - ''ओमित्यग्रे व्याहरेत्'' इति प्रथमतया श्रुतं प्रणवम् - तदनु, तत्पश्चात् - हृदयम्, मन्त्रशास्त्र एव हृदयशब्देन व्यवहृतम् - ''नम इति पश्चात्'' इति प्रणवानन्तरमुच्चार्यतया प्रसिद्धं श्रुतं नम इति पदम् - तत्, श्रुतौ प्रसिद्धम्। ''नारायणाय विद्महे'' इत्यादौ प्रसिद्धम् - आम्नायोक्तम्, ''नारायणायेत्युपरिष्टात्'' इत्युक्तं पदं च। सार्थं यथा भवति -

(सा.प्र .) स्वरूपज्ञानुष्ठेयोपाय तद्विधिपरात् द्वयाच्चरमश्लोकाच्च स्वरूपज्ञानहेतुत्वेन पूर्वं योजयितव्य मूलमन्त्रार्थ ज्ञाने प्रयोजनमाह - तारं पूर्वमित्यादिना तदनुहृदयमिति - ''मञ्चाः क्रोशन्ति'' इतिवद्धृदये षडङ्गन्यासेन्यस्यमानस्य नमसो हृदयशब्देन निर्देशः - स च यत्नेन मन्त्रगोपनार्थः। आम्नायोक्तम्, ''ओमित्यग्रे व्याहरेत् - नम इति पश्चात् - नारायणायेत्युपरिष्टात्'' इत्युक्त मित्यर्थः - पदमिति नारायणशब्दे सुबन्तत्वस्य - ...

(सा.वि.) प्रतिपादकमन्त्रान्। व्याचिख्यासुः प्रथमं द्वयचरमश्लोकव्याख्येय भूतस्य मूलमन्त्रस्य व्याख्यानमारभमाणः अधिकारार्थं सङ्ग्रहश्लोकेनानुसन्धत्ते - तारमिति - आचार्यदत्तम्, आचार्योपदिष्टम् - पूर्वं, प्रथमम् - तारं, प्रणवम् - तदनु, अनन्तरम् - हृदयम्, नमः पदम् - मन्त्रशास्त्रे न्यास प्रक्रियायां ''ज्ञानाय हृदयाय नमः'' इति हृदयेदेशे मन्त्रवर्ण विन्यसने नमश्शब्द घटितवाक्य प्रयोगदर्शनात् - हृदयशब्देन नमः पदं लक्षितम् - मन्त्रगोपनार्थं हृदयशब्द प्रयोगः - तदनु इत्यनुषज्यते - अनन्तरम्। तत्, सर्वार्थग्राहकत्वेन प्रसिद्धम् - नारायणायेति पदं चेत्येवं प्रकारेण - आम्नायोक्तम् - ''ओमित्यग्रे व्याहरेत् - नम इति पश्चात्-

(सा.सं.) परे ब्रह्मणि स्वाभिलषित कैङ्कर्य साम्राज्यविरोधि विघ्ननिवृत्ति प्रार्थनां मङ्गलात्मिकां देशिकोत्तमस्स्वयमनुतिष्ठति - तारमिति। मन्त्रशास्त्रे प्रणवस्तार शब्देन - नमश्शब्दो हृदयशब्देन च व्यवह्रियत इति तारं हृदयमित्युक्तिः - नारायणायेति पदस्य स्वाभिमतपुरुषार्थोपस्थापकत्व तल्लम्भकत्वादि रूपं प्रभावातिशयमनुसन्धत्ते तच्चेत्यनेन - इति शब्दः ''ओमित्यग्रे व्याहरेत्'' इत्याम्नायोक्त पाठक्रमानुकारस्सन्नित्थमित्यर्थः - पदशब्देन कृत्स्नोमन्त्रः परामृश्यते। - ...

**मूलं।** मवयतां सार्थमाचार्यदत्तम्।
अङ्गीकुर्वन्नलसमनसामात्मरक्षाभरं नः
क्षिप्रं देवः क्षिपतु निखिलान् किङ्करैश्वर्यविघ्नान्।।५६।।

---

(सा.दी.) वेदोक्त மான पदத்தையும் सार्थम्, अर्थसहितமாக - आचार्येणोपदिष्टम् - अवयताम्, अनुसन्दधता மென்றபடி, अलस मनसाम्, अकिञ्चनानाமென்கை नः, நம்முடைய - आत्मरक्षाभरम्, अस्माभिस्समर्पित மென்றுகருத்து - अङ्गीकुर्वन्, स्वीकरिத்தருளுகிற - देवः, श्रीमन्नारायणன். निखिलान्। किङ्करैश्वर्यस्य, कैङ्कर्यसाम्राज्यத்தினுடைய - विघ्नान्, अविद्याकर्मादिप्रतिबन्धकங்களை। क्षिप्रम्, இத்देहावसानத்திலே - क्षिपतु, போக்கக்கடவன். प्रार्थनायां लोट् - समर्पण परयोजनैயில் திருमन्त्रार्थानुसन्धानம் இஶ்श्लोकத்தில் सिद्धिக்கும். ।।५९।।

---

(सा.स्वा.) तथा। आचार्यदत्तं पदम्, त्रयमपि पदम् - अवयताम्, अनुसन्दधताम् - अलसमनसाम्, असमर्थानां - नः, दासानामस्माकम् - आत्मरक्षाभरमङ्गीकुर्वन् देवः, मन्त्रदेवताभूतः - द्योतनशीलस्स्वामी - रक्षणोपयुक्तस्स्वामित्वादिगुणक इति यावत् - एवम्भूतस्श्रियः पतिः - निखिलान्किङ्करैश्वर्यविघ्नान् - क्षिपतु இங்கு आचार्यदत्तं मूलमन्त्रमनुसन्दधताமென்று சொல்லாமல் तारं पूर्वमित्यादि क्रमेण प्रत्येकं पदங்களை उपादानं பண்ணுகையாலே अनेकवाक्यार्थपक्षं सूचितम् - अलसमनसां नः என்று சொல்லுகையாலே स्वरूपपरत्वयोजनैயும், किङ्करैश्वर्यविघ्नान् क्षिपतु என்று சொல்லுகையாலே फलपरत्वयोजनैயும் सूचितै - अनिष्टनिवृत्ति प्रार्थनैயாலே मङ्गलமும் कृतமாயிற்று - देवः என்று சொல்லுகையாலே मन्त्रदेवतात्वமும் सूचितम् ।।५९।।

---

(सा.प्र.) स्फुटत्वात्पदत्वोक्तिः - यद्वा पद्यतेऽनेनेति व्युत्पत्त्याकरण मन्त्रत्वेन भगवतः प्रापकमित्यर्थः। ''एतद्वै नारायणस्याष्टाक्षरं पदम्'' इत्यादिना भगवत्प्रापकत्वोक्तेः। अथवापद्यते प्राप्यत इति पदम् - स्वरूपादिपरिज्ञानार्थं सर्वैरवश्यमुपादेयमित्यर्थः ।।६०।।

---

(सा.वि.) नारायणायेत्युपरिष्ठात्'' इत्यधीतं पदं क्रमविशिष्टं पदं मन्त्रमिति यावत् - सार्थम्, अर्थसहितं यथा तथा - अवयताम्, अनुसन्दधताम्। अवपूर्वस्य इण् धातोर्लटश्शत्रादेशः - इणो यणिति यकारे रूपम् - अलसमनसां, शरणागतिनिष्ठानाम्। एतन्मन्त्रार्थानुसन्धानपूर्वकं भरसमर्पणकारिणामित्यर्थः। अस्माकं आत्मरक्षाभर मङ्गीकुर्वन् देवः किङ्करैश्वर्य विघ्नान्, सर्वदेश - सर्वकाल - सर्वावस्थोचित सर्वविधकैङ्कर्य प्रतिबन्धकीभूतानाद्यविद्याकर्मवासनारुचिप्रकृतिसंबन्धरूपान्। क्षिप्रं, शीघ्रंम् - एतद्देहावसान एव - क्षिपति, निवर्तयति - वर्तमानसामीप्ये वर्तमानवदिति लट्मङ्गलादीनि मङ्गलमध्यानीति ग्रन्थमध्ये मङ्गलमपि कृतमिति मन्तव्यम् ।।५९।।

---

(सा.सं.) ''एतद्वै नारायणस्याष्टाक्षरं पदम्'' इति श्रुतेः - सार्थम्, अर्थबोधेन सह - अवयताम्, अनुसन्दधताम् - प्रकारान्तरेण प्राप्तो मन्त्राद्यर्थोऽनर्थकरश्चेत्याचार्यदत्तमित्युक्तम् - भक्त्यादौ शक्त्यभाव इत्यादिनोक्ततत्तदधिकार रूपाकिञ्चन्यवतामित्यलसमनसामित्यर्थः - देवः, परमेष्ठित्वादिरूप स्वच्छन्द प्रपञ्च कत्यलीलः। निखिलान्, अविद्यादीन् क्षिपतु ।।५९।।

**मूलं।** कल्याणमावहतु कार्तयुगं स्वधर्मं प्रख्यापयन् प्रणिहितेषु नरादिकेषु। आद्यं कमप्यधिगतो रथमष्टचक्रम्-

(सा.दी.) अनन्तरं मन्त्रप्रदனுமானவவன் தன்னையே बदरिकाश्रम श्रीमन्नारायणरूपेण अनुसन्धिக்கருளுகிறார் - कल्याणमावहतु என்று - अष्टचक्रमाद्यं कमपि रथमधिगतः, अधिरूढः - प्रणिहितेषु, सावधानेषु - नरादिकेषु, "तत्राद्यौ लोकनाथौ तौ कृशौ धमनि सन्ततौ। नरनारायणौ पूर्वं तपस्तेपतुरुत्तमम्।। धर्मयानसमारूढौ पर्वते गन्धमादने" नरன், नारायणानुजனானவன் - आदिशब्दத்தால் नारदादिகள் - இவர்முதலான अन्तेवासिகள் विषयத்தில். कार्तयुगं स्वधर्मं, निवृत्तिधर्मங்களையென்ற படி - **प्रख्यापयन्, स्पष्ट**மாக उपदेशिக்குமவனாய். - ...

(सा.स्वा.) இனி मन्त्रप्रवर्तकतया गुरुவான ऋषिविषयமாக ஒரு मङ्गलंசெய்தருளுகிறார். कल्याणमिति। अष्टचक्रमाद्यम्। "अष्टचक्रं हि तद्यानं भूतयुक्तं मनोजवम्" इति श्रीनारायणीयोक्त प्रकारेण - कमप्याद्यं रथमधिगतः, अधिरूढः। இங்கு मन्त्रं रथமாயும், अष्टाक्षरங்கள் चक्रமாயும், शरण्यன் प्रतिपाद्यार्थतयाधिगतனென்றும், வ्यञ्जितமாகிறது - प्रणिहितेषु, सावधानेषु - मन्त्रग्रहणोपयुक्तशिष्यलक्षणपूर्णेषु - नरादिकेषु, नरशब्देन नारायणानुजः नरसंज्ञोऽभिधीयते - आदिशब्देन नारदादयः। तेषु कार्तयुगम्, - ...

(सा.प्र .) एवं मङ्गलादीनि, मङ्गलमध्यानि, मङ्गलान्तानीत्युक्तरीत्या प्रपन्नार्ति हन्तुर्भगवतो नाम सङ्कीर्तनरूपं मङ्गलमार्थं कृत्वा "मन्त्रे तद्देवतायां च तथा मन्त्रप्रदे गुरौ। त्रिषु भक्तिस्सदा कार्या सा हि प्रथमसाधनम्।।" इत्युक्तेः प्रथमं मन्त्रं दृष्ट्वा सर्वेषामुपदेष्टुर्नारायणान्मन्त्रदैवतात्तदर्थ विशदावभासमाशास्ते - कल्याणमित्यादिना - कार्तयुगं स्वधर्मं, कृतयुगे प्राचुर्येणानुष्ठीयमानं निवृत्ति धर्ममित्यर्थः - "प्रवृत्तिलक्षणं-...

(सा.वि.) एवमधिकारार्थमनुसन्धाय "मन्त्रे दद्देवतायां च तथा मन्त्रप्रदे गुरौ। त्रिषु भक्तिस्सदा कार्या सा हि प्रथमसाधनम्" इत्युक्तेर्मन्त्रदेवताभूतान्मन्त्रोपदेष्टुश्च बदरिकाश्रमवासि श्रीमन्नारायणान्मङ्गलं प्रार्थयते कल्याणमिति - प्रणिहितेषु, श्रोतुं सावधानेषु - नरादिकेषु, स्वानुजत्वेनावतीर्णे नराख्ये पुरुषे नारदादिषु च कार्तयुगं, कृतयुगानुष्ठितम् - ...

(सा.सं.) अथैतन्मन्त्र प्रतिपाद्यत्वेन सहैतन्मन्त्र ऋषित्वमुपगतं स्वाभीष्टाशासन रूपमङ्गलमुखेनानुसन्धत्ते। कल्याणमिति - व्यापकत्रयेऽप्याद्यं मन्त्रस्मृतिषु मन्त्रविद्भिः प्रत्यक्षरम् - "नायकत्वं च सर्वेषाम्" इत्यादिनोक्त विधया अर्थतश्शब्दतश्च अनुचिन्तनतः अष्टचक्रवद्विपरिवर्तमानाक्षराष्टकसमुदायात्मकं स्वान्तस्थ सर्वतत्वकतया अपूर्वं रथमुपासकानुग्रहाय प्रतिपाद्यत्वेन समधिरूढ इत्यभिप्रेत्याष्टचक्रं कमपि रथमधिरूढ इत्युक्तम्-सतां बन्धुः, प्रपन्नानां माता पितेत्याद्युक्तविधया सर्वविधबन्धुः - तस्यैव विशेषणं प्रणिहितेष्वित्यादिना। प्रणिहितेषु, बाह्याऽभ्यन्तरकरणोपरतिविशेषवत्सु नरप्रभृतिशिष्येषु। आदिशब्दान्नारदादिसङ्ग्रहः - कार्तयुगं, कृतयुगानुगुणम् - स्वधर्मं, निवृत्तिधर्मोत्तमतया स्वाभिमततम -

मूलं। बन्धुस्सतां बदरिकाश्रम तापसो नः ॥६०॥
यदन्तःस्थमशेषेण वाङ्मयं वेद वैदिकम्।

(सा.दी.) सतां, स्वस्मिन्न्यस्तभरர்க்கு - बन्धुः, सर्वविधबन्धुவான - बदरिकाश्रम तापसः, मूलमन्त्रोपदेष्टाவான श्रीमन्नारायणன் - नः, நமக்கு. कल्याणं, निवृत्तिधर्मनिष्ठाமென்றபடி - आवहतु, உண்டாக்கக் கடவனென்கை - अष्टचक्रமென்றத்தால் ''अष्टचक्रंहि तद्यानं भूतयुक्तं मनोजवम्'' என்கிற नारायणीयवचनं स्मारितम् ॥६०॥

अनन्तरं திரு मन्त्रத்தைத்தொழுகிறார் - यदन्तस्स्थम् என்று - वेदवैदिकं वाङ्मयम्, वेदरूप மாயும், - ...

(सा.स्वा.) कृतयुगसंबन्धिनं - स्वधर्मं, ''निवृत्तिलक्षणं धर्मं ऋषिर्नारायणोऽब्रवीत्'' इति प्रसिद्धं निवृत्तिधर्मम् - प्रख्यापयन्, उपदेशतः स्पष्टयन् सन् - अवाप्त समस्तकामस्य कुत एवंविधोपदेशप्रवृत्तिरित्यत उक्तं सतां बन्धुरिति - सतां पित्रादिवद्धितप्रवर्तक इत्यर्थः - तथा च साधुसंरक्षणमेव प्रयोजनमिति भावः - बदरिकाश्रमतापसः नः कल्याणं, निश्श्रेयसपर्यन्तं भद्रम् - आवहतु, दिशत्वित्यर्थः ॥६०॥

இனிमन्त्रविषयமாக - ஒருமङ्गलं செய்தருளுகிறார் - यदन्तस्स्थमिति। वेदवैदिकम्।

(सा.प्र.) धर्मं प्रजापतिरथाब्रवीत्। निवृत्तिलक्षणं धर्मं ऋषिर्नारायणोऽब्रवीत्'' इत्युक्तेः प्रणिहितेषु, अवहितेष्वित्यर्थः - आद्यमित्यादि - ''बदर्याश्रममासाद्य शकटे कनका मये। अष्टचक्रं हि तद्यानं भूतयुक्तं मनोजवम्॥ तत्राद्यौ लोकनाथौ तौ कृशौ धमनि सन्ततौ। नरनारायणौ पूर्वं तपस्तेपतुरुत्तमम्॥ धर्मयान समारूढौ पर्वते गन्धमादने'' इत्यादि प्रमाणादष्टचक्रत्वादिक मिति भावः ॥६१॥

अथ मन्त्रं नमस्यति - यदन्तस्स्थमित्यादिना - ''वाची मा विश्वाभुव नान्यर्पिता। ऋचो यजूँषि -

(सा.वि.) स्वधर्मं, ''निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत्'' इत्युक्तेः - प्रख्यापयन्, प्रख्यापनावस्थलक्षणे शतृप्रत्ययः - अष्टचक्रमाद्यं कमपि रथमप्यधिगतस्सतां बन्धुर्बदरिकाश्रमतापसश्श्रीमन्नारायणः - नः, अस्माकं - कल्याणं, अर्थवैशद्यरूपं शुभम् - आवहतु, करोत्वित्यन्वयः - ''बदर्याश्रममासाद्य शकटे कनकामये। अष्टचक्रंहि तद्यानं भूतयुक्तं मनोजवम्॥ नरनारायणौ पूर्वं तपस्तेपतुरुत्तमम्'' इत्यादि नारायणीय वचनजातमिहानुसन्धेयम् ॥६०॥

अथ मन्त्रं नमस्यति - यदन्तस्स्थमिति - वेदाश्च वैदिकानि उपबृह्मणानि च वेदवैदिकम् - वाङ्मयम्,

(सा.सं.) प्रपत्ति प्रमुख पारमैकान्त्यधर्मम्। प्रख्यापयन् स्थितः - ''ख्यापकथन'' इति धातोरेव प्रकर्षकथनार्थत्वेऽपि पुनः प्र इत्युपसर्गश्शब्दतोऽर्थतश्च प्रतिपत्तिक्लेश विरहाभिप्रायः - बदरिकाश्रम माश्रित्य मन्त्र प्रभावद्रष्ट्रत्वेन अयमेव तस्य मन्त्रस्य ऋषिरिति बदरिकाश्रमतापस इत्युक्तम् - एवंभूतो अकिञ्चनानां नः - कल्याणं, विवेकादिरूपपरमपुरुषार्थ पर्यन्तम्। आवहतु, प्रददातु ॥६०॥

अथ मन्त्रविषयकया भक्त्या मन्त्रं स्तुवन्नमस्यति - यदन्तस्स्थमिति - वेदः, ऋगादि - ...

मूलं। तस्मै व्यापकमुख्याय मन्त्राय महते नमः ॥६१॥

(सा.दी.) उपबृंह्मणरूप மாயுமுள்ள शब्दराशिயானதெல்லாம். यदन्तस्स्थम्, அதாவது? அவற்றின் अर्थமெல்லாமிதிலே சுருங்கக்காண்கையால் சொன்னபடி. तस्मै व्यापकेष्वपि मन्त्रेषु मुख्याय - अत एव महते, महाप्रभावத்தையுடைய - मन्त्राय, मन्त्रब्रह्मणे नमः ॥६१॥

இனி இந்த मूलमन्त्रத்தினுடைய विशेषरहस्यार्थग्रहणं सत्संप्रदायसिद्ध सदाचार्य प्रसादத்தையொழியக்கூடாமையுமது தமக்கு सिद्धिத்தமையையும் அருளிச்செய்கிறார் - ...

(सा.स्वा.) वेदः, श्रुतिः - वैदिकं, तन्मूलस्मृत्यादिकम् - श्रुतिस्मृत्यादिरूपशब्द प्रमाणजातम् - यदन्तस्स्थं, स्वप्रतिपाद्यार्थानां तत्त्वहित पुरुषार्थानां सर्वेषां तदन्तर्गतत्वात्तदन्तस्स्थत्वोक्तिः। व्यापकमुख्याय, व्यापकमन्त्रेषु श्रेष्ठाय - महते, ब्रह्मणे - अत एव पूज्याय तस्मै मन्त्राय ''मन्तारं त्रायते यस्मान्मन्त्र इत्यभिधीयते'' इति व्युत्पत्त्या जपॄणां रक्षणसमर्थाय नम इत्यर्थः ॥६१॥

இப்படி सर्वமும் मूलमन्त्रान्तर्गतமென்று சொன்னது கூடுமோ? அப்போது मांसचक्षुस्ஸுக்களான चेतनருக்கு अत्यल्पाक्षर மான இம்मूलमन्त्रத்திலே सर्वार्थமும் दुरवगाहமானபடியாலே तद्व्याख्यानमवश्यமன்றே? शक्यமானாலும் अधिकारिகள் दुर्लभராகையாலேயது निष्प्रयोजनமாகவும் प्रसङ्गिயாதோ என்ன? ''यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः'' என்கிற படியே स्वाचार्यரான அப்புள்ளாருடைய कटाक्षविशेषத்தாலே தமக்கு सिद्धिத்த अर्थத்தை अन्यापदेशமாக प्रकाशिயா நின்றுகொண்டு अधिकारि

(सा.प्र .) सामानि तथैवाथर्वणानि च। सर्वमष्टाक्षरान्तस्स्थं यच्चान्यदपि वाङ्मयम्॥'' इत्यादि प्रमाणादिति भावः। मुख्यायेति - व्याप्यव्यापकव्याप्तीनां कण्ठोक्त्या मुख्यत्वमिति भावः ॥६२॥

(सा.वि.) शब्दजालम् - अशेषेण, कात्स्न्र्येन - यदन्तस्स्थं, यदन्तर्गतम् - ''सर्वमष्टाक्षरान्तस्स्थं यच्चान्यदपि वाङ्मयम्'' इत्युक्तेस्सकलवेद तदुपबृह्मणार्थस्य सङ्ग्रहेण प्रतिपादक मिति भावः - अत एव व्यापकमुख्याय ''महते मन्त्राय नमः'' इति संबन्धः ॥६१॥

नन्वेवं मूलमन्त्रस्य सर्वार्थसङ्ग्राहकत्वे तदर्थस्य दुरवगाहत्वात्तदर्थानुभवो - ...

(सा.सं.) चतुष्टयम् - वैदिकं स्मृतीतिहास पुराणादिकम् - अशेषेण, निरवशेषम् - यदन्तस्स्थं, यदन्तर्लीनम् - ''अकारो वै सर्वावाक्'' इति श्रुत्या ''प्रणवाद्या मुने वेदाः प्रणवे पर्यवस्थिताः'', इत्यादि स्मृत्या च मन्वक्षरैकदेशाकारलीनत्वाभिप्रायमित्थमभिधानम्। व्याप्यव्यापकसर्वतत्त्व कण्ठोक्तिमत्वाद्व्यापक मुख्यत्वम् - अत एव महते, महाप्रभावाय - मन्त्राय, ''मन्तारं त्रायते'' इति व्युत्पत्ति पौष्कल्यबले मन्त्रब्रह्मणे। नमः, प्रह्वीभवामः ॥६१॥

अथ व्याख्येय मन्त्रस्य दुरवगाहार्थता प्रयुक्तव्याख्यानाधिकाराभावशङ्कां बोधनीयदौर्लभ्येन - ...

**मूलं।** इह मूलमन्त्र संवृतमर्थमशेषेणकश्चिदनुभवति।
स्फटिकतलनिहित निधिमिव देशिक दत्तेन चक्षुषा जन्तुः ।।

(सा.दी.) इहेत्यादि - कश्चित्, ஆயிரத்திலொருவனென்கை - जन्तुः, இத்தால் இவன் बुद्धिயைக் கொண்டு कार्यமிதில்லை என்று தோற்றுகிறது - देशिकदत्तेन चक्षुषा, सदाचार्योपदेशसिद्ध ज्ञानத்தாலே. इह, जगति स्फटिकतल निहित निधिमिव, स्फटिकतलमतिस्वच्छமாகையால் तदन्तर्विहितமான निधिस्पष्टமாகக் காணப்படும் கணக்கிலே - मूलमन्त्रसंवृतमर्थं संवृतமென்கையால் निगूढत्वं सूचितम्। रहस्यमर्थमपिஎன்றபடி. अशेषेणानुभवति, सर्वத்தையும் साक्षात्करिக்கும் - அடியேனே இதுக்கு दृष्टान्तமென்று கருத்து. ।।६३।।

(सा.स्वा.) दौर्लभ्यशङ्कैயையும் परिहरिக்கிறார் - इहेति-कश्चिज्जन्तुः - देशिक दत्तेन चक्षुषा, देशिकाधीन दिव्यज्ञानेन - स्फटिक तलनिहित निधिमिव स्थितं मूलमन्त्रसंवृतमर्थं, तत्त्वहित पुरुषार्थरूपम् - अयोग्यता पराहतமன்றிக்கே स्फटिकवत्स्वान्तस्स्थरहस्यार्थ प्रकाशनयोग्य मूलमन्त्रान्तर्गत तत्वहित पुरुषार्थத்தை என்றபடி - अशेषेणानुभवति, कृत्स्नमनुभवति என்கை - தாமும் தம்முடைய திருவடிகளில் भक्तिमान् களுமிதுக்கு उदाहरण மென்று கருத்து ।।६२।।

இப்படிसर्वமும் अष्टाक्षरान्तर्गतமாகில் त्रिवर्गोपयुक्तार्थங்களையும் मन्त्रस्थ पदங்களில் व्युत्पादनंபண்ணி वाक्यार्थवर्णनं प्रसङ्गिயாதோ? என்ன அந்த अर्थங்கள் अर्थानुशासन भागத்தில் शिक्षितங்களாகாமையால் पूर्वं शिक्षितार्थங்களுக்கே पदवाक्ययोजनाभागத்தில் वर्णनं सङ्गतமென்னில் அங்கேதான் मन्त्रान्तर्गतत्रिवर्गोपयुक्तार्थங்களை शिक्षिயாததுகூடுமோ? ...

(सा.प्र.) नन्वष्टाक्षरस्य सर्ववेदसङ्ग्रहत्वेऽति गम्भीरतया दुरवबोधार्थत्वमेव स्यादित्यत्र ''आचार्यवान् पुरुषो वेद'' इत्युक्तेर्गुरु प्रसादात्कृत्स्नार्थ प्रतीतिर्भवेदेवेत्याह - इह मूलेत्यादिना ।।६३।।

(सा.वि.) दुर्घट इत्यत्राचार्य प्रसादात्कस्यचिद्भाग्यशालिनस्संभवतीत्याह - इह मूलमन्त्रेति - इह, पापभूयिष्टे कलावपि - कश्चिज्जन्तुः, चेतनः। - ''प्राणी तु चेतनो जन्मी जन्तुर्जन्यशरीरिणः'' इति निघण्टुः - कश्चिदिति ''स महात्मा सुदुर्लभः'' इति दौर्लभ्यं द्योत्यते - भाग्यवान् मूलमन्त्रेण संवृतम्, गोपितम् - रहस्यभूतं गुप्तभाषणेन रक्षितमिति च गम्यते - मन्त्रगुप्त भाषण इति धातुः - अर्थम्, अभिधेयं धनं च - देशिकदत्तेन चक्षुषा, सत्संप्रदायाभिज्ञाचार्योपदेशेन निधिदेशाभिज्ञोपदेशेन च - स्फटिक तल निहितनिधिमिव - अविशेषेण, सामस्त्येनानुभवति स्फटिक तलेति दृष्टान्तेन अतिस्पष्टार्थत्वं गम्यते - अत एव तदर्थ विवरणमावश्यकमिति भावः ।।६२।।

(सा.सं.) स्वव्याख्यान नैष्फल्यशङ्कां च व्युदस्यति - कलिनिमित्तक दोष दूषितजगदनुप्रविष्ट पुरुषवर्ग इत्यर्थः - कश्चिच्छरीरी, सदाचार्य प्रसाद लब्ध ज्ञान विशेषेण मूलमन्त्र निगूढं तत्त्वहित पुरुषार्थ रूपमर्थजातम् स्फटिक शिलाधस्स्थापित धन सञ्चयमिवयावदपेक्षितं विशदमवगच्छति - अत्र स्फटिकतल निहितनिधिमिवेत्युक्तिः - अवगतेः कालविलम्बमविशदतां च वारयन्नवगति विषयार्थानामनन्या क्रान्तत्वधीमुखेन स्वानुरागविशेष विषयान् द्योतयति।

**मूलं।** सत्त्वस्थர்க்கு अनुसन्धेयங்களான सारतमार्थங்களையும், அவற்றினுடைய स्थिरीकरण प्रकारங்களையும் प्रतिपादित्தோம். இவற்றையெல்லாம் प्रकाशिப்பிக்கிற रहस्यत्रयத்தில் पदवाक्ययोजनै களிருக்கும்படி சொல்லுகிறோம் - அவற்றில் முற்படத் திரு मन्त्रं परशेषतैकरसस्वरूपादिகளைத்தெளிவித்து அம்முகத்தாலே समस्तप्रतिबन्धकनिवृत्ति पूर्वकपरम पुरुषार्थप्राप्तियिலே रुचियையும், त्वरैயையும் விளைப்பித்து - ...

---

(सा.दी.) இனி सङ्गतिप्रदर्शनार्थமாகக் கீழ்ச்சொன்ன अर्थங்களை अनुभाषित्தருளுகிறார் - सत्त्वस्थர்க்கென்றுதுடங்கி. सत्त्वस्थர், सात्त्विकர். सारतमार्थங்களையுமென்று अर्थानुशासन भागानुवादम् - அவற்றினுடைய इत्यादियால் स्थिरीकरणभागानुवादम् - वक्ष्यमाणமான अर्थத்தைக்காட்டியருளுகிறார் - இவற்றையெல்லாம் इत्यादियால் - पदयोजनै वाक्य योजनैகளென்கை - அதில் முந்த रहस्यत्रयத்தின் अनुसन्धानक्रमத்துக்கு नियामकं காட்டுகிறார் - அவற்றிலு முற்படவென்று துடங்கி மூன்று वाक्यத்தால் - परशेषतैकरसமாவது? स्वस्वरूपम् - आदिशब्दத்தால் परस्वरूपोपायस्वरूपादि गृहीतम् - ...

---

(सा.स्वा.) என்ன விந்த शङ्कैயைப் परिहरியா நின்றுகொண்டு अवसरलक्षण सङ्गतिप्रदर्शनार्थं वृत्तानुवादपुरस्सरं पूर्वोक्त शङ्कापरिहारार्थं पदवाक्ययोजना प्रतिज्ञैயை செய்தருளுகிறார் - सत्त्वस्थர்க்கு इत्यादिना - त्रिवर्गोपयुक्तार्थங்கள் सत्त्वस्थர்க்கு अनुपयुक्तங்களாகையாலே तन्निरूपण மிங்கேயில் லையென்று கருத்து. सारतमेति। विभूति गुणादिகள் अनुसन्धेयங்களில் बहुप्रकारங்களானாலும் यावन्निरूपणं दुश्शकமாகையாலே सारतमங்களை निरूपित्தோமென்று கருத்து - ஆனாலும் रहस्यत्रयத்துக்கு पदवाक्ययोजनैபண்ணக்கூடுமோ? अन्यतमத்துக்கு पदवाक्ययोजनैபண்ணு கிறதுபோராதோ? போராதாகிலும் क्रमத்துக்குத்தான் नियामकமுண்டோ? என்னவருளிச் செய்கிறார் - அவற்றில் इत्यादिना - अधिकार संपादकत्वानुष्ठापकत्वविधायकत्वभेदं சொன்னது கூடுமோ?...

---

(सा.प्र.) अथ वृत्तकीर्तन पुरस्सरं वक्ष्यमाणप्रतिज्ञाव्याजेन प्रघट्टसङ्गतिमाह - सत्त्वस्थர்க்கு इत्यादिना - रहस्यत्रयस्यापि प्रत्येकं स्वरूपोपायपुरुषार्थ तदुपयुक्त सकलार्थ प्रतिपादकत्वेऽप्येकैकस्यैकैक प्राधान्यं तत्तदसाधारणोपकारं च दर्शयन् व्याख्यानव्याख्येयभावात् पौर्वापर्यमप्याह - அவற்றில் முற்பட इत्यादिना - रहस्यत्रयस्य पूर्वा - ...

---

(सा.वि.) वृत्तकथनपूर्वकं वर्तिष्यमाणं प्रतिजानीते। सत्त्वस्थர்க்கு इति - प्रकाशिப்பிக்கிற, प्रकाशके - पदवाक्ययोजनैகள் इति - पदयोजना, अवान्तरवाक्यार्थः - वाक्ययोजना, महावाक्यार्थः - சொல்லுகிறோம், वक्ष्यामः - त्रयाणां मन्त्राणां प्रयोजनान्याह - அவற்றில் इति - स्वरूपादीत्यादि शब्देन परस्वरूपोपाय स्वरूपादिसङ्गृहीतम्- தெளிவித்து, प्रकाश्य - விளைப்பித்து, उत्पाद्य - स्वस्वरूप पुरुषार्थ स्वरूपविरोधिस्वरूपादि ज्ञानेन पुरुषार्थे रुचिः त्वरा च जायत इति भावः - ...

---

(सा.सं.) सत्त्वस्थர்க்கு इत्यादिना சொல்லுகிறோம் इत्यन्तेन वृत्तेन वर्तिष्यमाणस्यावसरलक्षणासङ्गतिरुक्ता - அவற்றில் इत्यादिना भोग्यங்கள் इत्यन्तेन रहस्यत्रयस्याप्यवश्यापेक्षितत्वं स्वव्याख्यान क्रमानुगुणव्याख्येय क्रमनियामकं चोपपादितम्। अत्रादिशब्देन स्वभावादि सङ्ग्रहः- ...

**मूलं।** उपायाधिकार पूर्तिயையுண்டாக்கும் - இப்படி அधिकारியானவனுடைய फलापेक्षापूर्वकोपाय विशेषानुष्ठानप्रकारத்தை द्वयं विशदமாக प्रकाशिப்பிக்கும் - இவ்உपायविशेषத்தை विधिக்கிறது चरमश्लोकம் - இவை மூன்றிலும் தனித்தனியேயெல்லா अर्थங்களையும் शाब्दமாகவும், आर्थமாகவும் காணலாமாகிலும் ஓரொன்றிலே ஓரொன்று நோக்காயிருக்கும் - ...

---

(सा.दी.) रहस्यत्रयकृत्यங்களை இப்படி विभजித்துச் சொல்லுகைக்கு निदानமருளிச்செய்கிறார் - இவை மூன்றிலுமென்று துடங்கி - எல்லா अर्थமாவது? स्वरूपादिகளும் फलापेक्षापूर्वकोपायविशेषानुष्ठान प्रकारமும் उपायविधानமும் நோக்காவது? प्राधान्येन प्रतिपादनम् - இந்த रहस्यत्रयानुसन्धानक्रमத்தில் अन्योन्य - ...

---

(सा.स्वा.) त्रितयமும் रहस्यत्रयத்துக்கு प्रत्येकं वर्णयितुं शक्यமன்றோ? என்ன வருளிச்செய்கிறார் - இவை மூன்றிலும் इति। ஓரொன்றிலே इति - चरम श्लोकविधायक प्रत्ययस्य स्पष्टत्वात्, द्वये प्रपद्य इति कर्तुरुत्तमपुरुषेणानुष्ठान प्रतिपादनात्, मूलमन्त्रे तदुभयाभावाच्च उक्तभेदमुपपन्नமென்று கருத்து - இந்த पक्षத்தில் चरमश्लोकத்துக்கு द्वयात्पूर्वं निरूपणं प्रसङ्गिயாதோ?...

---

(सा.वि.) उपायाधिकार पूर्तिயையுண்டாக்கும், अतिसुकरोपाय स्वरूपादि ज्ञानेन पुरुषार्थ रुचिजनित विलम्बासहत्व ज्ञान संपादनेन च उपायान्तर नैराश्यातिशयरूप प्रपत्त्यधिकारं कुर्यादित्यर्थः - ननु मन्त्र त्रयस्यापि तत्त्वहितपुरुषार्थ प्रकाशकत्वान्मूलमन्त्रस्याधिकार संपादकत्वं द्वयस्य करणमन्त्रत्वमित्येवं व्यवस्था कथमित्याशङ्क्य सर्वार्थप्रतिपादनस्य सर्वसाधारण्येऽप्येकैकस्मिन् अर्थे एकैकस्य तात्पर्यमित्याह - இவை மூன்றிலும் इति - ஓரொன்றிலே, अधिकार संपादनादौ एकैकस्मिन्, एकैकस्य मूलमन्त्रादेः - நோக்கு, तात्पर्यम्। ''बर्हिर्देव सदनन्दामि'' इतिवदनुष्ठेयार्थ प्रकाशकत्वेन करणमन्त्रत्वाद्द्वयस्य तत्साध्यानुष्ठानस्य स्वरूपादि ज्ञानरूपाधिकार सापेक्षत्वात्तत्प्रतिपादक मूलमन्त्रस्य प्रथमं व्याख्येयत्वं लब्धाधिकारस्यानुष्ठान प्रवृत्तेः तत्प्रकाशकस्य द्वयस्य पश्चात् व्याख्येयत्वं तदपेक्षितस्पष्टविधि प्रतिपादकत्वाच्चरमश्लोकस्यान्ते व्याख्ये यत्वमिति क्रमगमनिका - उत्तर मन्त्राणां पूर्वविशदीकरण - ...

---

(सा.सं.) अधिकाररूपाकिञ्चन्यस्य पूर्तिर्नाम? स्वरूपादि याथात्म्यज्ञान जनितपौष्कल्यरूप मुपायप्रवृत्त्युन्मुखत्वम् - नन्वेकैकेनैवोपायानुष्ठानोपयोगि यावदर्थावधारणपूर्वकमुपायानुष्ठानसम्भवे किं तदितराभ्यामित्यत्राह - இவையெல்லாம் इति - ஓரொன்றிலே इति - स्वपरस्वरूपादिप्रकाश एव दृष्टिर्मन्त्र राजस्य; विशेषतश्शरण्योपायाधिकारिणो निर्देश पूर्वकमनुष्ठेयार्थ प्रकाशन एव दृष्टिर्मन्त्ररत्नस्य - उपायविधान एव दृष्टिश्चरमश्लोकस्येत्यर्थः - एवं च ''अनेनैवतु मन्त्रेण - ओमित्यनेन द्वयरूपेण'' इत्यादि बलाद्द्वयेनैवानुष्ठान सामञ्जस्याद्विधिप्रत्ययवत एव विधायकत्वात्स्वरूपादि प्रकाशने मन्त्रराजस्यैव समर्थत्वाच्च रहस्यत्रयमप्यावश्यकमिति नोक्तशङ्कावकाश इति भावः - अस्तुरहस्यत्रयमप्यादरणीयम् - तथापीत्थं क्रमविशेषे किं नियामकमित्यत्र व्याख्येयव्याख्यान भावेन परस्परसापेक्षत्वमेव निया - ...

**मूलं।** திரு मन्त्रத்தில் प्रथमपदத்தில் प्रथमाक्षरத்திலே संक्षिप्तமான शरण्यपर(त)त्त्वத்தையும், இதில் मध्यमतृतीयपदங்களிலே प्रतिपन्नமான उपायोपेयங்களையும் அடைவே विशदமாக்குகிறது द्वयं - இதில் "प्रपद्ये" என்கிற பதத்தில் உத்தமனாலே विवक्षितமான अधिकारिविशेषத்தையும் अर्थ सिद्धமான उपायनैरपेक्ष्यத்தையும், उपेयத்தில் नमश्शब्दसंक्षिप्तமான विरोधिनिवृत्त्यंशத்தையும் வெளியிடுகிறது चरमश्लोकம் - இவை மூன்றும் நமக்கு ज्ञानानुष्ठान फलनिदानங்களாய்க் கொண்டு धारकपोषक भोग्यங்கள் - ...

---

(सा.दी.) विवरणीयविवरणभावமும் नियामकமென்றருளிச்செய்கிறார் - திரு मन्त्रத்தில் प्रथमेत्यादिवाक्यद्वयத்தால் - प्रथमाक्षरத்திலே, अकारத்திலென்றபடி - शरण्य परतत्त्वத்தையும், शरण्यமான परतत्त्वத்தையுமென்கை - परत्त्वத்தையுமென்று பாठமானபோது शरण्यனுடைய जगत्कारणत्वाद्युत्कर्षத்தையுமென்றபடி - अधिकारिविशेषமாவது? अनन्यशरणனான अकिञ्चनன். उपायनैरपेक्ष्यமாவது? இவ் उपायத்தினுடைய आनुकूल्यसङ्कल्पादि व्यतिरिक्तनैरपेक्ष्यமென்கை - இந்த रहस्यत्रयम् उपकारविशेषத்தால் मुमुक्षुக்களான सर्वர்க்கும் उपजीव्यமென்கிறார் - இவைமூன்றுமென்று - मुमुक्षुக்களுக்கு என்று शेषம் - திரு मन्त्रं स्वस्वरूपादिज्ञाननिदान மாய் पोषक மாயிருக்கும் - विधिத்தாலொழிய उपायम् अनुष्ठेयமாகாதிறே - द्वयं परमपुरुषार्थத்துக்கு उपायानुष्ठानरूपतया निदानமாய் भोग्यமாயிருக்கும். அதாவது? द्वितीयोच्चारणादिरूपेण भोग्यமாமென்கை. भोग्यतया सदानुसन्धेयமாயிருக்குமென்று கருத்து...

---

(सा.स्वा.) विधिपरामर्शानन्तर மன்றோ अनुष्ठानम्? என்னவருளிச்செய்கிறார். திரு मन्त्रத்தால் इत्यादिना - शरण्यपरतत्त्वेति - शरण्यरूप परतत्त्वத்தையென்றபடி - परत्त्वेति पाठे शरण्यனுடைய शेषित्वरक्षकत्वाद्युत्कर्षத்தை என்றபடி. இப்படி अधिकारसंपादकत्वादि भेदेन त्रितयமும் आवश्यकமென்று சொன்னதுகூடுமோ? அப்போது धारक पोषक भोग्यता भेदத்தாலே पूर्वர்கள் त्रितयமும் आवश्यकम् என்று சொல்லுகையாலே संप्रदायं विरोधिயாதோ? என்ன அந்த उक्तिக்கும் இதுவே तात्पर्य மென்றருளிச்செய்கிறார். இவை மூன்றும் इति - मुमुक्षुக்களுக்கு इति शेषम् - நமக்கு என்கிற पाठத்தில் अकिञ्चनரான நமக்கென்றபடி. स्वरूप ज्ञाननिदानமாகையாலே திரு मन्त्रं धारकम् - विधानेनानुष्ठाननिदानமாகையாலே पोषकं चरमश्लोकம் - प्रथमोच्चारणमनुष्ठानरूपतया फलनिदानமாகையாலும் द्वितीयाद्युच्चारणं फलरूपமாகையாலும் भोग्यं द्वयமென்று सिद्धिக்கையாலே

---

(सा.प्र.) चार्यैर्धारकत्व, पोषकत्व, भोग्यत्वान्युक्तानि तत्कथमित्यत्राह - இவை மூன்றும் इत्यादिना -

---

(सा.वि.) रूपत्वादपि क्रमनियम इत्यभिप्रेत्याह। திரு मन्त्रத்தில் इत्यादिना - एते मूलमन्त्र चरमश्लोकद्वयमन्त्राः क्रमशः, स्वरूपज्ञानोपायानुष्ठानोपयुक्त विधिमूलकज्ञान विशेषोपचयकैङ्कर्यानुभव रूप भोगहेतुतया धारकपोषकभोग्यभूता इत्याह - இவை மூன்றும் इति - ...

---

(सा.सं.) मकमित्याह। திரு मन्त्रத்தில் इत्यादिना। धातु प्रत्ययाभ्यां प्रथमाक्षरे रक्षकत्व शेषित्वोक्तेः परत्वத்தையும் इत्युक्तम्। रहस्यत्रयस्यास्यादर्तव्यतायां नियामकान्तरमाह - இவை மூன்றும் इति - நமக்கு, अकिञ्चन मुमुक्षूणाम् धारकत्वादेरव्यवस्थितत्वाशङ्कां व्यवस्थापकमुखेन - ...

मूलं। "व्यक्तं हि भगवान् देवस्साक्षान्नारायणस्स्वयम्।
अष्टाक्षर स्वरूपेण मुखेषु परिवर्तते।।"

என்கிறபடியே देशिकजिह्वैயிலேயிருந்து शिष्यहृदयगुहान्धकारத்தைக் கழித்து, परशेषतैकरसமான परिशुद्धस्वरूपத்தை வெளியிட்டு सत्तालाभத்தைப் பண்ணுகையாலே திருमन्त्रं धारकम् - चरमोपायத்திலே प्रवर्तिக்கும்படியான ज्ञान विशेषोपचयहेतुவாகையாலே श्रोतव्यशेष மில்லாதபடி उपायोपदेश पर्यवसानமான चरमश्लोकं पोषकम्। सकृदुच्चारणத்தாலே परमपुरुषार्थ हेतुவாய்க்கொண்டு सदानुसन्धानத்தாலே कृतार्थனாக்குகையாலே द्वयं भोग्यम्। ...

---

(सा.दी.) திருमन्त्रத்தினுடைய धारकत्वத்தை उपपादिக்கிறார் - व्यक्तं हीत्यादिயால் - இங்கு व्यक्तமென்றது नूनமென்றதாய் उत्प्रेक्षाव्यञ्जकமாயிருக்கிறது. परिशुद्धस्वरूपத்தை, निष्कृष्टात्मस्वरूपத்தை என்கை. सत्ता लाभமாவது? शेषत्व ज्ञानलाभात्पूर्वमसत्कल्पतया शेषत्व ज्ञानेन உளனாகை - இனிचरमश्लोकத்தினுடைய पोषकत्वத்தை उपपादिக்கிறார் - चरमोपायத்தில் इत्यादिயால் - चरमोपायமாவது, प्रपत्ति। ज्ञानविशेषமாவது सिद्धोपाय स्वीकारविषयज्ञानम्। उपायोपदेशपर्यवसानமான வென்றது कर्मयोगाद्युपायங்களினுடைய उपदेशपरम्परापर्यव सानरूपமானவென்றபடி - प्रपत्त्युपायोपदेशात्परमुपायान्तरोपदेशமில்லையிறே - पोषकं, स्वरूपपोषणहेतु। अन्नத்தால் दृढமான शरीरத்துக்கு दधिक्षीरादिपोषकமாகிறாப்போலே - இனி द्वयத்தின் भोग्यतैயை समर्थिக்கிறார் - सकृदुच्चारणத்தாலே என்று - सदानुसन्धानத்தாலே, பின்பு, भोगरूप सदानुसन्धानத்தாலே என்கை - कृतार्थன், कृतप्रयोजनன் - भोग्यமாவது भोगहेतु - ...

---

(सा.स्वा.) पूर्वोक्तभेदத்தைக் காட்டில் नातीव भेदமென்று கருத்து - இப்படி ज्ञानानुष्ठानफलनिदानताभेदத்தாலே क्रमेण धारक पोषक भोग्य भावं சொல்லுகிறது கூடுமோ? ज्ञान निदानத்துக்குப்पोषकतैயும், भोग्यतैயும், अनुष्ठाननिदानத்துக்கு धारकतैயும், फलनिदानத்துக்கு पोषकतैயும் சொல்லலாகாதோ? என்ன नियामकமருளிச்செய்கிறார் - व्यक्तं हीत्यादिना। व्यक्तं, नूनமென்றபடி उत्प्रेक्षा व्यञ्जकம் இது - शेषत्वज्ञानात्पूर्वं "असन्नेव स भवति" என்கிறபடியே स्वरूपलाभ மில்லாமையாலே सत्ताप्रयोजकतानियामकेन धारकत्वं मूलमन्त्रस्योपपन्नமென்று கருத்து. उपचयेति। अन्नादिना धृतशरीरस्य घृतक्षीरादिवदुपचयहेतुतया पोषकत्वं चरमश्लोकस्योपपन्नமென்று கருத்து. घृतक्षीरादि पुष्पस्य शरीरस्य स्रक्चन्दनादिवद्भोगहेतुतया - ...

---

(सा.वि.) तदेव विशदयति - व्यक्तं हीत्यादिना - கழித்து, निरस्य - श्रोतव्यशेषமில்லாதபடி, इतः परं मोक्षार्थसुलभोपायस्य श्रवणापेक्षा यथा न स्यात्तथा - भोग्यं, भोगहेतुः - सदानुसन्धानमेव भोग इति भावः-

---

(सा.सं.) परिहरति - व्यक्तं हीत्यादिना - ध्रुवं, नूनमित्यादिवदिहव्यक्तमित्युत्प्रेक्षाव्यञ्जकः - शेषत्व ज्ञानविरहे "असन्नेव" इत्युक्तविधया असतस्तद् ज्ञानोत्पादनेनायम्मूलमन्त्रः शरीरस्यान्नवदात्मनस्सत्ता लाभ करस्सन् धारकः - शरीरस्योपचय हेतु दधिघृतादिवदात्मनो ज्ञानोपचयविशेष हेतुत्वाच्चरम श्लोकः पोषकः - "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" इत्युक्त्या पुरुषार्थयोग्योऽहमिति हर्षविशेषकरत्वात्ताम्बूलादि-वद्द्वयस्य भोग्यत्वमिति भावः। - ...

**मूलं।** இவற்றில் திருமன்த்ரத்தினுடைய ऋषिच्छन्दो देवताबीजशक्तिवर्णविनियोगस्थानन्यासादिகள் அவ்வோ கல்பसंप्रदायங்களுக்கீடாக கண்டுகொள்வது, இத்திருமன்த்ரம் आथर्वणकठाद्युपनिषत्துக்களிலும், - ...

(सा.दी.) अन्नத்தால் धृतமாயும், दधिक्षीरादिயால் पुष्टமான शरीरத்துக்கு स्रक्चन्दनादिகள் भोग्यமாமாப்போலென்று கருத்து. இவற்றில், रहस्यत्रयத்தில் வைத்துக்கொண்டென்றபடி - ऋषिः, मन्त्रद्रष्टाவானவர், श्रीबदरीकाश्रमवासी श्रीमन्नारायणன் - छन्दः, गायत्री। देवता, परमात्मा स एव नारायणः - बीजम्, अम् என்று, शक्तिः, आय என்னுமது. वर्णः, शुक्लम्। विनियोगம், मोक्षத்திலும் भोगத்திலும் - स्थानं, क्षेत्रम्। அதாவது? वैकुण्ठम् - न्यासम्, अङ्गन्यासादि - आदिशब्दத்தால் मुद्रादि गृहीतम् - இப்படி संप्रदायान्तरமும் கண்டுகொள்வது - कल्पங்களாவன? नारायणात्मक हैरण्यगर्भादिகள் - இனி மற்ற मन्त्रங்களிற் காட்டில் இம் मन्त्रத்துக்கு ஏற்றமெதென்னவருளிச் செய்கிறார் - இத்திரு मन्त्रमित्यादिயால் - कठादीत्यादि - ...

(सा.स्वा.) द्वयस्य भोग्यत्वमुपपन्नமென்றும் கருத்து - இப்படி शिष्यहृदयगुहान्धकारத்தைக் கழித்து इत्यादिना திருமன்த்ரத்துக்கு उत्कर्षं சொன்னதுகூடுமோ? ''अविदित्वा ऋषिं छन्दो दैवतं योगमेव च। यो जापयेज्जपेद्वापि पापीयान् जायते तु सः।।'' என்கிறபடியே ऋष्याद्यपरिज्ञानத்தாலே मन्त्रं विपरीतफलமன்றோ? இனி कल्पங்களிலே ऋष्यादिகளை யறிந்தவனுக்கு இம்मन्त्रं कार्यकरமென்னில் कल्पங்களிலே ऋष्यादिகள் பலவகையாயிருக்கையாலே निर्णयं दुर्लभமன்றோ? என்னவருளிச்செய்கிறார் - இவற்றில் इति - இவற்றில், रहस्यत्रयसाध्यமென்றபடி - वर्णः, शुक्लादिः - स्थानं, क्षेत्रं वैकुण्ठमित्यादि सिद्धम् - आदिशब्देन मुद्रादि विवक्षितम् - शास्त्रங்களிலே वैविध्योक्ति विकल्प सूचिकैயாகையாலே यथा संप्रदायं व्यवस्थितनिर्णयं सुशकமென்று கருத்து. ஆனாலும் श्रुतिस्मृत्यादि सम्मतगायत्र्यादिகளைவிட்டு திரு मन्त्रव्याख्यानं பண்ணக்கூடுமோ? என்னவருளிச்செய்கிறார் - இத்திரு मन्त्रमिति। गायत्र्यादिகள் कर्मकाण्डத்தில் मन्त्रार्थवादादि -

(सा.प्र.) एवं मूलमन्त्रस्य प्राधान्यात्तदृष्याद्युक्तेरत्रानुपयोगात् - ''अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणस्स्वयम्। छन्दस्तु देवी गायत्री परमात्मा च देवता।। तत्रोत्तरायणस्यादिर्बिन्दुमान्विष्णुरन्ततः। बीजमष्टाक्षरस्य स्यात्तेनाष्टाक्षरता भवेत्।। षष्ठपञ्चदशाद्वर्णात्केवलव्यञ्जनीकृतात्। उत्तरो मन्त्रशेषस्तु शक्तिरित्यभिधीयते''।। इत्यादिषु तेषां द्रष्टव्यत्वं वदन्वक्ष्यमाणसर्वार्थगर्भित्वासम्भव निवारणाय मन्त्रान्तरेभ्य आधिक्यं बहुधोपपादयति - இவற்றில் इत्यादिना - अधिष्ठान देवता क्षेत्रादिर्न्यासादीत्यादि शब्दार्थः - आथर्वणकठादीति - ''ओं नमो नारायणायेति मन्त्रोपासकः। वैकुण्ठभुवनलोकं गमिष्यति - यो ह वै नारायणस्याष्टाक्षरं पदमध्येति - अनुपप्लवस्सर्वमायुरेति - विन्दते प्राजापत्यं राय - ...

(सा.वि.) वर्णः, शुक्लः, विनियोगः, मोक्षार्थ विनियोगः - स्थानं, वैकुण्ठम् - कल्पसंप्रदायेति - कल्पाः, हैरण्यगर्भादयः। திருமன்த்ர प्रभावं प्रतिपादयन् एतादृशप्रभाववत्त्वादेव पूर्वाचार्या अपि पर्यजह्लुरित्याह - இத்திரு मन्त्रம் आथर्वणकठादीति। ''नमो नारायणायेति - ...

**मूलं।** மற்றும் मन्वादि (सर्व) शास्त्रங்களிலும், नारायणात्मक हैरण्यगर्भनारदीय बोधायनीयादि बहुविधकल्पங்களிலும் प्रसिद्धवैभवமாயிருக்கும் - मन्त्रान्तरங்களிற்காட்டில் भगवन्मन्त्रங்கள் अधिकமானால் போலவும் अनन्तங்களான भगवन्मन्त्रங்கள் தன்னில் व्यापकत्रयमधिकமானாற்போலவும் "मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमम्।
पवित्रं च पवित्राणां मूलमन्त्रस्सनातनः ।।"
என்கையாலே व्यापक मन्त्रங்களெல்லாவற்றிலும் अधिकமாய் सर्व वेदங்களுக்கும் सारமாய் सर्वानिष्टनिवर्तनक्षमமாய், सर्वपुरुषार्थங்களுக்கும் साधकமாய், सर्वोपायங்களுக்கும் उपकारकமாய், सर्ववर्णங்களுக்கும் தம்தாம் अधिकारानुगुणமாக वैदिकरूपத்தாலும் ...

(सा.दी.) शब्दத்தால் सुबालोपनिषद्ग्रहणम् - मन्वादिशास्त्रங்களாவன? मन्वादिस्मृतिகள் - स्मृतिகள் இம்மந்த்ரத்தையே सर्वमन्त्राधिकत्वाद्याकारविशेषங்களாலே सर्वाचार्यர்களும் आदरित्तुப்போருவர்களென்கிறார் - मन्त्रान्तरங்களில் इत्यादिயால். मन्त्राणां परमो मन्त्रः என்கிற श्लोकத்தில் मन्त्राणां गुह्यानां पवित्राणां என்று व्यापकमन्त्रங்களை विवक्षिக்கிறதாகவுமாம். सर्वमन्त्रपरமாகவுமாம் - सर्ववेदங்களுக்கும். सारமாகையாவது? सर्ववेदसारार्थங்களை प्रतिपादिக்கை. सर्वोपायங்களுக்கும் उपकारकமாகையாவது? कर्मयोगाद्युपायங்களுக்கும் जपादि मुखத்தால் उपकरिக்கை. वैदिकरूपமாவது? - ...

(सा.स्वा.) प्रसिद्धங்களாயிருந்தாலும் तत्त्वैदंपर्य प्रवृत्तोपनिषदादिகளிலே प्रसिद्धवैभवம் இம் मन्त्र மென்றுகருத்து - बहुविधेति - गायत्र्यादिकं वैश्वामित्राद्यल्पतरकल्प प्रसिद्ध மென்றபடி - ஆனாலும் एवंभूतव्यापकत्रयप्रविष्टषडक्षरीमुखमन्त्र மிருக்கவவற்றைவிட்டு मूलमन्त्रத்துக்கே व्याख्यानகூடுமோ? पूर्वाचार्यர் இத்தை விரும்புகையாலே இதுக்கே व्याख्यानमुपपन्नமென்னில் அவர்கள்தான் व्यापकान्तरத்தைவிட்டு இத்தை விரும்புகை கூடுமோ? என்ன व्यापकान्तरापेक्षया उत्कर्ष மருளிச்செய்கிறார். मन्त्रान्तरங்களிற்காட்டில் इति मन्त्राणामिति। गुह्यानां पवित्राणां मन्त्राणां व्यापकमन्त्राणां मध्ये सनातनो मूलमन्त्रः परमो मन्त्रः - उत्तमं गुह्यंपवित्रं च என்கை - सर्ववेदेति - आद्यं तुर्यक्षरम् - अकारं चाप्युकारं चेत्यादिகளிற்படியே प्रणवं त्रयीसारமானால் तद्विशिष्टाष्टाक्षरத்துக்கு कैमुत्यसिद्धं सारत्व மென்று கருத்து - सर्वेति। जपद्वारा என்று கருத்து सर्वोपायेति - स्वरूप ज्ञान जननेन सर्व मोक्षोपायोपकार மென்று கருத்து - ...

(सा.प्र.) स्पोषं गोपत्यम्। ततोऽमृतत्त्वमश्नुते ततोमृतत्त्वमश्नुते" इत्यादिष्वित्यर्थः। "एकाक्षरं द्विपदां षड्पदां च - वाचं देवा उपजीवन्ति विश्वे - वाचं गन्धर्वाः पशवो मनुष्याः - वाचीमा विश्वा भुवनान्यर्पिता" इत्यादिरादिशब्दार्थः - மற்றும், किञ्चेत्यर्थः - तत्तच्छास्त्रगत मूलमन्त्र प्रभाव प्रतिपादक वचनान्युपाद दानोऽत एव पूर्वाचार्यैरत्यादरेणोपात्तत्त्वमप्यस्माकं तदुपादित्साजननायाह। मन्त्रान्तरங்கள் इत्यादिना...

(सा.वि.) मन्त्रोपासकः - वैकुण्ठभुवनलोकं गमिष्यति" इत्यादिष्वित्यर्थः - ...

(सा.सं.) गुह्यत्वम्, अनधिकारिष्वतिगोप्यत्वम्: - ...

मूलं। तान्त्रिकरूपத்தாலும் உபஜீவ்யமாய், व्याप्यव्यापक सर्वतत्त्व कण्ठोक्तिमत्தாய் सर्वमन्त्रनैरपेक्ष्यकरமாய், सर्वभगवन्मूर्तिகளு(க்)கு(ய)ம் साधारण மாயிருக்கையாலே सर्वाचार्यர்களும் இத்தையே விரும்பிப்போருவர்கள் - ஆழ்வார்களும் ''நின் திருவெட்டெழுத்தும் கற்று'' என்றும் ''எட்டெழுத்துமோதுவார்கள் வல்லர் வானமாளவே'' என்றும் ''எட்டெழுத்தும் வாரமாகவோதுவார்கள் வல்லர் வானமாளவே'' என்றும், - ...

(सा.दी.) प्रणवसहितமாகை - तान्त्रिकरूपமாவது? प्रणवविधुरமாகை. व्याप्य व्यापकेत्यादि - व्याप्यतत्त्वங்களாவன? चेतनाचेतनங்கள் - व्यापकतत्त्वं, परमात्मा। सर्व तत्त्वकण्ठोक्तिमत्தாயென்றது नारशब्दத்தால் चेतनाचेतनங்களுடையவும், अयनशब्दத்தால் व्यापकனான परमात्माவினுடையவும் कण्ठोक्तिயையுடைத்தாகை. மற்றைய व्यापकमन्त्रங்களில் विष्णुवासुदेव என்று व्यापक तत्त्वकण्ठोक्तिயையொழிய व्याप्यतत्त्वங்களான चेतनाचेतनங்களுடைய कण्ठोक्तिயில்லையிறே. सर्वमन्त्रनैरपेक्ष्यकरமாகையாவது? தன்னை अधिकरिத்தவனுக்குத் தானொழியவேறொரு मन्त्रापेक्षै வேண்டாதபடியிருக்கை - सर्वभगवन्मूर्तिகளுக்கும் साधारणமாகையாவது? रामकृष्णादिमन्त्रங்கள் तत्तन्मूर्त्यसाधारणமாகிறாப்போலன்றியே रामकृष्णादि सर्वभगवन्मूर्तिகளுக்கும் பொதுவாயிருக்கை - அதாவது? रामकृष्णाद्यर्चनங்களுக்கும் தானே मन्त्रமாயிருக்கை. இனிभगवत्सकाशात् மயர்வறமதிநலமருளப் பெற்றவாழ்வார்களுமித்தையே आदरिத்துப் போந்தார்களென்கிறார் - ஆழ்வார்களும் इत्यादियால் - வாரமாக ஓதுவார்கள், வாரம், तन्निष्ठतै - तन्निष्ठராக விரும்பியென்றபடி. - ...

(सा.स्वा.) सर्वमन्त्रेति - जपादि द्वारेण एतदसाध्यफलसाधक मन्त्रान्तरமில்லையென்று கருத்து - प्रथमं संप्रदाय प्रवर्तक ரானவாழ்வார்களிந்த मन्त्रத்தைத்தொடாதேயிருக்க आचार्यர் விரும்புகை असङ्गतமன்றோ? என்னவருளிச்செய்கிறார் - ஆழ்வார்களும் इति - உன் திரு வெட்டெழுத்தும் इति - स्पष्टोऽर्थः - எட்டு इति - எட்டு எழுத்தும், திரு अष्टाक्षरத்தை என்றபடி - ஓதுவார்கள், आचार्य सकाशाद्गृहीत्वा अनुसन्धिக்கிறவர்கள் - வானமாளவே, परमपदத்தை ஆளுகைக்குவல்லர், समर्थரென்றபடி. எட்டெழுத்தும், पूर्ववत् - வாரமாக ஓதுவார், वारம், निष्टै - तन्निष्ठராகவிரும்பி - यद्वा, வாரமாக, अष्टसहस्रादिसंयुक्तமாக வோதுவாரென்றபடி. शेषं स्पष्टम् - ...

(सा.प्र.) விரும்பிப்போருவர்கள் - अत्यादरं कुर्वन्ति - திருவெட்டெழுத்தும் கற்று, श्रीमदष्टाक्षरमभ्यस्य - எட்டெழுத்துமோது வார்கள் வல்லர் வானமாளவே, श्रीमदष्टाक्षरमभ्यस्यन्तः परमपद निर्वाहका भवन्ति - எட்டெழுத்தும் வாரமாக ஓதுவார்கள் வல்லர் வானமாளவே, श्रीमदष्टाक्षरं स्वांशतयाध्यवस्य तन्निष्ठा भूत्वा तमेव ये अनुसन्दधते ते परमपदनिर्वाहका भवन्ति - ...

(सा.वि.) व्याप्यव्यापकेति - व्याप्याः, चेतनवर्गाः। व्यापकः, परमात्मा - விரும்பிப்போருவர்கள், आदरंमकुर्वन् - திரு வெட்டெழுத்தும் கற்று, श्रीमदष्टाक्षरमभ्यस्य। எட்டெழுத்து மோதுவார்கள் வல்லர் வானமாளவே - எட்டெழுத்தும், अष्टाक्षरमात्रम्। ஓதுவார்கள், अभ्यस्यन्तः - வல்லர்வானமாளவே, परमपद निर्वाहका भवन्ति - எட்டெழுத்தும் வாரமாகவோதுவார்கள் வல்லர் வான மாளவே, வாரமாக வோதுவார்கள், - ...

(सा.सं.) விரும்பி, प्रीतिपूर्वक मवलम्ब्य - வாரமாகவோதுவார், अष्टसहस्रादि संख्याया नियमेन जप्तारः

**मूलं।** "நாடு நகரமும் நன்கறிய நமோ நாராயணாய" என்றும் "நல்வகை யால் நமோ நாராயணா" என்றும் இத்திரு மன்त्रத்தையே விரும்பிப் போனார்கள். ऋषिகளும் ...

"बहवोऽ(हि)पि महात्मानो मुनयस्सनकादयः। अष्टाक्षरं समाश्रित्य ते जग्मुर्वैष्णवं पदम्॥
यथा सर्वेषु देवेषु नास्ति नारायणात्परः। तथा सर्वेषु मन्त्रेषु नास्ति चाष्टाक्षरात्परः॥
भूत्वोर्ध्वबाहुरत्राद्य सत्यपूर्वं ब्रवीमि वः। हे पुत्र। शिष्याः। शृणुत न मन्त्रोऽष्टाक्षरात्परः॥
तदर्चनपरो नित्यं तद्भक्तस्तं नमस्कुरु। तद्भक्ता न विनश्यन्ति ह्यष्टाक्षरपरायणाः॥
आसीनावा शयाना वा तिष्ठन्तो यत्र कुत्र वा। नमो नारायणायेति मन्त्रैकशरणा वयम्॥"

என்றார்கள் - இத்திரு மன்त्रத்தை सर्वेश्वरன் श्रीनारदभगवानैயிட்டு श्रीपुण्डरीकனுக்கு उपदेशिப்பிக்க -

(सा.दी.) என்னைத் தன் வாரமாக்கி வைத்தானென்றதிறே - நாடுநகரமென்ற விடத்தில் நாடென்று பாமரரையும், நகரமென்று परीक्षकரையும் विवक्षिக்கிறது. நல்வகையால், अनन्यप्रयोजनतया। இனி अतीन्द्रियदृष्टाக்களுமாய் सदाचार प्रवर्तकருமான ऋषिகளுடைய सादर परिग्रहமுமிதுக்குண்டென்கிறார் - ऋषिகளும் इत्यादिயால். இனி "बहवो हि महात्मानो मुनयस्सनकादयः। अष्टाक्षरं समाश्रित्य ते जग्मुर्वैष्णवं पदम्" என்ற अर्थத்தை पुण्डरीकादि वृत्तान्त प्रदर्शनத்தாலே उदाहरिக்கிறார். இத்திரு मन्त्रத்தை என்று துடங்கி - सर्वेश्वरன் श्रीनारदभगवानैயிட்டு श्रीपुण्डरीकர்க்கு उपदेशिப்பித்த मात्रமன்றியே - ...

(सा.स्वा.) நாடு, பாமரர். நகரமும், परीक्षकகரும். நன்கு, நன்றாக - அறிய, नमो नारायणाय என்று நாமம்பலபரவி इत्यन्वयः। நல்வகையால், अनन्य प्रयोजनतया - शेषं, स्पष्टम् - ஆழ்வார்களுக்கும் पूर्वர்களான ऋषिகள் விரும்பாதேயிருக்க ஆழ்வார்கள் விரும்பக்கூடுமோ? என்னவருளிச்செய்கிறார் - ऋषिகளும் इति। ततोऽपि प्रथमं सम्प्रदाय प्रवर्तकனான सर्वेश्वरன் இம் मन्त्रத்தை आदरिயாதேயிருக்க ऋषिகள்விரும்பக்கூடுமோ? என்ன வருளிச்செய்கிறார். இத்திரு मन्त्रத்தை इति - ...

(सा.प्र.) நாடு நகரமும் நன்கறிய நமோ நாராயணா வென்றும், नागरा देशीयाश्चायं वैष्णव इति यथा संयक् जानीयुः तथा नारायणेत्युक्त्वेति च - तदर्चनपरः, तेनाष्टाक्षरेण भगवदर्चनपरः - "अष्टाक्षरपरायणाः" इति - हि यस्मात्तेषा मष्टाक्षरं परमपदप्रापकमतस्ते न विनश्यन्ति इत्यर्थः - मूलमन्त्रस्य मोक्षप्रदत्वमुदाहृत्य दर्शयति। இத்திரு मन्त्रத்தை इत्यादिना - ...

(सा.वि.) तन्निष्ठा यथा स्यात्तथाभ्यस्यन्तः। நாடு நகரமும் நன்கறிய, நாடு, देशस्थाः - நகரமும், नगरस्थाश्च - நன்கறிய, अयं वैष्णव इति यथा संयग्जानीयुस्तथा नमो नारायणायेत्युक्त्वा - நல்வகையால் நமோ நாராயணாவென்றும், अनन्य प्रयोजनतया अष्टाक्षरमुक्त्वेति च விரும்பிப்போந்தார்கள், आदृतवन्तः। तदर्चनपरः, तेनाष्टाक्षरेण भगवदर्चनपरः - नारद भगवानैயிட்டு, नारदेन - ...

(सा.सं.) यन्त्रमुद्धृत्य विलिखिताष्टाक्षरार्चनाभिप्रायेण तदर्चनपर इत्युक्तिः - यद्वा तेनार्चनपरायणाः, परमोपायाः - मन्त्रैकशरणाः, मन्त्रैकोपायाः - ...

मूलं। அவனும் இத்தையே பரமஹிதமாகக் கேட்டபடியாலே,

"पुण्डरीकोऽपि धर्मात्मा नारायण परायणः।
नमो नारायणायेति मन्त्रमष्टाक्षरं जपन्॥"

इत्यादिகளில் சொல்லுகிறபடியே இம்मन्त्रनिष्ठனாய் मुक्तனானான் - இம்मन्त्रத்தை (இத்திரு मन्त्रத்தை)த் திருமங்கையாழ்வார்க்கு सर्वेश्वरன் தானே उपदेशित्தான் - இது प्रणवचतुर्थिகளொழிந்தபோது सर्वाधिकारமென்னுமிடம் श्रीवराहपुराणத்தில் कैशिकद्वादशीमाहात्म्यத்திலே "नमो नारायणेत्युक्त्वा श्वपाकः पुनरागमत्" என்கிற वचनத்தாலே காட்டப்பட்டது. இவ் अर्थं "நாமம் சொல்லில் நமோ நாராயணமே" என்றும் 'நன் மாலைகொண்டு நமோ நாரணா' என்றும் - ...

(सा.दी.) सर्वेश्वरன் தானே उपदेशिக்க இம் मन्त्रத்தைப் பெற்ற திருமங்கையாழ்வாரும் मुक्तரானமையைக்காட்டுகிறார் - இத்திரு मन्त्रத்தை என்று - இது प्रणवेत्यादि - प्रणवத்தையும் चतुर्थीविभक्तिயையும் ஒழித்து நமோ नारायण என்று இருக்கும் अवस्थैயில் आब्राह्मण, श्वपाकமான सर्व जातीयருக்கும் अधिकरிக்கலா மென்னுமிடமென்றபடி - இவ் अर्थम् ஆழ்வார்களாலும் காட்டப்பட்டதென்கிறார் - இவ் अर्थம் என்று துடங்கி - நன்மாலை கொண்டு, வாசகமாலை கொண்டு தொழுது - நமோ - ...

(सा.स्वा.) सर्वेश्वरன். नारदரையிட்டு उपदेशित्தாலு மதுकार्यकरமாகா விட்டாலித்தனையும் व्यर्थமன்றோ? என்ன வருளிச்செய்கிறார் - அவனும் इति - இப்படி परमुखமாக सर्वेश्वरன் उपदेशित्தாலும் स्वतन्त्रமாக ஒருத்தருக்கு उपदेशिயாமலிருக்கவிது கூடுமோ? என்ன வருளிச்செய்கிறார் - இம்मन्त्रத்தை इति। திருமங்கையாழ்வார் वर्णान्तरமானபடியாலே सप्रणवமான இம்मन्त्रத்துக்கு अनधिकारिயானபடியாலே யவருக்கித்தை उपदेशित्தாரென்கிறது असङ्गतமன்றோ? என்வைருளிச் செய்கிறார் - இது इति - இப்படி वचनத்தாலே காட்டப்பட்டால் प्रणव चतुर्थीविनिर्मोकेन ஆழ்வார்கள் उच्चरिக்கவேண்டாவோ? सदाचार மில்லையாகில் प्रणवमनुपादेयமன்றோ? என்னவருளிச்செய்கிறார். இவ்अर्थमिति - நாமம் சொல்லில் नमो नारायण மே என்று इति - நமோ நாராயண என்று திருநாமத்தைச் சொல்லி என்றபடி - नमो नारायण என்று प्रणवरहितமான இம்मन्त्रமாகிற நல்லமாலைகொண்டு, संपादिத்துக் கொண்டு - ...

(सा.प्र.) पुण्डरीकश्च पुण्यकृत् - आचार्यवत्तया मुक्तौ" इत्यादिर्जपन्नित्यादित्यादिशब्दार्थः। सर्वाधिकारत्वरूपं मन्त्रान्तरेष्वसिद्धं माहात्म्यमाह - இம்मन्त्रத்தை इत्यादिना - अस्यार्थस्य सांप्रदायिकत्वमाह - இவ்अर्थमित्यादिना - நாமம் சொல்லில் नमो नारायणமே, त्रिविक्रमस्य नाम्नि वक्तव्ये सर्वोऽपि नमो नारायणेत्येव वदेत् - நன்மாலை इति - कल्हारचम्पकादि मयीं श्लाघ्यां मालां हस्ते गृहीत्वा वाचा नमो नारायणेति निरन्तरमुक्त्वेति - ...

(सा.वि.) கேட்டபடியாலே, श्रवणप्रकारेण - அவரும் मुक्तனானான் इति संबन्धः - ஒழிந்தபோது, त्यागसमये - प्रणव चतुर्थी राहित्येन सर्वाधिकार इत्यत्र दिव्यसूक्ति प्रदर्शनमुखेन सांप्रदायिकत्वमाह - நாமம் சொல்லில் नमो नारायणाவென்று इति - त्रिविक्रम नाम्नि वक्तव्ये सर्वोऽपि नमो नारायणेत्येव वदेत् - நன்மாலைக் கொண்டு नमो नारायणा வென்று - कल्हारमयीं चम्पकमालां हस्तेन स्वीकृत्य वाचा नमो

(सा.सं.) हित மாக, उपायतया - नारायण परायणः, नारायण एव परमोपायः परमप्राप्यश्चेत्यध्यवसायवान् सन् - இவ்अर्थं, प्रणवचतुर्थी - विरहितस्य सर्वोज्जीवनत्वम् - ...

**मू - ''स्वेच्छयैव परेशस्य तादधीन्यबलात्तु नः। भगवद्भक्तशेषत्वं स्वेच्छयापि क्वचिद्भवेत् ॥ -**

(सा.दी) शेषत्वத்தில் परस्पराश्रयविरोधமில்லையென்னுமிவ் अर्थங்களை कारिकैகளாலே सङ्ग्रह्य காட்டுகிறார். स्वेच्छयैवेत्यादि उपपादितमित्यन्तेन - स्वेच्छयैवेति - परमात्माவுக்கு स्वभक्तशेषत्वं स्वेच्छैயாலே வரும் - नः, भागवतரான நமக்கு - भगवद्भक्तशेषत्वं तादधीन्यबलात्तु, भगवत्पारतन्त्र्यबलத்தாலே வரும். भगवत्पारतन्त्र्यात्तन्नियोगத்தாலென்றபடி - நமக்கும் भगवद्भक्तशेषत्वं क्वचिद्गुणि विषयத்தில் स्वेच्छैயாலும் வரும். இத்தை उपपादिக்கிறார் -

(सा.स्वा) प्रणवार्थं कथितமானபடியாலே இது नमस्ஸின் अर्थविवरण மென்கிறது सूचितமாகையாலிந்த नमस्ஸின் अर्थமும் संप्रदायमूल மென்று கருத்து - இப்படி श्रीमान् स्वतन्त्रस्स्वामी च என்று श्रीमाனே स्वामी अन्यस्य स्वाम्यமில்லை. श्रीमाனே स्वतन्त्रன் - अन्यस्य स्वातन्त्र्यமில்லையென்று प्रणवनमस्ஸுக்களுக்கு सारार्थமென்றும், भागवतशेषत्वंनमस्ஸில் फलितार्थ மென்றும், சொன்னது கூடுமோ? அப்போது सर्वेश्वरன் தானே பிராட்டியோடே கூட कुचेलादि भागवतविषयத்திலே दास्यं वहिத்தது विरोधिயாதோ? भगवत्पारतन्त्र्याधीनமாக भागवतदास्यमङ्गीकरिத்தால் भगवद्दासत्वाविशेषाद्देवतान्तरविषयத்திலும், लौकिकविषयத்திலும், दास्यं प्रसङ्गिயாதோ? स्वतन्त्रशेषिनियमनाधीनமாக भागवतदास्यं स्वरूपप्राप्तமாகில் गुणादिकभागवतविषयத்தில் गुणकृतமாக स्वेच्छादास्यं स्वरूपविरुद्धமாக प्रसङ्गिயாதோ? स्वतन्त्रशेषिसङ्कल्पाधीनமாக स्वरूपप्राप्तமாக भागवतदास्यमङ्गीकरिத்தால் परस्परं भागवतர்களுக்கு दास्यमन्योन्याश्रयग्रस्तமாகையாலே विरुद्धமன்றோ? इत्यादि शङ्कैயில் कारिकैகளாலே उक्तानुक्तार्थங்களை सङ्ग्रहिக்கிறார் - स्वेच्छयैवेत्यादिना - परेशस्य, ईश्वरस्य - स्वभक्तान् प्रति, कुचेलादीन् प्रति - स्वेच्छयैव शेषत्वम्। भागवतत्वप्रयुक्तया स्वेच्छयैव। न तु जीवस्येव परेच्छया - अनेन स्वरूप प्रयुक्तशेषित्वस्य विरोधो नास्तीति भावः नः, अस्माकं भागवतशेषत्वम् - तादधीन्यबलात्, तत्पारतन्त्रबलाद्भवेत् - अनेन भगवतो भागवतशेषत्वं स्वातन्त्र्यप्रयुक्तम् - जीवानांभागवतशेषत्वं पारतन्त्र्यप्रयुक्तमिति वैषम्यम्। नः अस्माकं गुणाधिकं भागवतविषये क्वचिच्छेषत्वं स्वेच्छयापि भवेत् - अपि शब्देन परेच्छापि तत्र -

(सा.प्र) न्यायसिद्धमिति दर्शयन्नन्याधीनत्वरूपस्यापि तस्य भोग्यतमत्वे निदानं भगवतो भागवतशेषत्वे प्रमाणमप्याह। स्वेच्छयैवेत्यादिना। तादधीन्यबलात्,भगवच्छेषत्वबलादित्यर्थः -

(सा.वि) सुखानुसन्धानाय कारिकाभिर्निबध्नाति - स्वेच्छयैवेति नः, अस्माकं - तादधीन्यबलात्- भगवत्पारतन्त्र्यवशात् - परेशस्य स्वेच्छयैव, भगवदिच्छयैव भगवद्भक्तशेषत्वं स्यात् - क्वचित्, गुणाधिकविषये-ज्ञानानुष्ठान भगवदनुभव शिष्यानुकम्पित्व सौशील्यसौलभ्यादि मद्विषये- -

(सा.सं) सर्वशेषित्वमीश्वरस्य कुतः? ईश्वरे विद्यमानशेषत्वापेक्षया जीवे विद्यमान शेषत्वस्य को विशेषः?शेषமாக்கினால் इत्युक्त्या निर्बन्धप्रयुक्ततैव स्यान्न स्वरुचिप्रयुक्ततेत्यत्राह - स्वेच्छयैवेति- ''तमीश्वराणाम् '' इत्युक्तविधया परेषामपीश्वरस्य भगवतो भक्तान् प्रति शेषत्वं स्वेच्छयैव, स्वसङ्कल्पेनैव - नः, अस्माकं तु - तादधीन्यबलात्, भगवत्परतन्त्रत्वबलात् -

**मू - गुणाधिके हि विषये गुणसारस्य वेदिनः ।**
**रामे रामानुजस्येव दास्यं गुणकृतं भवेत् ।।**
**दास्यमैश्वर्ययोगेन ज्ञातीनां च करोम्यहम् । -**

---

(सा.दी) गुणाधिक इति - गुणाढ्ये भागवतविषये - सारस्य वेदिनः, सारस्यத்தையறிந்தவனுக்கு, तद्गुणवशीकृतனுக்கென்றபடி. रामे பெருமாளிடத்தில், रामानुजस्येव இளையபெருமாளுக்குப் போலே, दास्यं, दासवृति । गुणकृतं भवेत्, तद्गुणज्ञानप्रयुक्तமாய் வருமென்கை. दास्यमिति भारते भगवद्वचनम् - இதுக்கு अर्थம் ऐश्वर्ययोगेन, ईश्वरस्वाभाव्यात् स्वेच्छयैवेत्यर्थः । ज्ञातीनां, बन्धुக்களுக்கென்றபடி -

---

(सा.स्वा) प्रयोजिकेति भावः - गुणाधिकविषये स्वेच्छाकृतं शेषत्वं चेद्गुणकृतं दास्यमिति प्रवादस्य का गतिरित्यतस्तदुपपादयति । गुणाधिक इति रामे,गुणैः रमयतीति रामः - गुणाधिकस्तस्मिन् - रामानुजस्येव, ''अस्याहमवरो भ्राता गुणैर्दास्यमुपागतः'' इतिवत् - गुणसारस्य वेदिनः भागवतस्य गुणाधिक भागवतविषये दास्यं गुणकृतं भवेद्धि - दास्येच्छाया अपि गुण एव प्रयोजकः - अतः गुणकृतेच्छाप्रयुक्तत्वात् गुणकृतमित्युच्यते । भगवतस्स्वेच्छया स्वभक्तशेषत्वं चेदभक्तशेषत्वमपि कुतो न स्यात् - भगवदधीनतया भागवतशेषत्वं जीवस्य चेल्लौकिकपामरादि शेषत्वमपि स्यादित्यतस्सप्रमाणं तदुपपादयति - दास्यमिति- इदं श्रीकृष्णवचनम् - ऐश्वर्ययोगेन, -

---

(सा.वि) गुणसारस्य वेदिनः, गुणग्राहिणः स्वेच्छयापि भगवद्भक्तशेषत्वं स्यात् - तत्रोदाहरणम् - रामे रामानुजस्येति - गुणकृतं दास्यम्, दासकर्म - कैङ्कर्यं च भवेदित्यर्थः - तद्विषयप्रीतिप्रेरितः तत्कैङ्कर्यं च कुर्यादिति भावः - ननु गुणसारस्य परिज्ञानकृतमपि दास्यं भगवत्पारतन्त्र्यकृतं भवत्येव - सर्वस्यापि भगवत्प्रेरणं विना अनुपपत्तेः - यच्च भगवत्पारतन्त्र्यमात्रप्रयुक्तं सर्वसाधारणं तदपि भगवद्भक्तत्वरूपगुणानुसन्धानप्रयुक्तस्वेच्छाजन्यम् । अतः कोऽनयोर्विशेष इतिचेदुच्यते - यद्यपि भगवद्भक्तत्वरूपगुणमात्रानुसन्धानहेतुकमेव भगवत्पारतन्त्र्यकृतशेषत्वमपि - तथापि भगवद्भक्तिव्यतिरिक्त ज्ञानानुष्ठानानुसन्धानकृतत्वाभावात् केवल पारतन्त्र्यकृतस्य तस्य वैलक्षण्यं कृतमिति विशेषो द्रष्टव्य इति भगवान्किमर्थं विनियुङ्क्त इत्यत्र स्वभक्तानांस्वस्यात्यन्ताभिमतत्वादित्यभिप्रेत्याह -दास्यमैश्वर्ययोगेनेति । अहमैश्वर्ययोगेन, स्वातन्त्र्ययोगेन । ज्ञातीनां च, ज्ञातीनामपि - किमुतभक्तानामित्यर्थ । ''इमौ स्म मुनिशार्दूल किङ्करौ समुपस्थितौ । प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः'' -

---

(सा.सं) क्वचिद्विषये स्वेच्छयापि भवेत् - कथमेतदित्यत्राह - गुणाधिकेहीति - विषये, भगवद्भक्तेषु - गुणानां सारस्यं, सरसतां - रसावहत्वमिति यावत् - तद्वेदिनः पुरुषस्य । दास्यं, दासवृत्तिरूपकर्म - गुणकृतं, सौलभ्यसौशील्यादि गुणपरिज्ञानायत्त स्वेच्छयैव हि जन्यमित्यर्थः - तत्र दृष्टान्तः - रामे रामानुजस्येवेति - ''अस्याहमवरो भ्राता गुणैर्दास्यमुपागतः'' इति हि तद्वचनम् - भगवान् स्वभक्तविषये स्वात्मानं शेषत्वेन विनियुङ्क्ते इत्युक्तम् - तत्कुत्र दृष्टमित्यत्र कृष्णवाक्यमेव दर्शयन्नुपपादयति - दास्यमिति श्लोक द्वयेन - ऐश्वर्ययोगेन, -

**मू - अर्धभोक्ता च भोगानां वाग्दुरुक्तानि चक्षमे ।।**
**इति स्वोक्तिनयादेव स्वभक्तविषये विभुः ।**
**आत्मात्मीयस्य सर्वस्य सङ्कल्पयति शेषताम् ।। -**

---

(सा.दी) दास्यं करोमि, दासवृत्ति பண்ணா நின்றேன். ज्ञातिகளுடைய भोगங்களில் अर्धभोक्ता -भोगेषु स्रक्चन्दनभोजनादिகளில் अवशिष्टभोक्ताவாகா நின்றேன். அப்படி तेषां वाग्दुरुक्तानि, वाक्पारुष्यங்களையும் - क्षमे, क्षमियாநின்றேனென்கை - स्वेच्छयैव என்று सर्वत्रानुवर्तिக்கிறது - इतीति, इति स्वोक्तिनयादेव, இப்படி தானருளிச்செய்த न्यायத்தாலே - विभुः, स्वतन्त्रस्वामियான ईश्वरன் स्वभक्तविषयத்தில் - आत्मनः, आत्मीयस्य தனக்கும் தன்னுடைமைகளுக்கும் எல்லாத்துக்கும் शेषतां, दासवृत्तियான कैङ्कर्यத்தை - सङ्कल्पयति, நானிவர்களுக்கு दासனாகக் கடவேன் - என்னுடையவையும் என்னுடையவர்களுக்கு शेषமாகக்கடவன என்னுடையவர்களும் என்ன अभिमतர்க்கு दासராகக்கடவர்களென்று मनसा नियमिக்குமென்றபடி -

---

(सा.स्वा) स्वातन्त्र्ययोगेन - ज्ञातीनां दास्यं करोमि च - चकारेण तत्परतन्त्रश्चास्मीत्यर्थः - भोगानामर्धभोक्ता ज्ञातीनामर्धं दत्वा तदवशिष्टार्धभोक्तास्मि - वाग्दुरुक्तानि, वाचा दुरुक्तानि-उपालम्भधिक्कारादीनि चक्षमे ज्ञातित्व रूपसंबन्ध सामान्यमात्रेणापि दास्यपारतन्त्र्यम् अवशिष्टभोगमुपालम्भसहनं - च करोमि - किमुत ''ज्ञानीत्वात्मैव मे मतम् - प्रियो हि ज्ञानिनोऽत्यर्थमहंस च मम प्रियः'' इत्याद्युक्तरीत्या अत्यर्थप्रियतमानामिति भावः - इति स्वोक्तिनयादेव। विभुः, स्वतन्त्रः - स्वातन्त्र्यादेव स्वभक्तविषये आत्मात्मीयस्य शेषतां सङ्कल्पयति। नत्वभक्तविषये वा, स्वस्य पामरविषये वा, देवतान्तरविषये वा स्वकीयस्यापि शेषतां सङ्कल्पयतीति भावः भागवतानामन्योन्य -

---

(सा.वि) इत्याद्युक्तेः - दास्यं करोमि,ज्ञातीनामपि तत्कुले जननमात्रेण दासकृत्यं करोमीति भावः। भोगानामर्धभोक्ता च, अर्धंतेभ्यो दत्वा तदवशीष्टिमहमनुभवामि। वाग्दुरुक्तानि, तेषामुपालम्भधिक्कारादीनिच। क्षमे, सहे। इति स्वोक्तिनयात्, एवं स्वयमेवोक्तत्वात् - आत्मात्मीयस्य सर्वस्य शेषतां सङ्कल्पयति, आत्मानमिवात्मीयं भक्तमपि भक्तशेषत्वेन स्वेच्छयैव सङ्कल्पयतीत्यर्थः। ननु भगवद्भक्तशेषत्वे उभयोरपि भगवद्भक्तत्वात् परस्परशेषभावस्स्यादित्यत्र भगवत्स्वातन्त्र्य- -

---

(सा.सं) स्वातन्त्र्येण। ज्ञातीनां च दास्यं करोमि - चकारादहं भक्तपराधीन इति वचनसिद्धम्। समुच्चीयते -भोगानामर्धभोक्ता, ज्ञातीनामर्धं दत्वा तदवशिष्टार्धभोक्तास्मि - वाचां दुरुक्तानि, उपालम्भधिक्कारादि रूपाणि च क्षमे - स्र्व हेतुस्स्वातन्त्र्यम् - एवं ज्ञातित्वरूपसंबन्धसामान्यमात्रेण दासवत्पारतन्त्र्यं राज्यार्धप्रदानमुपालम्भसहनं च करोमि चेत्किमुत ''ज्ञानीत्वात्मैव'' इत्युक्तात्यर्थप्रियतमानामिति भावः - प्रभुः, स्वतन्त्रः - आत्मा च आत्मीयं चेति समाहार एकवद्भावः। आत्मात्मीयस्य सर्वस्येत्यस्मिन्नर्थे ''परिजन परिबर्हा-भूषणान्यायुधानि प्रवरगुणगणाश्च ज्ञानशक्त्यादयोवा। परमपदमयाण्डान्यात्मदेह स्तवात्मा वरद सकलमेतत् संश्रितार्थं चकर्था''इत्यभियुक्तोक्तमपि भाव्यम्। अस्त्वेतत्तथाप्यन्योऽन्यं शेषशेषिभावौ विरुद्धौ -

**मू - अन्योऽन्यशेष (ताभाव:) भावोऽपि परस्वातन्त्र्यसंभव: ।**
**तत्तदाकारभेदेन युक्त इत्युपपादितम् ।।'' -**

(सा.दी) अन्योऽन्येति । परस्वात्त्र्यसंभव:, सर्वेश्वरனுடைய सङ्कल्पத்தாலுண்டான - अन्योऽन्यशेषताभाव: - अन्योन्यशेषत्वமாகிற स्वभावம் भागवतர்களுக்கென்று शेषம் - तत्तदाकारभेदेन, அவரவர்களுடைய उपकार्योपकारक भावरूपமான स्वभावभेदத்தாலே. युक्त:, योग्यम् - उपपन्नமென்கை - ஒருவனுக்கு उपकार्यभावத்தாலே शेषित्वமும் विरुद्ध மன்றென்று पुरुषार्थकाष्ठाधिकारத்திலே उपपादिक्கப்பட்டதென்கை. அன்றியே शास्त्रங்களில் பெரியோராலே उपपादितமென்கை - இனி இந் नमस्ஸில் -

(सा.स्वा) शेषभावे विरोधं परिहरति - अन्योऽन्येति । भागवतानामन्योऽन्यं शेषभावोऽपि परस्वातन्त्र्यादेव - अपि शब्देन शेषिभावोऽपि तत्तदाकारभेदेन, तत्तदतिशयाधायकत्ववेषेण शेषत्वं तत्तदतिशयभाक्त्वेन शेषित्वमप्यविरुद्धमिति भाव: - युक्त इति - पुरुषार्थकाष्ठाधिकारे उपपादितमित्यर्थ: । अत्रेदमवधेयम् - भागवतशेषत्वस्य भगवद्भक्त्यादिरूपगुणकृतत्वाद्गुणाधिकभागवते स्वेच्छाप्रयुक्तशेषत्वस्यापि गुणकृतत्वादुभयोर्भेदोपपादनमसङ्गतमिति चेन्न - ''प्रभवो भगवद्भक्ता मादृशां सततं द्विज'' इत्यादि प्रमाणपर्यालोचनया स्वतन्त्रशेष्यभिमतत्वं ज्ञात्वा तादधीन्येन शेषभाववहने तादधीन्यकृतश्शेषभाव: - तत्र स्वेच्छाया: प्रयोजकता नास्ति - भगवद्भक्त्यनुष्ठानशान्त्यादि गुणपर्यालोचनया अवशोत्पन्न स्वेच्छ्या शेषभाववहने गुणकृतश्शेषभाव: इति भेद: । ननु भगवतस्स्वेच्छया भागवतान् प्रति शेषत्वे स्वतश्शेषत्वे सति चेतनत्वस्य जीवलक्षणस्य भगवत्यतिव्याप्तिस्स्यात् - न च स्वत: पदेन निरुपाधिकशेषत्वस्य विवक्षितत्वान्नाति-व्याप्तिरिति वाच्यम् - भगवद्गत भागवतशेषत्वस्य कर्मकृतत्वाभावेन निरुपाधिकत्वात् - न च परेच्छया प्रयुक्तशेषत्वं स्वतश्शेषत्वम् - तच्च जीवेऽस्ति - भगवति तु नास्ति - भगवच्छेषत्वस्य स्वेच्छामात्र प्रयुक्तत्वेन परेच्छा प्रयुक्तत्वाभावादिति वाच्यम् - लक्ष्म्यां परेच्छाप्रयुक्तशेषत्वस्य सत्वेनातिव्याप्त्यापत्तेरिति चेन्न - स्वेच्छया अप्रयुक्तशेषत्वं स्वतश्शेषत्वम् - श्रिय: भगवन्तं प्रति शेषत्वस्य भगवदिच्छाप्रयुक्तत्वेऽपि स्वेच्छाया अपि तत्र प्रयोजकत्वेन स्वेच्छया अप्रयुक्तशेषत्वस्याभावेनातिव्याप्त्यभावात् -

(सा.प्र) एवं तर्हि भागवतशेषत्वस्य सर्वभागवतेष्वविशिष्टत्वादेकस्यैवैकदैवैकं प्रत्येव शेषत्वशेषित्वापादकत्वाद्व्याहतिरित्यत्र शेषत्वशेषित्वयोरापादकातिशयस्य भिन्नकर्तृकत्वादपि न व्याहतिरिति पुरुषार्थकाष्ठाधिकारोक्तं स्मारयति - अन्योऽन्येत्यादिना - एवं नमसस्स्वातन्त्र्य -

(सा.वि) प्रयुक्तस्सोऽस्त्येवेत्याह - अन्योऽन्यशेषभावोऽपीति - परस्परशेषत्वे परस्परशेषित्वं च स्यात् - तच्च विरुद्धं शेषस्य शेषित्वायोगादित्यत आह - तत्तदाकारभेदेनेति - तन्निष्ठशेषत्वमादायास्य शेषित्वமே तन्निष्ठशेषत्वमादाय तस्य शेषित्वमिति न विरोध इत्युपपादितम् - पुरुषार्थकाष्ठाधिकार -

(सा.सं) कथमुपपद्येत इत्यत्राह अन्योऽन्येति - अपि शब्देन शेषिभावो गृह्यते - परस्य, स्वामिन: - स्वातन्त्र्यसंभवश्शेषभावश्शेषिभावश्चाकारभेदाद्युक्त: - यथा क्रियां प्रत्येकस्यैव शेषत्वं शेषित्वं च दृष्टम् - तथेहापि इति पुरुषार्थकाष्ठाधिकारे उपपादितम् - इत्थं सूक्ष्मयोजनानुसारेण -

**मू** - இப்படி **स्वतन्त्र**னான **शेषि**யிட்ட வழக்காய் **अकिञ्चन**னாயிருக்கிற இவனுக்கு அவனாலே **पुरुषार्थं** பெற வேண்டுகையாலே அவனுடைய **वशीकरणार्थ**மாக **द्वय**த்திலும் **चरमश्लोक**த்திலும் **विशद**மாகச் சொல்லுகிற **शरणवरण**மிங்கே **सूचित**ம் -

(सा.दी) இவனுக்கு शरणवरणமும் सूचितமென்று सोपपत्तिकமாகவருளிச் செய்கிறார் - இப்படி स्वतन्त्रेत्यादिயால், शरणवरणமாவது? "त्वमेवोपाय भूतो मे भव" என்று शरणत्वेन वरणम् - सूचितत्वத்தை -

(सा.स्वा) जीवशेषत्वस्य च स्वाभाविकस्य अनादिभगवदिच्छाप्रयुक्तत्वेन स्वेच्छया अप्रयुक्तत्वाल्लक्षणसङ्गतिः - यद्वा, चेतनान्तरगुणाप्रयुक्तभगवदिच्छामात्रप्रयुक्तशेषत्वं स्वतश्शेषत्वम् - लक्ष्मीशेषत्वस्य भगवदिच्छामात्र-प्रयुक्तत्वाभावान्नातिव्याप्तिः - भगवतो भागवतशेषत्वस्य यदि कश्चित् भागवतस्स्यात्तदा ममात्मात्मीयं सर्वं तस्य शेषभूतंभवत्विति इच्छायाश्चेतनान्तरभागवतत्वादि गुणप्रयुक्ततया तदप्रयुक्तशेषत्वाभावान्नाति-व्याप्तिरिति सर्वं सुस्थितम् - இப்படி अनन्यशरणत्वादेरधिकारस्य सिद्धये என்று சொன்னது கூடுமோ? अनुष्ठेयமான शरणवरणं சொல்லாதே अधिकारसिद्धिकथनं व्यर्थமன்றோ? "इष्टोपायं त्वयननमसोः" என்று अर्थपञ्चकाधिकारोक्तियும் विरोधियாதோ? என்னவருளிச்செய்கிறார் - இப்படி स्वतन्त्रனான इति - परतन्त्रனான இவனுக்கு ईश्वरனே पुरुषार्थदाताவன்றோ? शरणवरणं सूचितமென்கிறது கூடுமோ? शरणवरणमकिञ्चनकर्तव्यமென்று प्रमाणமுண்டாகிலன்றோ விப்படி சொல்லலாவது? என்னவருளிச் செய்கிறார் - அவனுடைய इत्यादि - अकिञ्चनனாயிருக்கிற விவனுக்கவனாலே पुरुषार्थं பெற வேண்டுகையாலே इति, उपायान्तरस्थानापन्नனானவவனாலே யென்றபடி - चतुर्थ्यन्तपदத்திலே पुरुषार्थापेक्षैயும் नमस्ஸிலே आकिञ्चन्यமும் சொன்னால் भगवदुपायान्तरस्थाननिवेशहेतुभूत -

(सा.प्र) निवृत्तिपरत्वे उपायस्त्वार्थ इत्याह - இப்படி इत्यादिना - "नीची भावेन सन्धोत्यम्" इत्युक्तप्रकारेण परतन्त्रस्य स्वरक्षणार्थं स्वतन्त्रे शरणवरणपूर्वकं भरस्य समर्पणीयत्वात्पारतन्त्र्यद्वारैवोपायस्यार्थत्वमिति भावः। स्थानप्रमाणात् नमसश्शरणवरणवाचित्वदर्शनात् -

(सा.वि) इति भावः - एवं नमसस्स्वातन्त्र्यनिवृत्तिपरत्वे उपायस्त्वार्थं इत्याह - இப்படி इत्यादिना - शेषिயிட்ட வழக்காய், शेषिदत्तप्रकारस्य - अकिञ्चनனாயிருக்கிற இவனுக்கு, अकिञ्चनस्य सतोऽस्य - அவனாலே, भगवतैव - पुरुषार्थं பெறவேண்டுகையாலே, पुरुषार्थस्य प्राप्तुमपेक्षितत्वात्तद्वशीकरणस्यावश्यकत्वादिति भावः - द्वयத்திலும் इति। एतद्व्याख्यानमन्त्रे स्पष्टमुक्तत्वादिहार्थतया शरणवरणमनुसन्धेयमिति भावः - नन्वेवमात्मसमर्पणमनुसन्धेयं न स्यात् । -

(सा.सं) मोक्षोपायाधिकारिणोऽवश्यवेद्यतयापेक्षितनिरपेक्षस्वातन्त्र्य स्वामित्व निषेधपरत्वं नमश्शब्दस्योपवर्णितम् - अथ स्थूलयोजनानुसारेण साध्योपायपरत्वं वक्तुमारभते - இப்படி इत्यादिना । स्वरूप तद्धर्मतदनुवृत्तीनां स्वतन्त्रशेष्यधीतत्वद्योतनाय இட்டவழக்காய் इत्युक्तिः - सूचितमिति - शेषत्वपारतन्त्र्यपर नमश्शब्देनार्थादुक्तमित्यर्थः। अर्थसिद्धत्वमुपपादयति -

**मू - आत्मसमर्पण**மும் **शरणवरण**மும் **अन्योन्यं** பிரியாமையாலே ஓரொன்றைச் சொல்லும் **शब्द**ங்களி(லே)லும் இரண்டும் **विवक्षितम् -**

**यस्स देवो मया दृष्टः पुरा पद्मायतेक्षणः । -**

---

(सा.दी) उपपादिக்கிறார் - आत्मसमर्पणமும் इत्यादि - आत्मसमर्पणமாவது? शेषत्वादि स्वरूपानुसन्धानमென்றபடி. आत्मसमर्पणமும் शरणवरणமும் अन्योन्यं பிரியாமையால் - அதாவது? स्वरूपभर-समर्पणங்கள் अनुष्ठानवेलैயில் अविनाभूतமாயிருக்கை - இனி शरणवरणं सूचितமாக வேண்டா - शाब्दமாகவே இந் नमस्ஸுத்தானே सपरिकरात्मरक्षाभरसमर्पणपरமாமென்று सप्रमाणமாகக் காட்டுகிறார் - यस्सदेव इत्यादि तत्परமாகவுமாம் इत्यन्तेन - वनवासத்தில் दुःखப்படுகிற पार्थர்களைக் கண்டு मार्कण्डेयர் धर्मपुत्रரைக்குறித்துச் சொன்ன वचनम् - यस्सदेव इति -

---

(सा.स्वा) शरणवरणमर्थसिद्ध மென்றபடி - शरणवरणं सूचितமானாலும் आत्मस्वरूपसमर्पण विशिष्ट शरणवरणமே उपायமாகையால் स्वरूपसमर्पणं சொல்லவேண்டாவோ? என்னவருளிச்செய்கிறார் - आत्मसमर्पणமும் इति - स्वरूपसमर्पणமும் अर्थसिद्धமென்று கருத்து - यद्वा, वशीकरणार्थமாக द्वयத்திலும் चरमश्लोकத்திலும் विशदமாகச் சொல்லுகிற शरणवरणமென்கிறது கூடுமோ? शरणवरणமாவது उपायत्व प्रार्थनமன்றோ? அது उपायமன்றே? स्वरूपफलसमर्पणगर्भभरसमर्पणात्मकமான आत्मसमर्पणமன்றோ साध्योपायம்? அது सिद्धिக்கவில்லையே? என்னவருளிச் செய்கிறார் - आत्मसमर्पणமும் इति - आत्मसमर्पणமும், स्वरूपफलसमर्पणगर्भभरसमर्पणமுமென்றபடி - இங்கு स्वरूपसमर्पणपरமாகில் अन्योऽन्यं பிரியாமையாலே என்கிறது சேராமையாலே இப்படியே अर्थं கொள்ளவேணுமென்று கருத்து. अप्रधानமான स्वातन्त्र्यनिवृत्ति முதலான अर्थं शाब्दமென்றும் प्रधानतमமான भरसमर्पणं सूचितமென்றும் சொல்லுகை असङ्गतமன்றோ? என்ன नमस्ஸிலே उपायं शब्दமென்னும் ஒரு योजनै அருளிச் செய்கிறார் - यस्सदेव इति - वनवासदुःखितान् पाण्डवान् दृष्ट्वा धर्मपुत्रं प्रति मार्कण्डेय वचनम् -

---

(सा.प्र) शरणपरभरसमर्पणयोश्चान्योऽन्याविनाभूतत्वादत्रत्यो नमश्शब्दश्शरणवरणवाची सन् भरन्यासं लक्षयतीत्युपायपरत्वं वेत्याह - आत्मसमर्पणமும் इत्यादिना - शरणवरणम् , उपायत्व प्रार्थना -

---

(सा.वि) द्वये शरणवरणस्यैव श्रुतत्वादित्यत आह - आत्मसमर्पणமும் इति - பிரியாமையாலே, अविनाभावेन - ननु नमश्शब्दस्य शरणगतौ प्रयोगदर्शनात्किमित्यार्थत्वमङ्गीकार्यम् - पारतन्त्र्यस्यैवान्यथा सिद्धिसंभवादित्याशङ्क्य तथैवास्त्वित्याह - यस्सदेव इति। वने विद्यमानान् -

---

(सा.सं) आत्मेति - स्वरूप भरफलानां समर्पणमात्मसमर्पणम्। गोतृत्ववरणगर्भोपायत्वप्रार्थनं शरणवरणम् - तथा च द्वयोरप्यकिञ्चनमुमुक्षुप्रपत्तावविनाभावादेकोक्तावितरस्यार्थ सिद्धतेति भावः - एवमर्थसिद्धत्वमुपपादितम् - अथ शाब्दत्वमेवोपपादयति - यस्स देव इत्यादिना। वनवासे दुःखितं पार्थं मार्कण्डेयो दृष्ट्वा प्रत्युक्तं वचनमिदं -

**मू -** **स एव पुरुषव्याघ्रस्संबन्धी ते जनार्दनः ।।**
**सर्वेषामेव लोकानां पिता माता च माधवः ।**
**गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः ।। ''** என்று **उपदेशिக்க**
**''एवमुक्तास्त्रयःपार्थायमौ च भरतर्षभाः ।**
**द्रौपद्यास्सहितास्सर्वे नमश्चक्रुर्जनार्दनम् ।। ''** என்று சொல்லுகையாலும்
**दमयन्तीवृत्तान्तத்திலே**
**''शरणं प्रति देवानां प्राप्तकालममन्यत । ''** என்று **उपक्रमिத்து**
**''वाचा च मनसा चैव नमस्कारं प्रयुज्य सा । ''** என்கையாலும் **नमश्शब्दं** தானே
**शरणागतिशब्दस्थानத்திலே पठितமாகையாலே இது தன்னோடு (தன்) துவக்கறுத்துக்கொண்டு -**

---

(सा.दी) पुरा, एकार्णवसमयத்தில் पद्मायतेक्षणனான देवன் श्रीमन्नारायणன் यो मया दृष्टः, वटपत्रशायिயாய் காணப்பட்டான் - स एषः जनार्दनः அவன்தானே कृष्णरूपेण - ते உனக்கு. संबन्धी भवति, बन्धुவாகாநின்றான். अयं माधवस्सर्वेषां लोकानां पिता माता च भवति - एवमुक्ता इति - यमौ, नकुलसहदेवौ च - भरतर्षभा; पञ्च - देवानां शरणं प्रति, देवतैகளை शरणं புகுருகைக்கு என்றபடி - प्राप्तकालं, योग्यकालமென்கை -

---

(सा.स्वा) पुरा, एकार्णवसमये - सः प्रसिद्धः - पद्मायतेक्षणः - यो देवः वटपत्रशायी मया दृष्टः - हे पुरुषव्याघ्र? स एष देवो जनार्दनः श्रीकृष्णरूपेणावतीर्णः - ते संबन्धी, अनुबन्धी - सर्वेषामेव लोकानां पिता माता च माधवः - लक्ष्मीनायकश्च - एवंभूतः ते संबन्धीत्यर्थः - एवं शरण्यं हे पुरुषर्षभाश्शरणं गच्छध्वमिति - उपदेशिக்க, मार्कण्डेयன் उपदेशिயாநிற்க. एवमुक्तास्त्रयः पार्थाः, पृथासुताः भीमार्जुनधर्मपुत्राः - यमौ च, नकुलसहदेवौ च - हे भरतर्षभ, धृतराष्ट्र - द्रौपद्या सहितास्सर्वे पञ्चपाण्डवाः जनार्दनं नमश्चक्रुः शरणं गता इत्यर्थः - दमयन्ती देवानां शरणं प्रति, शरणवरणं प्रति, प्राप्तकालममन्यत, योग्यकालममन्यतेत्यर्थः - पठितமாகையாலே इति - गच्छध्वमेनं शरणमित्युक्तशरणागतिस्थानத்திலே नमश्चक्रुरिति नमस्ஸு शरणागतिस्थानத்திலே पठितமாகையாலேயும், शरणं प्रति देवानाम् என்று சொல்லப்பட் शरणागति स्थानத்திலே नमस्ஸு नमस्कारं प्रयुज्य सा इति च प्रयुक्तமாகையாலேயுமென்று கருத்து - ஆனாலுமிங்கு नमस्ஸு ''न, मः'' என்னுமிரண்டு पदமாகையாலே रूढ्या आत्मसमर्पणपरत्वं கூடாதே? என்னவருளிச்செய்கிறார் - இது தன்னோடு इति - இது, नमस्ஸு. -

---

(सा.वि) पाण्डवान्प्रति सप्तकल्पस्थितस्य मार्कण्डेयस्य वचनमिदम् - पुरा, एकार्णवसमये यो देवो मया दृष्टस्स जनार्दनः - एव कृष्ण इत्यर्थः - शरणं गच्छध्वमित्युपदेशिக்க, नमश्चक्रुरित्युक्त्या नमश्शब्दस्य शरणागतिपरत्वमित्यर्थः - தன்னோடு துவக்கறுத்துக் கொண்டு, स्वेन सह -

---

(सा.सं) पुरा, एकार्णवसमये - देवः, जगत्कारणः - वटदले पद्मायतेक्षणस्सन्, शयितो यो मया दृष्टः - स एवैष जनार्दनः कृष्णाभिधानेन त्वत्संबन्धितया विद्यमानः पुरुषश्रेष्ठस्ते संबन्धी। पार्थेन सह धर्मपुत्रो भीमश्चेति त्रयः तेनैव पार्था इति बहुवचनम् - यमौ नकुलसहदेवौ - देवानां शरणं प्रति , देवेषु शरणवरणं कर्तुम् - இது, नम इत्येतत् - தன்னோடு -

मू - **सपरिकर**மான **स्वरक्षाभरसमर्पण**த்திலே **तत्पर**மாகவுமாம் - **नमस्**ஸு **आत्मसमर्पणपर**மாயிருக்கு மென்னுமிடம்

**''समित्साधनकादीनां यज्ञानां न्यासमात्मनः।**
**नमसा योऽकरोद्देवे स स्वध्वर इतीरितः॥ -**

---

(सा.दी) सपरिकरेत्यादि - साङ्गस्वरक्षाभरसमर्पणத்தில் पर्यवसितமாகவுமென்கை இன்னுமிவ் अर्थத்தில் प्रमाणं காட்டுகிறார் - समित्साधनकेत्यादि - अर्हिर्बुध्न्यसंहितावचनम् - यः पुमान् नमसा पदेन, आत्मनो न्यासं, समर्पणम् - समित्साधनकादीनां यज्ञानां , समिदाज्य पुरोडाशात्मादि हविष्कानां मध्ये - आत्मन्यासाख्यं योगं ''तस्यैवं विदुषो यज्ञस्य '' इत्युक्तं यः करोति स स्वध्वर इतीरितः ''यस्समिधाय आहुती यो वेदेन ददाशमर्तः - यो नमसा स्वध्वरः'' -

---

(सा.स्वा) भरः என்று अध्याहरित्து भरम् என்னதன்றென்று स्वत्वत्यागं वाच्यமானால் आर्थिकமாக परस्वत्वापादनात्मकभरसमर्पणமும் सिद्धिக்கு மென்றுகருத்து - ஆனாலும் मार्कण्डेयवचनத்திலும், दमयन्तीवृत्तान्तத்திலும், शरणागतिस्थानத்திலே पठितமாகையாலே नमस्ஸு स्थानप्रमाणरूप- तात्पर्यग्राहकமிருக்கையாலே அவ்விடங்களிலே आत्मसमर्पणपरமானாலும் अन्यत्रात्मसमर्पण परமென்று சொல்லக் கூடுமோ? என்னவருளிச் செய்கிறார். नमस् इति। समिदिति - यस्समित्साधनकादीनां, समिदाज्य पुरोडाशात्महविष्कानां यज्ञानां मध्ये - आत्मनः न्यास ''यस्समिधाय आहुती यो वेदेन ददा शमर्तोयो नमसा स्वध्वर'' इति श्रुत्युक्तमात्मसमर्पण मकरोत् -

---

(सा.प्र) नमस आत्मसमर्पणे विनियोगात्तस्य चानुष्ठेयार्थप्रकाशकत्वस्यावश्यकत्वात् निवेदनस्य नमस्कारात्मकत्वोक्त्या चात्मसमर्पणपरत्वं वचनतोऽपि सिद्धमित्याह - नमस्सित्यादिना। ''यस्समिधाय आहुती यो वेदेन ददाशमर्तो अग्नये यो नमसा स्वध्वर'' इति -

---

(सा.वि) संबन्धं निर्वतयत् - अयं भावः - स्व स्थाने नमः पदमावर्त्य नमम स्वात्मरक्षाभरः तवैवेति मः मम न इति योजनया स्वसंबन्धनिवृत्तिद्वारा भरसमर्पणमिति - ननु रक्षा भरसमर्पणे दृष्टप्रयोगस्य स्वरूपादि समर्पणविशिष्टन्यासपरत्वं कथमित्यत्राह - स्वरक्षाभरसमर्पणத்திலே तत्परமாகவுமாம் इति। प्रकरणवशेन स्वरूपादिसमर्पणविशिष्टरक्षाभरन्यास तात्पर्यवद्भवति चेत्यर्थः - आत्मनिक्षेपपरत्वेऽपि प्रमाणमाह - नमस् इति - समित्साधनकादीनां, समिदाज्यचरूपुरोडाशादि साधनकयागानां मध्ये नमसा य आत्मनोन्यासं देवे समर्पणमकरोत्। स स्वध्वरः स एव सर्वोत्कृष्टयागवानित्यर्थः - ''यस्समिधाय आहुतीयो वेदेन -

---

(सा.सं) துவக்கறுத்துக்கொண்டு, स्वस्य स्वार्थकर्तृत्वभोक्तृत्वे निरस्यदित्यर्थः - तत्परमिति - स्थानप्रमाणेन भरसमर्पणाभिधायकमित्यर्थः। तत्र प्रयोग प्राचुर्यं च दर्शयति - नमस्सित्यादिना - समिदाज्यादि द्रव्यक यज्ञानां मध्ये - नमसा, नमः पदेन। आत्मनो न्यासं निक्षेपं योऽकरोत् - स पुरुषः स्वध्वर इति - ''तस्यैवं विदुषो यज्ञस्यात्मा'' इत्यादौ ''यस्समिधाय आहुतिं वेदेन ददौ समर्त्यः। यो नमसा स्वध्वरः'' इति ऋक् - श्रुता वीरित इत्यर्थः -

**मू - नमस्कारात्मकं यस्मै विधायात्मनिवेदनम्'' इत्यादि**களாலும் **प्रसिद्धम् - (प्रणवम्** ஓர் **अक्षर**மாயிருப்பதொரு **पद**மாயிருக்க **अक्षर त्रय**மாக்கி இவ் **अक्षर**ங்களை தனித்தனியே **पद**ங்களாகக் கொண்டு ஒரு **वाक्यार्थमनुसन्धि**க்கையும் **नमस्**ஸென்று **प्रणामवाचि**யாயிருப்பதொரு **अव्यय**மாயிருக்க இத்தை **विभजि**த்து **वाक्यार्थ** கொள்ளுகையும் **निरुक्तबल**த்தாலே பெற்றது -)

---

(सा.दी) என்று இதுக்கு मूलश्रुति - नमस्कारात्मकमिति - नमस्कारात्मकं निवेदनं, नमश्शब्दोच्चारण-रूपमात्मसमर्पणமென்கை - नमस्ஸுக்கு स्वंप्रति शेषत्व निवृत्ति स्वस्य शेषित्वनिवृत्ति स्व स्वा -

---

(सा.स्वा) स स्वध्वरः, शोभनयज्ञ इतीरित इत्यर्थः। नमस्कारात्मकमिति - यस्मै नृसिंहाय नमस्कारात्मकं नमस्कारशब्दवाच्यमात्मनिवेदनमात्मसमर्पणं विधाय ''मुक्तदुःखोऽखिलान्कामानश्नुते तन्नमाम्यहम्'' इत्युत्तरार्धं स्पष्टार्थम्। नमसो अन्यार्थत्वे आत्मनिवेदनस्य नमस्कारात्मकत्व कथनं बाधितं स्यादित्यर्थः। இப்படி प्रणवத்துக்கும் नमस्ஸுக்கும் पदविभागं பண்ணி वाक्यार्थवर्णनं பண்ணினது கூடுமோ प्रणवमेकवर्णात्मकैकपदமாயும் नमस्ஸு वर्णद्वयात्मकैकाव्ययமாயும் இருக்கையாலே एकवाक्यமாய் अन्वयिக்க योग्यமாயிருக்க ''संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते''इति न्यायविरोधापत्त्या एकवर्णात्मकपदविभागपूर्वकं भिन्नभिन्नवाक्यार्थवर्णनं கூடாதே? என்ன वाक्यार्थभेदकथनं सप्रमाण மென்றருளிச்செய்கிறார் - प्रणवमित्यादिना - निरुक्तेति - प्रणवத்துக்கு ''तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त'' इति पूर्वोक्तछन्दोगश्रुतिवर्णविभागनिरुक्तिயென்றும் कठश्रुति अर्थभेदनिरुक्तिயென்றும் கருத்து - ''द्व्यक्षरस्तु भवेन्मृत्युः'' इत्यादिकं नमस्ஸுக்கு निरुक्तिயென்று கருத்து - ஆனாலும் नमस्ஸுக்கு स्वस्य स्वशेषत्व निवृत्तिயும், स्वकीयस्य स्वशेषत्वनिवृत्तिயும், पारतन्त्र्यं முதலான -

---

(सा.प्र) श्रुतिस्समित्साधनकेत्यनेन स्मारिता - प्रणवनमसोस्स्वरादिगणपठिततया अव्ययत्वेनाखण्डतया अनुज्ञानमस्कारबोधकत्वेन शाब्दिकसमयसिद्धत्वात् उक्तार्थपरत्वं कथमिति शङ्कामनूद्य परिहरति - प्रणवमित्यादिना - ''अकारेणोच्यते विष्णुस्सर्वलोकेश्वरो हरिः। उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा।। मकारस्तु तयोर्दास इति प्रणवलक्षणम् - अहमपि न मम - भगवत एवाहमस्मि - याश्च काश्चन कृतयो मम भगवति मम ममता नास्ति तासु -

---

(सा.वि) ददाश मर्तः - अग्नये यो नमसा स्वध्वरः'' इति तन्मूलभूतश्रुतिः - नमश्शब्दात्मकं, नमश्शब्दोच्चारणपूर्वकम् - ननु लोके प्रणवस्याव्ययत्वमेकपदत्वं नमश्शब्दस्य तथात्वं सिद्धम्। तद्विहाय कथमिह पृथक्पदत्वेन वाक्यत्वं स्वीकृत्य कथं व्याख्यानमित्यत्र निरुक्तिबलादित्याह - प्रणवमिति - பெற்றது, प्राप्नोति - ''अकार उकार मकार इति - अकारेणोच्यते विष्णुः'' इत्यादि प्रमाण -

---

(सा.सं) विभजिத்து, पदद्वयतया विभज्येत्यर्थः - ''ओमित्येकाक्षरं - नम इति द्वे अक्षरे'' इति स्थिते कथमेवमित्यत्राह - निरुक्तीति - ''सच्चिदानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् - अकार उकार मकार इति - तानेकधा समभवत्तदेतदोम्'' इति। इति निरुक्तिः, निरुक्ति बलத்தாலே इत्यनेन अभिप्रेता। अथ नमः पद निरुक्त्यर्थमाह। -

**मू** - நானுமெனக்குரியேனல்லேன் - என்னுடையதான **व्यापारादि**களும் எனக்கு **शेष**மன்று - இவையெல்லாம் **सर्वेश्वर**னுக்கே **शेष**மென்றிவை முதலான **अर्थ**ங்களெல்லாம் **नमश्शब्द**த்திலே **विवक्षित** மென்னுமிடம் **निरुक्त**த்தில் **नमस्कारप्रकरण**த்திலே ஓதப்பட்டது -

(सा.दी) तन्व्यादिनिवृत्तिरूपेणச் சொன்ன अर्थங்களெல்லாம் निरुक्तத்தில் नमस्कारप्रकरणத்திலே सिद्धங்களென்கிறார் - நானுமெனக்கு इत्यादिயால் - நானுமெனக்குரியேனல்லேனென்றும், अहं न मम என்றும் - என்னுடையதான इत्यादि - ''न मम किञ्चित्'' என்றும். இவையெல்லாம் इत्यादि - भगवत एवाहमस्मीत्यादिயால் ஓதப்பட்டதென்கை - இந் नमस्ஸுக்கு अहिर्बुध्न्यன் व्याख्यानं பண்ணின प्रक्रियैயை दर्शिப்பிக்கிறார் -

(सा.स्वा) अर्थங்களும் சொன்னது கூடுமோ? ஒரு वाक्यத்துக்கொரு अर्थமே विवक्षिக்கை उचितமாகையாலே अर्थान्तरविवक्षैக்கு प्रमाणமுண்டோ? என்னவருளிச் செய்கிறார். நானும் इत्यादिना। निरुक्तத்தில் इति। याःकाश्चन कृतयो मम भवन्ति ममतास्ति तासु न मम - भगवत एव ताः - अममोऽहं भगवति - अहमपि न मम - भगवत एवाहमस्मि इत्येवं ममतां योजयत्यतो नम इति निरुक्तத்திலே என்றபடி. निरुक्तबलத்தாலே नानार्थत्वमुपपन्नமென்று கருத்து - यद्वा, नमस् ஒரு अव्ययமாயிருக்க पदद्वयமாக்கி वाक्यार्थवर्णनमप्रमाणिकமன்றோ? என்னவருளிச்செய்கிறார். प्रणवमित्यादि - दृष्टान्तार्थम् - यथा प्रणवस्य एकपदत्वेऽपि एकवर्णात्मकपदविभागेन वाक्यार्थवर्णनं पूर्वोक्तनिरुक्तमूलम् - एवं नमसोऽपीति - नमस्ஸுக்கு निरुक्त மெங்ஙனே? என்னவருளிச்செய்கிறார். நானும் इत्यादिना - இங்கு प्रणवमित्यादि निरुक्तबलத்தாலே பெற்றதென்கிற पर्यन्तं श्रीभाष्यं तिरुमलाचार्यர் व्याख्यानं பண்ணாமையாலேயும், प्रणवத்துக்கு अक्षरत्रयात्मकत्वத்திலும், शेषत्वरूपवाक्यार्थवर्णनத்துக்கும், बहुसाधकप्रमाणमुपन्यस्तமாகையாலே शङ्कै उदिயாமையாலேயும், नमस्ஸுக்கு अर्थभेदத்தில் நானும் इत्यादि वाक्यं पर्याप्तமாகையாலேயும் प्रक्षिप्तமென்று தோற்றுகிறது - सद्भिर्यतारुच्यङ्गीकार्यम्। ஆனாலும் स्वतन्त्रनमस्ஸுக்கு सामान्यतो निरुक्तिயிலே अनेकार्थं சொன்னாலும் मूलमन्त्रस्थनमस्ஸுக்கு अनेकार्थकतैயில் प्रमाणமுண்டோ? என்னவருளிச் செய்கிறார் -

(सा.प्र) भगवत एव ता इत्यादि निरुक्तिबलात्सिद्धमित्यर्थः - நானுமெனக்குரியேன் इत्यादेरर्थो अहमपि न ममेत्यादिना दर्शितः - नमश्शब्दस्यानेकार्थत्वं प्रमाणत एवावगमयति -

(सा.वि) बलात्सिद्ध्यतीति भावः - नमश्शब्दोक्तार्था निरुक्ते ग्रन्थे स्पष्टमेव श्रूयन्त इत्याह - நானுமெனக்குரியேன் इति - ஓதப்பட்டது, आम्नायते - अहमपि न मम - भगवत एवाहमस्मि - याश्च काश्चन कृतयो मम भगवति मम ममता नास्ति - भगवत एवेत्यादिरित्यर्थः। एतन्नमसोऽहिर्बुध्न्य -

(सा.सं) நானும் इत्यादिना - याः काश्चन कृतयो मम भवन्ति - ममता नास्ति तासु मम भगवत एव ताः - अतोऽहं भगवत एवाहमस्मीत्येवं ममतां योजयति न ममेति निरुक्त्यभिप्रायानिरुक्तिயிலோதப்பட்டது इत्युक्तिः - न केवलं नमसश्श्रौतनिर्वचनमेवानेकार्थपरत्वे मानम्। संहिता निर्वचनमपीत्यभिप्रायेणाहिर्बुध्न्योक्त योजनात्रयं दर्शयति -

**मू - இந் नमश्शब्दத்துக்கு स्थूलसूक्ष्मपरங்களென்று மூன்று अर्थங்களை வகுத்து अहिर्बुध्न्यன் व्याख्यानं பண்ணினான்**

**''प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका स्वतः।**
**उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते॥**
**लोके चेतनवर्गस्तु द्विधैव परिकीर्त्यते।**
**ज्यायांश्चैव तथाज्यायान् नैवाभ्यां विद्यते परः॥ -**

---

(सा.दी) இந் नमश्शब्दத்துக்கு इत्यादियால் - स्थूलार्थं सूक्ष्मार्थं परமான अर्थமென்று विभजित्தென்ற படி. இனி संहितावचनங்களையெடுக்கிறார் - प्रेक्षावत इत्यादि - இந்த स्थूलार्थத்தைக் காட்டுகிறார் - प्रेक्षावत इति - स्थूलयोजनैயிலே सपरिकरात्मनिक्षेपं சொல்லப்படுகிறது. முந்த अङ्गियான आत्मनिक्षेपं नमस्ஸுக்கு अर्थமென்கிறார் - प्रेक्षावत इति - प्रेक्षावतः बुद्धिमतः चेतनனுடைய என்றபடி. स्वस्मादुत्कृष्टमन्यमुद्दिश्य स्वतःप्रह्वीभावात्मिका, प्रयोजनार्थமன்றியே प्रह्वीभावरूपाया प्रवृत्तिः - प्रह्वीभावः, नीचीभावः - तन्नमः परिगीयते, नमश्शब्दार्थமென்று சொல்லப்படுகிறது - இனி प्रह्वीभाव सिद्ध्यर्थं चेतनवर्गद्वैविध्यத்தைக் காட்டுகிறார் - लोक என்று - ज्यायान् என்றும் अज्यायान् என்றும் द्विविधं चेतनवर्गம் -

---

(सा.स्वा) இந்नमश्शब्दத்துக்கு इति - வகுத்து इति - स्थूलार्थமென்றும், सूक्ष्मार्थமென்றும், परार्थ மென்றும், विभजित्து என்றபடி - स्थूलार्थप्रतिपादकवचनங்களை प्रथमமெடுக்கிறார். प्रेक्षावत इत्यादिना - प्रेक्षावतः, बुद्धिमतश्चेतनस्य। स्वस्मात्परम्, अन्यमुत्कृष्टमुद्दिश्य। स्वतः प्रह्वीभावात्मिका, प्रयोजनाभिसन्धिम्नानि नीचीभावात्मिका - प्रवृत्तिः, कायप्रवृत्तिर्या तन्नम इति गीयते। इदमेव नमश्शब्दार्थ इत्यर्थः। प्रह्वीभावसिद्ध्यर्थं चेतनद्वैविध्यमाह - लोक इति - लोक्यते अनेनेति लोकः - प्रमाणवर्गः - शास्त्रम् - शास्त्रे चेतनवर्गो ज्यायान्, अज्यायांश्चेति द्विविधः परिकीर्त्यते - आभ्यां द्वाभ्यां परोऽन्यो नैव विद्यते - ज्यायसो लक्षणमाह -

---

(सा.प्र) இந் नमश्शब्दத்துக்கு इत्यादिना - வகுத்து, भेदेन प्रदर्श्य - नन्तृनन्तव्यतात्मक इत्यन्तेन प्रह्वीभावात्मकोऽर्थस्सोपपत्तिकं प्रदर्शितः - परः, अन्यः -

---

(सा.वि) संहिताव्याख्या प्रकारेणानेकार्थास्सन्तीत्याह - இந் नमश्शब्दத்துக்கு इति - வகுத்து, स्थूलार्थस्सूक्ष्मार्थः परार्थ इति विभज्य - संहितावचनानि दर्शयति - प्रेक्षावत इत्यादिना - प्रथमं स्थूलार्थमाह। प्रेक्षावत इति - अनन्यशरणत्वादि बुद्धिमतः प्रह्वीभावात्मिकाया प्रवृत्तिः, आत्मनिक्षेपवर्ग नैच्यवृत्तिस्तन्नमश्शब्दार्थः - इह भावव्युत्पत्तिरभिमता - नमतेर्भावे औणादिक असुन्प्रत्ययः - लोके चेतनवर्गस्त्वित्यादिकं एतदुपपादकम् -

---

(सा.सं) இந்नमश्शब्दத்துக்கு इत्यादिना। तत्र स्थूला शेषभूतस्य स्वतः प्राप्तशेषवृत्तिपूर्वकसाङ्गभरन्यासपरा - सूक्ष्मा निरपेक्षस्वातन्त्र्यादिनिवृत्तिपरा - परा सिद्धोपायपरा। तत्राद्यायां भरसमर्पणस्य शाब्दत्वं शेषवृत्तेरार्थत्वं चानुसन्धेयम्। स्थूलमाह - प्रेक्षावत इत्यादिना। प्रेक्षावतः, शेषत्वादिज्ञानवतः। स्वतः उत्कृष्टत्वं परस्य विशेषणम् - प्रह्वीभावः करणत्रयकृतोऽप्युच्यते - स च नीचीभावः - इत्थमुक्तं नमश्शब्दार्थं विवरीतुं चेतनवर्गद्वैविध्यमाह - लोके इति - परः, अन्यः -

**मू - कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति।**
**शब्दस्तं मुख्यया वृत्त्या ज्यायानित्यवलम्बते।।**
**अतश्चेतनवर्गोन्यस्स्मृत:प्रत्यवरोबुधैः।**
**अज्यायांश्चानयोर्योगश्शेषशेषितयेष्यते।।**
**अज्यायांसोऽपरे सर्वे ज्यायानेको मत:परः।।**
**नन्तृनन्तव्यभावेन तेषां तेन समन्वयः।।**
**नन्तव्य:परमश्शेषी शेषा नन्तार ईरिताः ।**

---

(सा.दी) மூன்றாம் विधமில்லையென்கை - अथ ज्यायाனுக்கு लक्षणं சொல்லுகிறான் - कालत इति-யாதொருவனில் कालप्रयुक्त प्रकर्षமும் गुणप्रयुक्तप्रकर्षமுமுண்டு அவனை ज्यायान् என்கிற शब्दं मुख्यமாகச் சொல்லுமென்கை - अत इति-अत:, இந்த ज्यायाனைக்காட்டில் अन्यனான चेतनवर्गं प्रत्यवरனென்றும், अज्यायान् என்றும், स्मरिக்கப்பட்டதென்கை. अनयोस्संबन्धं शेषशेषिभावेनेष्यते- இனி अज्यायुस्ஸுக்களையும், ज्यायाனையும், शृङ्गग्राहिकயாகக் காட்டுகிறார் - अज्यायांस इति- अपरे सर्वे अज्यायांस इत्युच्यन्ते -पर: पुरुष एक: ज्यायानिति मत:,तेषाम् आत्मनाम् - तेन , परेण। संबन्ध:, नन्तृनन्तव्यभावेनैव என்கை- शेषा:,आत्मान: नन्तार: -

---

(सा.स्वा) कालत इति - यत्र, चेतने - कालप्रयुक्तोत्कर्षः नित्यत्वमिति यावत् - इदं देशप्रकर्षस्याप्युपलक्षणम् - देशप्रयुक्तोत्कर्षः, विभुत्वम् - गुणकृतोत्कर्षः- वस्तुपरिच्छेदरहितत्वम् -त्रिविधपरिच्छेद रहितत्वमित्यर्थः। तिष्ठति । ज्यायानित्ययं शब्द: तं चेतनं मुख्यया वृत्यैव लम्बते, तदभिधायको भवतीत्यर्थ:- अत: उत्कृष्टचेतनात् - अन्यश्चेतनवर्ग: प्रत्यवर इत्यज्यायानिति च बुधै: स्मृत:- अनयो: उत्कृष्टानुत्कृष्टयोश्चेतनयो: - योग:, संबन्ध: - शेषशेषितयेष्यते, शेषशेषिभावस्संबन्ध इत्यर्थ:- ज्यायानिव किमज्यायानप्येक इति शङ्कायामुभावपि शृङ्गग्राहिकयाह - अज्यायांस इति - अपरे सर्वे बहव: - अज्यायांस: - पर: उत्कृष्ट एक: परमात्मा ज्यायानिति मत इत्यर्थ:-तेषाम् , अज्यायसां - तेन ,ज्यायसा - नन्तृनन्तव्यभावेनैव समन्वय:, संबन्ध इत्यर्थ: - को वा शेषी नन्तव्य: को वा शेष: नन्ता इत्यत्राह - नन्तव्य इति - परम: सर्वोत्कृष्ट; - नन्तव्यश्शेषी च - अर्थादितरे अपकृष्टा:शेषा नन्तारश्चेरिता:। अयं नन्तृ -

---

(सा.प्र) अतोऽन्य:,ज्यायसोऽन्य:। शेषशेषितया योग:,शेषशेषिभावेन संबन्ध इत्यर्थ:। एवं ज्यायस्त्वं प्रह्वीभावहेतुरित्युक्त्वा शेषित्वं च हेतुरित्यत्राह - नन्तव्य इत्यादिना।

---

(सा.वि) अतश्चेतनवर्गोऽन्य:,अत:ज्यायसोऽन्य:। प्रत्यवर:,निकृष्ट:। शेषशेषितया योग:, शेषशेषिभावेन संबन्ध इत्यर्थ:- एवं ज्यायस्त्वं प्रह्वीभावहेतुरित्युक्त्वा शेषित्वं च हेतुरित्याह - नन्तव्य इत्यादिना - समन्वयस्संबन्ध:-

---

(सा.सं) अतोऽन्य:,ज्यायसोऽन्य: प्रत्यवर इति अज्यायानिति च व्यवह्रियत इत्यर्थ:। अनयो:, ज्यायोऽज्यायसो:। एक एव पर: पुरुषो ज्यायान् । तदन्ये सर्वे अज्यायांस: । समन्वय:, संबन्ध:। नन्तृनन्तव्यभावेनैव संबन्ध इत्यर्थ:।

**मू - नन्तृनन्तव्यभावोऽयं न प्रयोजन पूर्वकः ।।**
**नीचोच्चयोस्स्वभावोऽयं नन्तृ नन्तव्यतात्मकः ।**
**उपाधिरहितेनायं येन भावेन चेतनः ।।**
**नमती ज्यायसे तस्मै तद्वा नमनमुच्यते ।**
**भगवान्मे परो नित्यमहं प्रत्यवरस्सदा ।।**
**इति भावो नमः प्रोक्तो नमसः कारणं हि सः ।**

---

(सा.दी) न प्रयोजनपूर्वकः, सोपाधिको न भवतीत्यर्थः- अपि तु नीचोच्चयोः स्वभावोऽयं संबन्धः- அன்றியே இந் नमनத்துக்குக் कारणभूतமான शेषशेषिभावानुसन्धानமே नमश्शब्दार्थமென்று श्लोकद्वयத்தாலே சொல்லுகிறான் - उपाधिरहितेनेति- अयं चेतनः उपाधि रहितेन, प्रयोजनान्तरापेक्षैயில்லாத யாதொரு शेषशेषिभावानुसन्धानத்தால் அந்த ज्यायाனுக்கு नमस्करिக்கிறான் - तद्वा नमनं, அந்த शेषशेषि भावानुसन्धानமே नमस्कारமென்னுமாம் என்கை - இப்पक्षத்தில் येन नमति तन्नमन மென்று व्युत्पत्तिः - पूर्व योजनैயில் नमनं नमः என்று व्युत्पत्तिः - येन भावेनेत्युक्तத்தை विशदीकरिக்கிறார். भगवानिति- भगवान्मे नित्यं परः, शेषी - अहं सदा प्रत्यवरः, नीचः- शेषभूतனென்றபடி - इति இப்ஶेषशेषि भावः शेषशेषिभावानुसन्धानமென்றபடி - அது करणव्युत्पत्त्या नमः என்று சொல்லப்படுமென்கை - இதுக்கு करण व्युत्पत्त्या नमश्शब्दवाच्यत्वத்தை उपपादिக்கிறான் -

---

(सा.स्वा) नन्तव्य भावः राजभृत्यादिवत्किमौपाधिक इत्यत्राह - नन्तृनन्तव्येति- अयं नन्तृनन्तव्यभावः- न प्रयोजनपूर्वकः न सोपाधिकः - अपितु नीचोच्चयोः, जीवपरयोः - अयं नन्तृनन्तव्यतात्मकस्संबन्धः - स्वभावः, स्वभावप्रयुक्त इत्यर्थः- एतावता नीचीभावकायवृत्तेस्स्वयं पुरुषार्थतया नमश्शब्दार्थत्वमुक्तम्। इदानीं कायिकादीनि च प्रतिकारणस्य शेषत्वानुसन्धानस्य नमश्शब्दार्थत्वमाह उपाधिरहितेनेति। उपाधिरहितेन, प्रयोजनान्तराभिसन्धिरहितेन- येन भावेन - शेषशेषिभावानुसन्धाने- चेतनो ज्यायसे नमति,कायतः प्रह्वीभवति। दत्वा, शेषशेषिभावानुसन्धानं वा - नमनमुच्यते- तदुपपादयति- भगवानिति - भगवान् मे नित्यं परः, शेषी, अहं सदा प्रत्यवरः, शेषभूतः - इति भावः।

---

(सा.प्र) उपाधिरहितेनेत्यारभ्य द्वाभ्यां मानसव्यापारः प्रह्वीभावहेतु नमश्शब्दार्थः इति दर्शितम्। भावेन, बुद्ध्येत्यर्थः। द्वितीयश्लोकेन मानसव्यापारस्वरूपं दर्शितम्। एवं नमश्शब्दस्य ''उणादयो बहुलम्'' इत्यपेक्षितसर्वार्थ बोधकतयोक्तौणादिकभाव करणार्थासुन्प्रत्ययान्तत्वेन-

---

(सा.वि) न प्रयोजनपूर्वक इति, स्वार्थप्रयोजनापेक्षापूर्वको न भवति। किन्तु स्वस्वामिभावसंबन्धप्रयुक्त इत्यर्थः- एवं नमश्शब्दस्य भावव्युत्पत्त्या स्वस्वामिभावसंबन्धप्रयुक्तात्मसमर्पणरूपप्रह्वीभावात्मक बुद्धिरूपत्वमुक्त्वा करणव्युत्पत्त्या प्रह्वीभावहेतुभूतशेषशेषिभावसंबन्धज्ञानरूपमानसव्यापारमपि भवतीत्याह - उपाधिरहितेनेति द्वाभ्याम् - भावेन बुद्ध्येत्यर्थः- द्वितीयश्लोकेन मानसव्यापारस्वरूपं दर्शितम्- नमःप्रोक्तः नम्यत अनेनेति नम इति व्युत्पत्त्या शेष शेषि भावसंबन्धज्ञानरूप भावः प्रोक्त इत्यर्थः-

---

(सा.सं) न प्रयोजनपूर्वकः, नोपाधिपूर्वकः। उपाधिरहितेन, प्रयोजनान्तराभिसन्धिरहितेन। नमति, वाचा कायेन वा प्रह्वी भवति। भावेनेत्यस्य विवरणं भगवान् मे इति।-

मू - **नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम् ।।**
**प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् ।**
**अतो वा नम उद्दिष्टं यत्तन्नामयति स्वयम् ।।**

(सा.दी) नमसः कारणं हि स इति - सः शेषशेषिभावः - नमसः, नमनस्य - कारणम् । इனி நமஸ்ஸுக்கு व्युत्पत्यन्तरं காட்டுகிறான் - नामयतीति ।अपि वा,अथवेत्यर्थः - देवं नामयति, प्रह्वीभावयति ! इदं नमः, शरणागतिः । अतो तन्नम इत्युद्दिष्टम् - இனி நமஸ்ஸினுடைய பூர்ணத்வத்தைக் காட்டுகிறான் -

(सा.स्व) एतदनुसन्धानं नमः प्रोक्तः । कुत इत्यत्राह ? नमस इति - नमसः, नमनक्रियायाः - सः, शेषत्वानुसन्धानात्मक भावः-हियस्मात्कारणात्-अनेन पूर्वयोजनायां भावव्युत्पत्त्या नमनं नमः - अस्यां तु योजनायां नम्यते येनेति करणव्युत्पत्त्या नमनकारिणीभूतशेषशेषिभावानुसन्धानमेव नमश्शब्दार्थ इत्युक्तं भवति - इतः परं शरणागतिरूप साध्योपायार्थकत्वमाह - नामयतीति- अपि वा अथवा - यत्स्वयं नामयति- अतो वा नामनकर्तृत्वादेव नम इति - उद्दिष्टं तच्छरणवरणम् - ध्रुवम् , निश्चितम्। देवं, सर्वोत्कृष्टं नामयति -तद्विवृणोति- प्रह्वीभावयतीति-तदुपपादयति-प्रह्वीभवतीति - परः, उत्कृष्टः - नीचे नैच्यं विलोकयन् प्रह्वीभवति हि- अस्यां योजनायां शरणागतिरेव नमश्शब्दार्थ इत्यर्थः-

(सा.प्र) शेषवृत्त्याख्यनमनात्मकप्रणामवाचित्वमुक्त्वा प्रयोजककर्तरि विहित णिजर्था सुन्नन्तया वा शेषवृत्त्याख्यनमनपरत्वमित्याह । नामयत्यपीत्यादिना ।शेषवृत्तिरूपं नमनं शेषिणं प्रह्वीभावयति, अनुग्रहैकप्रवणधियं भगवन्तं करोति। प्रह्वीभवतीत्यादि - हि यस्मात्पर उत्कृष्टो नीचे नैच्यं प्रणामं विलोकयन् स्वयमपि प्रह्वीभवतीत्यर्थः। करणत्रयजन्यप्रह्वीभावस्य प्रत्येकं नमश्शब्दार्थैकदेशत्वं दर्शयन् ''अहं मद्रक्षणभरो-

(सा.वि) नमसः कारणं हि सः, प्रह्वीभावात्मकशरणागतेः कारणं शेषशेषिभावसंबन्धज्ञानमित्यर्थः-तद्वा नमनमित्यत्रापि नम इत्यनेनेति नम इति नमश्शब्दार्थपरतया करणव्युत्पत्तिर्द्रष्टव्या - अथ हेतुमण्णिजन्तात्कर्तरि आसुन्नन्तव्युत्पत्त्या शेषवृत्तिरूप शरणागतिपर इत्याह - नामयत्यपि वेति - शेषवृत्ति रूप नमनं कर्तृ- शेषिणं प्रह्वीभावयति,अनुग्रहैक प्रवणधियं भगवन्तं करोति यत् - तस्मात् कारणात् । परः,उत्कृष्टः-नीचे नैच्यम्, प्रणामं विलोकयन् स्वयमपि प्रह्वीभवति - वशीकृतो भवति - तत्तस्मात्कारणान्नामयति - अतो वा नम इत्युद्दिष्टमित्यन्वयः - करणत्रयजन्यप्रह्वीभावस्य प्रत्येकं नमश्शब्दार्थैकदेशत्वं दर्शयन् ''अहं मद्रक्षणभरो मद्रक्षणफलं तथा । न मम-

(सा.सं) नमसः, प्रह्वीभावस्य। भावो मानसः प्रह्वीभावः। त्रिविधस्यापि परवशीकरणत्वमाह। नामयत्यपीति। ध्रुवमिति। ''ध्रुवमचलममृत''मिति श्रुति प्रतिपन्नमित्यर्थः। इममेवार्थमुपपादयति। प्रह्वीभवतीति - रक्षणोपयुक्तदया परवशो भवतीत्यर्थः। उपाधिरहितेनेत्यनेन येन नमति तन्नम इति व्युत्पत्तिरुक्ता। नामयत्यपीत्यनेनोक्तं व्युत्पत्तिमुपसंहरति। अत इति।

**मू - वाचा नम इति प्रोच्य मनसा वपुषा च यत् ।**
**तन्नमःपूर्णमुद्दिष्टमतोऽन्यं न्यूनमुच्यते ।।**
**इयं करणपूर्तिस्स्यादङ्गपूर्तिमिमां शृणु ।**
**शाश्वती मम संसिद्धिरियं प्रह्वी भवामि यत् ।।**
**पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा ।**
**इत्यङ्गमुदितं श्रेष्ठं फलेप्सा तद्विरोधिनी ।।**

---

(सा.दी) वाचेति । वाचा, वाक्காலும், मनस्ஸாலும், वपुस्ஸாலும் யாதொரு नमनं करणत्रयத்தாலும் பண்ணப்படுகிறது அந்த नमस्कारं पूर्णम् । अतो अन्यत्, एकद्विकरणकं न्यून नमस्कारமென்றபடி - இப்படி पूर्णமான शरणागतिயைச் சொல்லி அதுக்கு अङ्गैः पूर्तिயும் சொல்ல उपक्रमिக்கிறான். इयमिति - करणपूर्तिः, साधनस्य शरणागतिरूपस्य पूर्तिः என்று अनुवादம் । अङ्गपूर्तिमिति, अङ्गங்களுடைய पूर्तिசொல்லப்படுகிறதென்கை - அதுக்கு मोक्षार्थமான आत्मनिक्षेपத்தில் नियतமான फलत्यागरूपाङ्गத்தைக் காட்டுகிறான் - शाश्वतीति । अथ ''आनुकूल्यस्य सङ्कल्पः'' इति श्लोकोक्तक्रम वैपरीत्येन कार्पण्याङ्गத்தை -

---

(सा.स्वा) शरणागतिरूपनमसःपूर्णत्वमाह - वाचेति - वाचा नम इति प्रोच्य,उक्त्वा । मनसा वपुषा यच्छरणवरणं क्रियते वाचा करणमन्त्रमुच्चार्य मनसा शरणागतिमनुष्ठाय तत्परीवाहतया कायेन च तद्व्यञ्जक व्यापारः क्रियते- तन्नमः,तच्छरणवरणं पूर्णमुद्दिष्टम्- अतोऽन्यत्,एकेन करणेन द्वाभ्यां करणाभ्यां क्रियते यत्तदपूर्णं न्यूनमुच्यते-उपायतया विहितशरणागतिरियं करणपूर्तिस्स्यात् । पूर्वोक्तकरणपूर्तिरित्यर्थः । इतः परमिमां वक्ष्यमाणामङ्गपूर्तिं शृणु ।सावधानता सिद्ध्यर्थमिदं कथनम् । प्रथमं सात्विकत्यागमाह । शाश्वतीति । परम्, उत्कृष्टम् । परं भगवन्तमुद्दिश्य प्रह्वीभवामीतियत् । इयं शरणागतिः । मम शाश्वती संसिद्धिः इयमेव परमप्रयोजनरूपा । मे, मम।इतः, अस्माच्छरणवरणादन्यथासिद्धिः, प्रयोजनं नास्ति । अनेन कर्तृत्व त्यागफलत्यागरूप सात्विकत्यागरूपमङ्गमुक्तमिति श्रेष्ठमङ्गमुक्तमित्यर्थः । एतस्याङ्गस्य फलेप्सा विरोधिनी ।

---

(सा.प्र) मद्रक्षणफलं तथा । न मम श्रीपतेरेव'' इत्यनुसन्धानात्मकमानसप्रह्वीभावस्य कायिक वाचिक प्रह्वीभावयोगे पूर्णोपायत्वमाह । वाचा नम इत्यादिना ।

---

(सा.वि) श्रीपतेरेव'' इत्यनुसन्धानात्मक मानस प्रह्वीभावस्य कायिक वाचिक प्रह्वीभावयोगे पूर्णोपायत्वमाह - वाचानम इत्यादिना - एवं करणपूर्तिमुक्त्वाङ्गपूर्तिमाह- इयं करणपूर्तिस्स्यादिति - पुरुषं परमुद्दिश्य,परमपुरुषमुपायत्वेनानुसन्धायस्थितिर्या इयमेव मम सिद्धिः- इतोऽन्यथा फलं नास्तीत्यर्थः- इदं फलत्यागरूपं प्रथममङ्गम्-एतस्य विरोधिनी फलेप्सा-

---

(सा.सं) करणपूर्तिः, अङ्गिपूतिः। समर्पणे करणत्रय सारूप्यं पूर्तिरिति भावः। शाश्वतीति। ममाद्य पूर्वोक्तत्रिविधप्रह्वीभावैकप्रयोजनकस्य सिद्धिः फलम्- तस्य मोक्षेऽपि यावदात्मभावितया स्थिरफलत्वाच्छाश्वतीत्वम् ।इयमित्युक्तायाः वशिक्रियायाः प्रह्वीभवनरूपायाः सर्वतोमुखमभ्यर्हितत्वं समित्युपसर्गार्थः । परःपुरुष एव प्रधानफली । मम तु फलं प्रह्वीभवनमेवेति न मे सिद्धिरितो अन्यथेत्युक्तिः - एवं फलत्यागरूपाङ्गस्य -

**मू - अनादिवासनारोहादनैश्वर्यात्स्वभावजात्। मलावकुण्ठितत्वाच्च दृक्क्रियाविहतिर्हि या।।
तत्कार्पण्यं तदुद्बोधो द्वितीयं ह्यङ्ग (मीदृशं) मिष्यते। स्वस्वातन्त्र्यावबोधस्तु तद्विरोध उदीर्यते।।
परत्वे सति देवोऽयं भूतानामनुकम्पनः। अनुग्रहैकधीर्नित्यमित्येतस्तु तृतीयकम्।।**

---

(सा.दी) द्वितीयाङ्गமாகச் சொல்லுகிறான். अनादिति-स्वाभाविकादनीश्वरभावात्,पारतन्त्र्यात् என்கை. मलावकुण्ठितत्वाच्च, अविद्यादिகளால் आक्रमिக்கப் பட்டவனாகையாலும், दृक्क्रिययोः, ज्ञानशक्त्योः- उपायान्तरोपयुक्तयोः- विहतिः, सङ्कोचः- अयमेवाकिञ्चनत्वरूपाधिकारः- तदुद्बोधः, अज्ञोऽहमशक्तोऽहमिति ज्ञापनम्। द्वितीयमङ्गं तत्कार्पण्यமென்கை - இதின் - विरोधिயைக் காட்டுகிறான். स्वस्वातन्त्र्येति - अहं समर्थः என்னும் ज्ञानम्। இனி तृतीयमङ्गं विश्वासाख्यं காட்டுகிறான். परत्व इति-सर्वस्मात्परस्सन्नपि भूतानामनुकम्पनशीलत्वादेतद्व्याजमात्रेण मय्यप्यनुग्रहैकधीर्भवति- अवश्यं रक्षिष्यतीति बुद्धिः- विश्वासமென்றபடி - இதின் विरोधिயைக் காட்டுகிறான் -

---

(सा.स्वा) कार्पण्यमङ्गमाह। अनादीति।अनादि वासनारोहात्, अनादि दुर्वासनाक्रान्तत्वात् स्वभावजात्, स्वतस्सिद्धात् - अनैश्वर्यात्, पारतन्त्र्यात् - असामर्थ्यादित्यर्थः- मलावकुण्ठितत्वाच्च, मनोनैर्मल्याभावाच्च- दृक्क्रिययोः, उपायान्तरोपयुक्तयोर्ज्ञानशक्त्योः विहतिर्या, सङ्कोचः - तत्कार्पण्यम् - अकिञ्चनत्वरूपोऽधिकारः - तदुद्बोधः, - अज्ञोऽहमशक्तोऽहमिति ज्ञानम् - द्वितीयं कार्पण्यं नाम अङ्गमित्यर्थः - एतस्य कार्पण्यस्य विरोधी स्वस्वातन्त्र्यावबोधः, तद्विरोधः, तेन विरोधो यस्य तद्विरोध इत्यर्थः। तृतीयमङ्गं विश्वासमाह - परत्वे सतीति। परत्वे सत्वेऽप्ययं देवः - भूतानामनुकम्पनः, अनुकम्पनशीलत्वात् - मय्यनुग्रहैकधीः, -

---

(सा.प्र) अनैश्वर्यात्। अशक्तेः। ''ईश ऐश्वर्ये'' इति हि धातुः। मलावकुण्ठितत्वात्, वासनाशक्त्योर्हेतुभूतकर्मणा तिरोहितत्वादित्यर्थः - दृक्क्रियाविहतिः, ज्ञानयोग कर्मयोगयोरभावः, उपायान्तराभाव इत्यर्थः। तदुद्बोधः, कार्पण्यं, ईदृशं तद्द्वितीयमङ्गं हीत्यन्वयः - हि, अनन्यशरणस्तवेत्यादिषु प्रसिद्धमित्यर्थः - तद्विरोध इति, तद्विरोधीत्यर्थः - परत्वे सतीत्यादि।

---

(सा.वि) कार्पण्याख्यं द्वितीयमङ्गमाह - अनादि वासनारोहादिति - मलावकुण्ठितत्वात्, अविद्याग्रस्तत्वात्- दृक्क्रियाविहतिः, कर्मयोगाद्यनुकूलज्ञानशक्त्यादि विरहः। इदं ह्यकिञ्चनत्वमधिकारः -तदुद्बोधः, अजोऽहमिति ज्ञापनं कार्पण्यम्- एतद्विरोधिनं दर्शयति। स्वातन्त्र्येति। विश्वासाख्यं तृतीयमङ्गमाह - परत्व इति - एतद्विरोधिनमाह -

---

(सा.सं) सर्वनिवृत्तिधर्मावश्यापेक्षिततया श्रेष्ठत्वम्। फलेप्सा, प्रधानफलित्वं स्वस्येत्यभिसन्धिः - अनादीति - वासना, विषयवासना - स्वीयं सर्वं स्वाधीनं यस्य स ईश्वरः - अनधीन देहेन्द्रियादिकत्वस्वभावकत्वात् - मलं, कामाभिष्वङ्गमनोऽवसादोद्धर्षादयः - दृक्क्रियाशब्दाभ्यां भक्तियोगकर्मयोगावुच्येते। विहतिः, तदुचित ज्ञानशक्तिविधुरता - तदुद्बोधः, दृक्क्रियाविहतिख्यापनम्। स्वस्मिन्विद्यमानस्य आकिञ्चन्यस्य विरोधी स्वस्वातन्त्र्यावबोधः। परत्वे सति देवोऽपि कृपापरतन्त्रत्वाद्व्याजमात्रेणानुग्रहैकधीः नित्यमित्येतद्विश्वासात्मकमङ्गं तृतीयम्। -

**मू - उपेक्षको यथा कर्म फलदायीति या मतिः। विश्वासात्मकमेतत्तु तृतीयं हन्ति वै सदा।।**
**एवम्भूतोऽप्यशक्तस्सन् न त्राणं भवितुं क्षमः। इति बुद्ध्यास्य देवस्य गोप्तृशक्तिनिरूपणम्।।**
**चतुर्थमङ्गमुद्दिष्टममुष्यव्याहतिःपुनः। उदासीनो गुणाभावादित्युत्प्रेक्षानिमित्तजा।।**

---

(सा.दी) उपेक्षक इति-''न मे द्वेष्योऽस्ति न प्रियः'' इत्युक्तरीत्या देवस्योपेक्षकत्वं स्वभावः। किन्तु कर्मानुगुणफलप्रदः। दुष्कर्माणि बहूनि गुरूणि च । प्रपत्तिस्तु लघ्वी सकलपापनिवृत्तिपूर्वेष्टप्राप्तेर्नानुरूपसाधनम्। दुष्कर्मफलं तु तदनुरूपमतो मादृशस्य न देवो रक्षको भवतीति बुद्धिः - अथ गोप्तृत्ववरणं नाम चतुर्थमङ्गं காட்டுகிறான். एवंभूतोऽपीति। अनुग्रहैकधीरपि कश्चिदशक्तस्सन् शक्त्यभावाதென்றபடி. त्राणं भवितुं नार्हतीति सामान्यबुद्ध्यास्मिन्नपि देवे तादृशबुद्धिपरिहाराय शक्तिनिरूपणम्। गोप्तृशक्तिनिरूपणं नाम? गोप्तृत्वशक्तिस्तवास्तित्वं मे गोपायिता भवेति विज्ञापनமென்றபடி- अमुष्याङ्गस्य व्याहतिः। विरोधस्तु, गुणाभावादिति शक्तिरूप गुणाभावात् என்கை. उदासीनो भवतीति बुद्धिः, रक्षको न भवतीति बुद्धिः என்றபடி -

---

(सा.स्वा) मयानुष्ठित व्याजमात्रेण मय्यनुग्रहं करिष्यति - रक्षिष्यतीति बुद्धिरित्येतत् तृतीयमङ्गम्- अन्यविरोधिनमाह-उपेक्षक इति। ''उपेक्षको यथाकर्मफलदायीति या मतिः। नमे द्वेष्योऽस्ति न प्रियः'' इत्युपेक्षकस्स्वभावस्स्वल्पकर्मणः महत्तरं फलं न ददात्येवेति मतिस्तृतीयं विश्वासात्मकमङ्गं - सदा हन्ति। चतुर्थमङ्गं गोप्तृत्ववरणमाह - एवमिति - एवंभूतोऽपि अनुग्रहैकधीरपि - अशक्तस्सन्, असमर्थस्सन् - त्राणं भवितुं, त्राता भवितुम्। न क्षम इति बुद्ध्या निवर्त्यया हेतुभूतया एतद्बुद्धिनिवृत्त्यर्थमस्य देवस्य गोप्तृशक्तिनिरूपणं त्वयि गोप्तृत्वमस्ति। मम गोप्ता भवेति निरूपणं बुद्ध्या चतुर्थमङ्गमुद्दिष्टम् - अमुष्य, गोप्तृत्ववरणस्य - व्याहतिः, विशेषेणाहतिर्यस्यास्साविरोधिनी गुणाभावादुदासीनः, शक्त्यभावादुदासीन इति-

---

(सा.प्र) परत्वनिरवधिककारुण्यवत्त्वानुग्रहैकप्रवणत्वज्ञानं विश्वासहेतुरिति भावः। गोप्तृशक्तिनिरूपणमिति। निरूपणपूर्वकं गोप्तृत्ववरणमङ्गमित्यर्थः -

---

(सा.वि) उपेक्षक इति - उपेक्षकः, उदासीन स्वभावः। कर्मणि कृते कर्मानुरूप फलप्रदायी - अतो मम सकलपापनिवर्तनोपायासमर्थस्य रक्षको न भवतीत्यविश्वासः-विश्वासात्मकं तृतीयमङ्गं त्विहास्तीत्यर्थः। गोप्तृत्ववरणं नाम चतुर्थमङ्गमाह - एवंभूतोऽपीति एवंभूतोऽपि, अनुग्रहैकशीलोऽपि - अशक्तस्सन् त्राणं भवितुं न क्षमः - रक्षको न भवतीति बुद्ध्या एतादृशसामान्यबुद्धिप्रसक्त्या तादृशबुद्धि प्रसङ्गपरिहारायेत्यर्थः। गोप्तृशक्तिनिरूपणम्, त्वं त्रातुं समर्थः - अतो रक्षको भवेति प्रार्थनम् - एतद्विरोधिनमाह। उदासीन इति - गुणाभावात्, शक्तिरूपगुणाभावात् उदासीनः

---

(सा.सं) ''न मे द्वेष्योऽस्ति न प्रियः'' इत्युक्तेरुपेक्षकः-कर्मानुगुणमेव फलं प्रददाति। नत्वल्पतमेनानेन बहुफलमिति या मतिस्सा विश्वासविरोधिनीत्यर्थः- एवंभूतोऽपि, सानुकम्पोऽप्यनुग्रहैकधीरपि शक्तिविरहान्न त्रातेति भ्रमः। इति बुद्ध्या, इत्थंभूत भ्रमनिवर्तिकया बुद्ध्या - गोपायिता भवेति निरूपणमित्यर्थः - गुणाभावात्, शक्त्यादिविरहात् -

**मू - स्वस्य स्वामिनि(स्वाम्य) वृत्तिर्या प्रातिकूल्यस्य वर्जनम्।**
**तदङ्गं पञ्चमं प्रोक्तमाज्ञा व्याघातवर्जनम्।।**
**अशास्त्रीयोपसेवा तु तद्व्याघात उदीर्यते।**
**चराचराणि भूतानि सर्वाणि भगवद्वपुः।।**
**अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः।**
**षष्ठमङ्गं समुद्दिष्टं तद्व्याघातो निराकृतिः।।**

(सा.दी) निमित्तजा, शक्त्यभावरूपनिमित्तजा-अनधिकारिकृतदृष्टार्थप्रपदने फलाभावरूपनिमित्तजा वा। रक्षकत्वाभावोत्प्रेक्षेत्यर्थ:- இனி प्रातिकूल्यवर्जनத்தைக் காட்டுகிறான். स्वस्येति। वृत्तिः, आज्ञाव्याघातवर्जनरूपादेव प्रातिकूल्यवर्जनं नाम पञ्चममङ्गम्। अत्रतत्सङ्कल्पएवाङ्गமென்று अभिप्रेतम्। तस्य व्याघातस्तु अविहितसेवा- இனி आनुकूल्यसङ्कल्पத்தைக் காட்டுகிறான் -चराचराणीति। तदानुकूल्यम्। सर्वभूतानुकूल्येनवर्तनமென்றபடி. तस्य विरोधस्तद्व्याघातः। निराकृतिः, भूतद्रोहः। परिकरानुसन्धानक्रमम् இதுவேயென்று सूचितம் எங்ஙனேயென்னில்? இவ் आत्म निक्षेपமேயெனக்கு मोक्षம். இத்தைக் காட்டில் வேறு मोक्षமில்லை. ஆகையாலே अकिञ्चनனாய் अनन्यगतिயான நான். श्रीमन्नारायणன் இவ் व्याजमात्रेण सर्वथा என்னை रक्षिக்கும். श्रीमन्नारायण நீயே எனக்கு गोपायिताவாக வேணும். உனக்கு இனிமேல் प्रातिकूल्यंபண்ணாதொழிவேன் - अनुकूलனாயே वर्तिக்கக்கடவேன். என்று अनुसन्धिத்து தன்னை श्रीमन्नारायण चरणारविन्दங்களில் सभरமாக निक्षेपिத்து निर्भरனாய், निर्भयனாய், निस्संशयனாய் हृष्टमना வாயிருக்கக் கடவேனென்று - स्थूलार्थத்தை निगमिக்கிறார் - पूर्णमिति। अङ्गैः, फलत्यागकार्पण्यादिभिः-

(सा.स्वा) निमित्तजा उत्प्रेक्षाविरोधिनीत्यर्थः। पञ्चममङ्गमाह - स्वस्येति। स्वस्य स्वामिनि, प्रातिकूल्यस्य वर्जनं यावृत्तिः आज्ञा व्याघातवर्जनम् - तदङ्गं पञ्चमं प्रोक्तम् - अशास्त्रीयसेवातद्विघात उदीर्यते। षष्ठमङ्गमाह। चराचराणीति - चराचराणि सर्वाणि भूतानि भगवद्वपुः- अतः, स्वामिशरीरत्वात्। मेतदानुकूल्यं कार्यमेवेति निश्चयः - सङ्कल्पः, षष्ठमङ्ग समुद्दिष्टम् - निराकृतिः, निराकरणम्। भूतनिराकरण - तद्व्याघातः, तद्विरोधीत्यर्थः एवं षड्भिरङ्गैः, तद्विरोधि निवृत्तिरूपैस्तदङ्ग निष्पादकैरुपाङ्गैश्च सहितं नमनं शरणागतिरूपम्। -

(सा.प्र) निमित्तजा, अनधिकारिकृत दृष्टार्थप्रपदने फलानुदयादि दर्शनरूपनिमित्तजेत्यर्थः स्वस्येत्यादि - विहिताननुष्ठानवर्जनं निषिद्धानुष्ठानवर्जनं च प्रातिकूल्यवर्जनमित्यर्थः। निराकृतिः,

(सा.वि) रक्षको न भवतीति - निमित्तजा, शक्त्यभावरूपनिमित्तजा - उत्प्रेक्षा, रक्षकत्वाभावोत्प्रेक्षा। विरोधिनीत्यर्थः। प्रातिकूल्यवर्जनं नाम पञ्चममङ्गमाह - स्वस्येति - स्पष्टम् - एतद्विरोधिनमाह - अशास्त्रीयेति - आनुकूल्यसङ्कल्पं नाम षष्ठमङ्गमाह - चराचराणीति - निराकृतिः, भूतद्रोहः। -

(सा.सं) रक्षको नेत्युत्प्रेक्षया जाता धीश्चतुर्थाङ्गव्याहतिरित्यर्थः - स्वस्वाम्यातिरिक्त प्रातिकूल्य-विरहात्तन्निवृत्तिरेव प्रातिकूल्यवर्जनम्। तदेव विशिनष्टि - आज्ञेति। आज्ञा, श्रुतिस्मृत्यात्मिका। तद्व्याघातः, तदुभयबोधितकृत्याकरणं, तदुभयनिषिद्धाकृत्यकरणं च तद्वर्जनमित्यर्थः - अशास्त्रीयोपसेवा, अकृत्यकरणादि - सदानुकूल्यं, सर्वभूतानुकूल्यम् - निराकृतिः, सर्वभूतावज्ञादि। -

**मू - पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम्।**
**स्थूलोऽयं नमसस्त्वर्थस्सूक्ष्ममन्यन्निशामय।।**
**चेतनस्य यदा मम्यं स्वस्मिन्स्वीये च वस्तुनि।**
**मम इत्यक्षरद्वन्द्वं तदा मम्यस्य वाचकम्।।**
**अनादिवासनारूढमिथ्याज्ञाननिबन्धना।**
**आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वतामतिः।।**
**मेनेत्येवं समीचीन बुद्ध्या सात्र निवार्यते।।**

---

(सा.दी) उपाङ्गैः, तद्विरोधिवर्जनरूपैः - नमनं, प्रह्वीभावः - आत्मनिक्षेपமென்றபடி - இது नमस्ஸின் स्थूलार्थம். இனி सूक्ष्मार्थத்தைச்சொல்ல उपक्रमिக்கிறான். सूक्ष्ममन्यदिति - चेतनस्य यदेत्यादि श्लोकங்களாலே सूक्ष्मार्थத்தில் नमः என்று पदद्वयமாயிருக்கையால் नमश्शब्दத்தை द्विधा विभजिத்து அதில் मः என்னும் அதின் अर्थத்தைக் காட்டுகிறான். चेतनस्येति। स्वस्मिन् स्वीये वस्तुनि च यन्मम्यं, ममत्वम्। अहं ममास्मि इमे मदीया इत्यहङ्कारो ममकारश्च - तस्य मम्यस्य, अहङ्कारममकारयोः என்றபடி - मम इत्यक्षरद्वन्द्वं, द्वयम्-मम என்னுமதுக்கும் विपरीताहङ्कार ममकारங்கள் वाच्यமென்றபடி - यदेति मूढत्वावस्थोच्यते - अनादीति - मिथ्याज्ञानम्, अयथार्थज्ञानम्। स्वातन्त्र्यमतिः, अहङ्कारः - स्वत्वधीर्ममकारः - तदात्मिकामतिः मे नेत्यनुकरणम्। मम नेत्यर्थः -

---

(सा.स्वा) ते तुभ्यम् - कीर्तितमित्यर्थः:- नमसोऽयं स्थूलोऽर्थ उक्त इति निगमनम्। सूक्ष्मार्थं वक्तुमुपक्रमते- सूक्ष्ममिति-अन्यत्, सूक्ष्ममर्थजातं निशामय, अवहितश्शृणु। चेतनस्येत्यादिना। चेतनस्य यदा मौढ्यदशायां स्वस्मिन् स्वीये च गृहक्षेत्रादि वस्तुनि-मम्यम्, अहं ममास्मि-इमे च मदीया इति ममत्वाभिमानविशेषः- तदा ममेत्यक्षरद्वन्द्वं मम्यस्य वाचकं, विपरीताहङ्कार ममकारस्य वाचकम्- एतदेव विवृण्वन्नर्थमाह- अनादीति। अनादिवासनारूढं यन्मिथ्याज्ञानं तन्निबन्धना - आत्मात्मीय पदार्थस्था, आत्मात्मीयविषयिणी - या स्वातन्त्र्यस्वतामतिः, अहं स्वतन्त्रः अहं मम - इमे च मदीया इति स्वातन्त्र्यमतिस्स्वशेषत्वमतिश्च मे न। मे स्वातन्त्र्यं न - अहं न मे इमे न शेषभूतानेति समीचीनबुद्ध्या सा, पूर्वोक्ता अयथार्थमतिः निवार्यते। मे नेति समीचीन बुद्धिं स्पष्टयति-

---

(सा.प्र) अवमतिकरणम् - विघातवर्जनान्युपाङ्गानीति भावः - चेतनस्येत्यादि- स्वस्मिन् मम्यम्, अहङ्कारः-

---

(सा.वि) उपाङ्गैः, अङ्ग विरोधिवर्जनैरित्यर्थः - एवं नमः पदस्याखण्डरूपस्य प्रणामपरत्वेन प्रसिद्धत्वात्तथाविध स्थूलार्थमुक्त्वा सखण्डत्वाश्रयणेन सूक्ष्मार्थमाह - सूक्ष्ममन्यदिति। मम्यं, ममत्वम्। अहं ममादि शब्दा विभक्तिप्रतिरूपकाण्यव्ययानितस्मात्वतलादि प्रत्ययोत्पत्तिः - अहं ममास्मीति बुद्धिरहङ्कारः - इमेपदार्था ममेति बुद्धिर्ममकारः - अतो ममेत्यक्षरद्वन्द्वं मम्यस्य ममकारस्य वाचकम् - स्वातन्त्र्यस्वतामतिः, अहङ्कारममकारबुद्धिः - मम नेति पदद्वयात्मक नम इति वाक्यद्वयेनेत्यर्थः

---

(सा.सं) उपाङ्गैः, अङ्गविरोधवर्जनरूपैः - मम्यं, ममकारः - अहं ममेति धीःस्वस्मिन् मम्यम् - एते मदीया इति धीः स्वीये मम्यम् - मम्यद्वयविवरणं स्वातन्त्र्य स्वतामतिरिति। स्वातन्त्र्यमहङ्कारः-

**मू - नरसंबन्धिनस्सर्वे चेतनाचेतनात्मकाः ।।**
**ईशितव्यतया नारा धार्यपोष्यतया तथा ।**
**नियाम्यत्वेन सृज्यत्व प्रवेशभरणैस्तथा ।।**
**अयते निखिलान्नारान् व्याप्नोति क्रियया त(था)या ।**
**नाराश्चाप्ययनं (वासः)तस्य तैस्तद्भावनिरूपणात् ।।**

---

(सा.दी) नरसंबन्धित्वान्नारा उच्यन्ते - संबन्धित्वं बहुधा दर्शयति।ईशितव्यतयेत्यादि। ईशितव्यतया, शेषतया என்கை. धार्यतया, पोष्यतया, नियाम्यतया, सृज्यतया, प्रविष्टत्वेन, भृतत्वेन च नारा इति - अत्र भरणं, रक्षणम् - एवं नारशब्दத்தை निरूपித்து नारायणशब्दத்தை निर्वचिக்கிறார். अयत इत्यादि श्लोकद्वयेन - निखिलान्नारानयते, प्राप्नोति - नियमयति என்றபடி - तस्यैव विवरणं व्याप्नोति என்று. तया क्रियया, अयनक्रियया। नरान् , व्याप्नोति, व्याप्य, नियच्छतीति नारायण इति। இப்பक्षத்தில் अयनशब्दं कर्तरि व्युत्पन्नम् - नाराणाமென்று कर्मणि षष्ठी। बहुव्रीहि पक्षத்தை दर्शिப்பிக்கிறான் - नाराश्चापीति। अयनं कुत इत्यत्राह - तैस्तद्भावेति। तैः चेतना चेतन रूपैर्नारैः ब्रह्मसद्भावं निरूपिக்கப்படுகையாலென்கை -

---

(सा.स्वा) नरसंबन्धिनो नारा इति पूर्वमुक्तम् - ते के इत्यपेक्षायामाह। नरसंबन्धिन इति - को वा संबन्ध इत्यपेक्षायां अण् प्रत्ययार्थसंबन्धविशेषानाह - ईशितव्यतयेत्यादिना - ईशितव्यतया, शेषतया - धार्यतया, तत्सत्ताप्रयुक्तसत्तया। पोष्यतया, बध्यतया - नियाम्यत्वेन, सङ्कल्पाधीनप्रवृत्तिकत्वेन - सृज्यत्वेन, उत्पाद्यत्वेन - प्रवेशेन, प्रविष्टत्वेन। भरणेन, भृतत्वेन। रक्ष्यत्वेन। अयनशब्दार्थमाह। अयत इति। नियमयति। तस्यैव विवरणं व्याप्नोतीति। क्रियया, व्यापनपोषणनियमनादि क्रियया व्याप्नोतीत्यर्थः - अस्मिन्पक्षे कर्तरि व्युत्पन्नोऽयनशब्दः - नाराणामितिकर्मणि षष्ठीति भावः। बहुव्रीहिषष्ठी तत्पुरुषार्थमाह - नाराश्चेत्यादिना - नाराः अयनं ज्ञानसाधनं यस्य स नारायणः। ज्ञानसाधनत्वं कथमित्यत्राह - तैरिति। तैः, नारैः - तद्भावनिरूपणात्, ब्रह्म सद्भावनिरूपणात्। -

---

(सा.प्र) नरसंबन्धिन इत्युक्तस्संबन्ध ईशितव्यतयेत्यादिना व्याख्यातः - व्याप्नोति क्रियया तथेति तत्तत्सर्वनार प्राप्तिरूपक्रियया विभुर्भवतीत्यर्थः - तद्भावनिरूपणात् , नारायणत्व निरूपणादित्यर्थः। नरस्स पुरुषोत्तम इत्यनेन नित्यत्वम्,

---

(सा.वि) नरशब्दव्युत्पत्तयो द्रष्टव्याः - अयत इति। तथा नारानयते नारायणः - नन्द्यादित्वाल्युः - क्रियया तया, नार प्राप्तिरूपया क्रियया व्याप्नोति, प्रभुर्भवतीत्यर्थः - नाराश्चेति - तैर्नरसंबन्धिभिः, परमात्मसंबन्धिभिः - ज्ञानानन्दादिभिस्तद्भाव निरूपणात् -

---

(सा.सं) अथाण् प्रत्ययार्थ उच्यते। नरसंबन्धिन इति - संबन्धित्वं बहुधा दर्शयति - ईशितव्यतयेत्यादिना। शेषतयेत्यर्थः। धार्येत्यादिना शेषत्वघटकार्था उक्ताः। भरणं, रक्षणम्। एवमयति धात्वर्थोऽप्यनेक इत्याह - अयत इति - तथा कर्तरि व्युत्पत्त्या व्याप्नोतीत्यादि तदर्थः - क्रिया, व्यापनधारणनियमन पोषणादि रूपा। इत्थं भावे तृतीया - समासद्वयविरणं नाराश्चेत्यादि। अत्र नारशब्दश्चिदचिताविव भगवद्गुणादिकमपि गृह्णाति। धार्याणां नाराणामयनत्वं किं विधमित्यत्राह - तैरिति, नारैरित्यर्थः - तद्भावः, तत्सद्भावः -

**मू - नाराणामयनं वासस्ते तस्यायनं सदा।**
**परमा च गतिस्तेषां नाराणामात्मनां सदा ।।''**
என்கிற **अहिर्बुध्न्यादि**களில் **निर्वचनं** பண்ணினபடியே **नरसंबन्धि नारं** என்கிற, **व्युत्पत्ति**யாலே **सर्वेश्वर**னுடைய **स्वरूपनिरूपकधर्म**ங்களும், **निरूपितस्वरूपविशेषणधर्म**ங்களும், **व्यापार**ங்களும், **विग्रहविशेष**ங்களும், மற்றுமுள்ள **त्रिविधचेतनाचेतन**ங்களுமெல்லாம் **नारशब्दार्थ**மானபோது **स्वव्यतिरिक्तसर्व**த்துக்கும் **आश्रयत्वादिरूपेण** நிற்கும் **प्रकारं विवक्षित**மாகையாலே **स्वनिष्ठत्वादि**களைச் சொல்லுகிறது -

(सा.दी) இனி अयनशब्दத்துக்கு अर्थान्तरத்தைக் கொண்டு निर्वचिக்கிறார் - नाराणामयनमिति - वास:, आधार: । ते च तस्यायनं, वासो व्याप्या इत्यर्थ: - இனி तत्पुरुषपक्षे अर्थத்தைக் காட்டுகிறார் - परमा च गतिरिति। परमागति:, परमप्राप्यं प्रापकं चेत्यर्थ: - स्वरूपनिरूपकधर्मங்களாவன? ज्ञानानन्दामलत्वादिகள். निरूपित स्वरूपविशेषங்களாவன? ज्ञानशक्त्यादि सकलगुणங்கள் - व्यापारा: साधुपरित्राणादय: । विग्रहविशेषा:, पररूपादया: - आश्रयत्वादीत्यत्रादि शब्दं शेषित्वोपायत्वोपेयत्वग्राहकम् - स्वनिष्ठत्वादिகளை, आदिशब्देन सर्वशेषित्वनिस्सभाभ्यधिकत्वादेश्च ग्रहणम् -

(सा.स्वा) नाराणामयनं, तस्य विवरणं वास इति - वासस्थानमित्यर्थ: - तेच नारा अयनं सदा व्याप्यं यस्य सर्वव्यापक इत्यर्थ: - तेषां नाराणामात्मनां जीवानां परमागति: - गतिशब्द: कर्मणि करणे च प्राप्य: प्रापकश्चेत्यर्थ: - नारशब्दार्थமானபோது इति। सत्यत्वादि स्वरूपनिरूपकधर्मங்களும் निरूपितस्वरूपविशेषणங்களான वात्सल्यादिகளும் देवीभूषायुधपरिजनादिகளுமெல்லாம் नरसंबन्धितया नारமாகையாலே -

(सा.प्र) विज्ञानशब्दवाच्य चेतनानां पुरुषार्थप्रापणस्य वा, सार्वज्ञप्रापणस्य वा, परमचेतनकार्यत्वादुभयप्रापणपरेण नयत्यखिलविज्ञानमित्यनेन ज्ञानत्वानन्दत्वे, नाशयत्यखिलं तम इत्यनेनामलत्वं, नरिष्यति च सर्वत्रेत्यनेनानन्तत्वं चेति स्वरूपनिरूपका गुणा:, ईशितव्यतया नारा इत्यादिना निरूपित स्वरूप विशेषका ज्ञानशक्तिबलाद्यागुणाश्चानुसन्धेयतया विवक्षिता इति भाव: - व्यापारा:, जगत्सृष्टि स्थित्यादय: - ''यस्य पृथिवी शरीरम्'' इत्यादिभिस्सर्वद्रव्यस्यापि भगवच्छरीरत्वबोधनात्परव्यूहविभवार्चा विग्रहाविग्रहविशेषशब्दनिर्दिष्टा: - மற்றுமுள்ள इत्यादि । पुनरपि विद्यमानस्य सर्वस्यापि नारशब्दार्थत्व इत्यर्थ: आश्रयत्वादीति स्वामित्वादिरादि शब्दार्थ: - ''स्वेमहिम्नि प्रतिष्ठिते '' इत्यादि

(सा.वि) नारा:, ज्ञानानन्दादय: अयनं निरूपका यस्येत्यपि नारायण शब्दार्थ इत्यर्थ: - एवं प्रकारेण स्वव्यतिरिक्त सर्वाश्रयत्वादिकं प्रतिपाद्यत इति प्रघट्टकार्थ: - एवमिह परमात्मनो वैलक्षण्येन शरीरशरीरिभावसिद्ध्या च ऐक्यपर -

(सा.सं) तद्गत धर्मश्च। नारगतं धार्यत्वादि धारकत्वादीन् तद्वन्तं च हिज्ञापयति - निरूप्य सत्ताया निरूपक सत्तायत्तत्वान्नाराश्चाप्ययनमित्युक्तमिति भाव:। नाराणामयनमित्यत्र स्वगुणादीन् चिद्वस्तु प्रतिचाद्वारकतयैव भगवत आधारत्वम्। अचित्प्रतितु ''एता भूतमात्रा यस्मिन् द्यौ:'' इत्याद्युक्तविधया सद्वारकमद्वारकं चेत्यनुसन्धेयम् - गतिशब्द: कर्मणि करणे च व्युत्पन्न: परमप्राप्य: प्रापकश्चेत्यर्थक: एवमवयवशोऽर्थोक्त्या नारायण इति समुदाये न किमुक्तमित्यत्राह - என்கிற इत्यादिना। व्यापार:, साधुपरित्राणादय:। सृष्ट्यादि पञ्चकृत्यानि च। स्वनिष्ठत्वम्, अनन्याधारत्वम् । -

**मू - இப்படி व्यापन भरणनियमन स्वाम्यादिகளாலே வேறுபட்டிருக்கிற पुरुषोत्तमனுக்கும் तत्सम्बन्धिகளுக்கும் कुद्रुष्टिகள் சொன்ன स्वरूपैक्यादि भ्रमं கழியும்படி सर्वशरीरित्व सर्वशब्दवाच्यत्वादि वैभवமுமிங்கே फलितम् -**

(सा.दी) இனி जीवपरमात्म स्वरूपैक्यभ्रमं கழியும்படி இப்பதத்தில் ईश्वरனுடைய सर्वशरीरित्वादि களும் फलितமென்கிறார் - இப்படி व्यापनेत्यादिயால் - सर्वशरीरित्व प्रयुक्तसर्वशब्दवाच्यत्वத்தால் வந்த सामानाधिकरण्यமாகையால் ''तत्त्वमसि''इत्याद्यभेदश्रुतिகளால் வந்த ऐक्यभ्रमं கழியுமென்றபடி. स्वरूपैक्यादीत्यादि शब्दத்தால் स्वस्वातन्त्र्यभ्रमसङ्ग्रहः - अथ शोधककारणोपासन वाक्यार्थங்களுமிங்கே प्रकाशितங்களாகிறன வென்கிறார் -

(सा.स्वा) स्वव्यतिरिक्त सर्वाधारत्वं சொன்னால் स्वस्याधारान्तमில்லையென்று फलिக்கையாலே सर्वव्यापकत्वोक्त्या स्वव्यापकान्तरமுமில்லையென்று फलिக்கையாலே आधारान्तरादिशङ्कै போகும் படி स्वनिष्ठत्वादिகள் சொல்லப்பட்டதென்று கருத்து - ஆனாலும் तत्त्वमसि - ''अयमात्मा ब्रह्म - त्वं वा अहमस्मि भगवो देवता'' इत्यादौ जीवब्रह्मैक्यं சொல்லுகையாலே இப்படி वाक्यार्थं சொன்னது கூடுமோ? என்னவருளிச்செய்கிறார். இப்படி व्यापनेति - शेषत्व नियाम्यत्वाधेयत्वोक्त्या सर्वस्यापि शरीरत्वமும் तन्मुखेन शरीरवाचिनां शब्दानां शरीरिपर्यन्ताभिधायकतया सर्वशब्दवाच्यत्वமும் फलितமாகையாலே ''तत्त्वमसी'' त्यादि सामानाधिकरण्यமும் जीवपरयोश्शरीर शरीरिभावकृतமென்று கருத்து. இப்படி नारायणशब्दार्थं சொல்லில் पूर्व''कारणत्वमबाध्यत्वम्''

(सा.प्र) श्रुतिस्स्वनिष्ठत्वादीत्यनेन स्मारिता - अनितरधार्यत्वमित्यर्थः - अनितरप्रेर्यत्वादिरादिशब्दार्थः - एवं प्रमाणैर्नारायणशब्दस्य बहुविधचिदचित्संबन्ध विशिष्टभगवद्वाचकत्वावगमात्सर्वशब्दवाच्यत्व, सर्वशरीरित्वसिद्धेर्निर्विशेषत्व जीवस्वरूपैक्यादिकमनादेयमित्याह - இப்படி व्यापनेत्यादिना। पोषकत्वादिः स्वाम्याधीनत्वादि शब्दार्थः - भेदाभेदादि स्वरूपैक्यादीत्यादिशब्दार्थः - सर्वकर्मसमाराध्यत्वादि स्सर्वशब्दवाच्यत्वादीत्यादि शब्दार्थः - एवं च ''सर्वं खल्विदं ब्रह्म - अयमात्मा ब्रह्म - तत्त्वमसि'' इत्याद्यैक्य परश्रुतीनां ''यस्य पृथिवी शरीरम्'' । ''यस्यात्मा शरीरम्'' इत्यादिघटक श्रुतीनां चार्थोऽनुसंहितः - अथ ''यत्तदद्रेश्य मग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं - निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् - अस्थूलमनवह्रस्वम्'' इत्यादि शोधकवाक्यानां -

(सा.वि) श्रुतीनां विशिष्टैक्यपरत्वसंभवात्स्वरूपैक्यपक्षो नयुक्त इति विशेषज्ञानेन स्वरूपैक्य भ्रमो निवर्तत इत्याह - இப்படி व्यापनेत्यादिना - भरणं, रक्षणम् -

(सा.सं) आदिशब्दादनन्य नियाम्यत्वशेषित्वनिस्समाभ्यधिकत्वादि सङ्ग्रहः - एवं ''कारणत्वमबाध्यत्वम्'' इति कारिकोक्तार्था नारायणशब्दार्थतयोपादिताः - एवमनेकभेदगर्भे नारायणपदे पराभिमतैक्यविरोधिधर्मजातमपि भेद श्रुतिसिद्धं फलितमित्याह - இப்படி इति - स्वरूपैक्यादीत्यादि शब्देन भेदाभेदादि सङ्ग्रहः - व्यापनादिचतुष्टयेन शरीरित्वं फलितम्।आदि शब्देन सत्यत्वादि सङ्ग्रहः - सर्वशरीरित्वेन सर्वशब्दवाच्यत्वं फलितम् - आदि शब्देनघटक श्रुति सिद्धाकार सङ्ग्रहः। -

**मू - नरशब्दत्तालே शोधकवाक्यार्थமும் ''नराज्ञातानि तत्त्वानि नाराणि'' என்கையாலே कारणवाक्यार्थமும் अयनशब्दत्तालே उपासनवाक्यार्थங்களும் இங்கே प्रकाशितங்களாகிறன -**

(सा.दी) नरशब्दத்தாலே इत्यादि - नरिष्यति என்று व्युत्पत्तिயில் दोषरहित னென்று சொல்லும் नरशब्दத்தாலென்கை - अयनशब्दத்தாலே, उपायोपेयवाचकायनशब्दததத்தாலென்கை - இப்पदத்தில் भगवतस्सर्वविधबन्धुत्वமும் फलितமென்கிறார் -

(सा.स्वा) इत्यादिना शारीरकार्थं नारायण शब्दத்தாலே सिद्ध மென்று சொன்னது கூடுமோ? तद्वाचकशब्दமில்லையே? என்னவருளிச் செய்கிறார் - नरशब्दத்தாலே इति। शोधकेति - कारणत्वशङ्कितदोषनिराकरणार्थतया शोधकवाक्यस्य तदर्थकनरशब्दத்தாலே कारणशोधनार्थமான द्वितीयाध्यायार्थं சொல்லப்பட்டதென்றபடி - शारीरकक्रमத்தில் कारणत्वமும் प्राथमिकமானாலும் नारायणशब्दத்தில் नरशब्दं प्राथमिकமாகையாலே तदर्थமிங்கு प्रथमं சொல்லிற்றென்றபடி - तुरीयाध्यायफलமும் चतुर्थिயிலே स्पष्टமென்று கருத்து - இப்படி योगव्युत्पत्तिயாலே नारायण शब्दத்துக்கு अनेकार्थं சொன்னாலும் அந்த योगार्थமான जगदाधारत्व, जगद्धितप्रवर्तकत्व, जगदन्तर्यामित्वाद्यर्थं देवतान्तर साधारणமானபடியாலே देवता विशेष सिद्धि எங்ஙனே? என்னவருளிச் செய்கிறார் -

(सा.प्र) ''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म - यतो वा हमानि भूतानि जायन्ते - आत्मन आकाशस्संभूतः। नारायणाद्ब्रह्मा जायते - नारायणाद्रुद्रो जायते - नारायणाद्द्वादशादित्या'' इत्यादि कारण वाक्यानां, ''तमेवैकंध्यायथात्मानम् - अन्यावाचोविमुञ्चथ - अमृतस्यैष सेतुः। तमेवं विद्वानमृत इह भवति।निचाय्यतं मृत्युमुखात्प्रमुच्यते - ध्रुवा स्मृतिःस्मृति लम्भे सर्वग्रन्थीनां विप्रमोक्ष'' इत्याद्युपासनवाक्यानां च अर्थो निर्दोषत्व कारणत्वोपास्यत्वोपायत्व बोधकेऽष्टाक्षरे अनुसन्धेय इत्याह - नरशब्दத்தாலே इत्यादिना - अथ ''यच्चकिञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा - अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः - एष सर्वभूतान्तरात्मा अपहतपाप्मादिव्यो देव एको नारायणः - सहस्रशीर्षा पुरुषः - माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः - सर्वस्य शरणं सुहृत्'' इत्यादि तत्त्वपराणां श्रुतीनां चार्थोऽत्रानुसन्धेय इत्याह -

(सा.वि) शोधकवाक्य कारणवाक्योपासनवाक्यानामर्थोऽप्यत्रैवद्रष्टव्य इत्याह। नरशब्दத்தாலே इत्यादिना। ''एष सर्वभूतान्तरात्मा। सर्वस्य शरणं सुहृत्। माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः'' इत्यादि श्रुत्यर्थोऽत्रानुसन्धेय इत्याह। -

(सा.सं) अथ शोधकोपासनादि वाक्यफलमप्यत्र सिद्धमित्याह - नरशब्दத்தாலே इत्यादिना।न रिष्यतीति नर इति निर्दोषत्वसिद्धिः।ईयतेऽनेनेत्ययनमिति तत्तद्विद्याप्रतिनियत गुणाश्रयत्वेन तत्तदुपासनादि विषयत्व कृतसिद्धोपायत्वस्य ईयत इत्ययनमित्युपेयत्वस्य च लाभादुपासन वाक्यार्थोऽपीह सिद्ध इति भावः पूर्वं प्रथमाध्यायार्थसिद्धिरुपपादिता। त्रिविधकारणत्वोपयुक्त ज्ञान शक्त्यादि चेह सिद्ध्यतीत्यभिप्रायं कारण वाक्यार्थமும் इत्यभिधानमित्यपौनरुक्त्यम् - इदमेव सुबालोपनिषत्स्थं नारायणपदमिति तत्र ''माता पिता ''इत्यादिना प्रतिपन्न सर्वविध बन्धुत्वादिकमपीहानुसंहितमित्याह -

**मू - सुबालोपनिषत्प्रभृतिகளிலே सर्वान्तर्यामिயுமாய் सर्वविधबन्धुவுமாயிருக்கிற सर्वेश्वरன் नारायणशब्दத்தாலே देवतान्तरव्यावृत्तனாக प्रतिपादितனானான் - लोकத்திலுள்ள सर्वबन्धुக்களும் भगवत्सङ्कल्पத்தாலே बन्धुக்களானார்கள் - त्वमेव माता च पिता त्वमेव । எம்பிரானெந்தை -**

(सा.दी) सुबालेत्यादि वाक्यत्रयத்தால் - அதில் उपपत्तिகளைச் சொல்லுகிறார் - सुबालेत्यादि - सुबालोपनिषत्தில் "माता पिता भ्राता निवासश्शरणं सुहृद् नारायणः" என்று सर्वेश्वरனை नारायणशब्दத்தால் சொல்லி அவனை मातापिता என்று சொல்லுகையாலென்றபடி - அதில் सत्तर्करूपश्रुत्यर्थங்களைக் காட்டுகிறார். लोकத்திலுள்ள इत्यादिना । "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यादिயால் परमात्मसङ्कल्पத்தால் सर्वமும் प्रियராவர்களென்கையாலென்றபடி - त्वमेव मातेत्यादि स्मृतिகள் - सर्वेश्वरனொருவனுமே என்றதிலே फलितமென்று शेषम् । எம்பிரான், எனக்கு उपकारकன். எந்தை, என்னுடைய पिता என்னுடைய சுற்றம் - எல்லாஉறவுமுறை -

(सा.स्वा) सुबालोपनिषत्प्रभृतिகளிலே इति - " एष सर्वभूतान्तरात्मा अपहतपाप्मादिव्यो देव एको नारायणः - माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः" என்று சொல்லுகையாலே योगार्थங்கள் शब्दान्तरोपात्तங்களாகையாலே विशिष्य समर्पकनारायण शब्दं श्रीपतित्वप्रवृत्तिनिमित्तकமென்றுதான் संज्ञाप्रवृत्तिनिमित्तकமென்றுதான் சொல்ல வேண்டுகையாலிங்கும் योगार्थावच्छिन्नமாக रूढ्यर्थदिवताविशेषं प्रतिपादितமென்று கருத்து - இப்படி ईश्वरன் सर्वविधबन्धु என்று சொல்லப்போமோ? लोकத்திலே இவனுக்கு मातृपितृप्रभृतिகள் बन्धुக்களில்லையோ? என்னவருளிச் செய்கிறார் - लोकத்திலுள்ள इति - भगवदिति लोकத்தில் बन्धुக்களும் परसङ्कल्पाधीनबन्धुக்களாகையாலே सोपाधिक-बन्धुக்களென்றபடி - ஆனாலும் ईश्वरன் बन्धुவாகிலன்றோ निरुपाधिक बन्धुவென்று சொல்லலாவது? बन्धु என்கையில் प्रमाणமுண்டோ? என்னவருளிச்செய்கிறார் - त्वमेवेति - எம்பிரான் इति । எம்பிரான், ममोपकारकः। எந்தை, पिता । लोकத்தில் सर्वाग्न्यादिகளுடைய प्रातिकूल्यமும் -

(सा.प्र) सुबालोपनिषदित्यादिना - एवं च सर्वश्रुत्यर्थोऽप्यष्टाक्षरे अनुसन्धेय इत्युक्तं भवति । एवं च श्रुतिस्मृत्यानुगुण्येन इतरेषां परस्परबन्धुत्वापादकत्वात सौहार्दजनकत्वाच्च निरुपाधिकसर्वविधबन्धुत्वं निरुपाधिक सर्वविध सुहृत्वं च भगवत एवेति तथैवानुसन्धेयमिति दर्शयन् इदानीन्तनगृहीतृत्वस्यौपाधिकत्वमुपाधिभूत-कर्मणामयत्न निवर्त्यत्वं चाह। लोकத்திலுள்ள इत्यादिना - "त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुत्वमेवेत्यनेन, எம்பிரானெந்தை इत्यनेन पितात्वमित्यनेन च सर्वविधबन्धुत्वस्य सांप्रदायिकत्वं दर्शितम् - எம்பிரான் इत्यादि -

(सा.वि) सुबालोपनिषदिति - एवं च सर्ववेदान्तार्थोऽनुसंहित इत्युक्तं भवति। एवं भगवत एव निरुपाधिकसर्वविधबन्धुत्वमितरेषां तु तत्सङ्कल्पवशादौपाधिकमित्याह - लोकத்திலுள்ள इति। எம்பிரான், अस्मत्परमोपकारः - எந்தை, अस्मत्सर्वविधबन्धुः - निरुपाधिकसुहृत्तत्वमुपपादयति। -

(सा.सं) सुबालेति - तर्हि केषुचिद्बन्धुत्वधीः किं निबन्धनेत्यत्राह - लोकத்தில் इति - स्मृतिसंप्रदायवचनाभ्यामपि स एव बन्धुरिति दृढयति त्वमेवेत्यादिना - எம்பிரான், अस्मदुपकारकः - எந்தை, अस्मत्पिता -

**मू - पिता त्वं माता त्वं'' इत्यादिகளிற்படியே निरुपाधिकसर्वविधबन्धुसर्वेश्वरனொருவனுமே. ''यस्य प्रसादे सकलाः प्रसीदेयुरिमाः प्रजाः'' என்றும், ''प्रसन्नमभवत्तस्मै प्रसन्नाय चराचरम्। प्रसन्ने देवदेवेश'' என்கையாலே அவன் प्रपन्नனானால் प्रतिकूलராவாரொருவருமில்லை. இவ்ईश्वरனுக்கு 'सुहृदं सर्वभूतानाम्'' என்கிற आकारं स्वभावसिद्धम् - आकारान्तरं चेतनருடைய आज्ञातिलङ्घनமாகிற उपाधिயடியாக வந்தது - அதுவும் अल्प व्याजத்தாலே மாறும் - இத்தனையடியர் -**

(सा.दी) सुबालोपनिषत्सिद्धமான निरुपाधिकसुहृत्वத்தை उपपादिக்கிறார் - यस्य प्रसाद इत्यादिயால் - என்றார்களிறே என்று विधिயான वाक्यचतुष्टयத்தாலிங்கு सर्वप्रसादத்துக்கும் भगवत्प्रसादायत्तत्वं வருகையால் भगवत्प्रसादத்துக்கு निरुपाधिकत्वं सिद्धम् - ''प्रसन्नमभवत्तस्मै प्रसन्नाय'', सर्वेश्वरप्रसादेन प्रसन्नचित्ताय तस्मै'' என்றபடி - प्रसन्ने देवदेवेश प्रसन्नं स्याज्जगत्त्रयम् '' என்று शेषम् இந்த औपाधिका-कारத்துக்கு போக்குண்டோ? என்னவருளிச் செய்கிறார். அதுவும் इति। இவ் अर्थத்தில் संमति காட்டுகிறார் - இத்தனையடியர் इत्यादिயால். இதுக்கு अर्थம். இத்தனை, கீழே மூன்றெழுத்துடைய

(सा.स्वा) भगवत्सङ्कल्पाधीनமாகையாலே सर्वविधबन्धुत्वं கூடுமோ? என்னவருளிச் செய்கிறார். यस्य प्रसाद इति। प्रसन्नमभवदिति। तस्मै प्रसन्नाय भगवत्प्रसादेन प्रसन्नाय पुरुषाय सर्वं प्रसन्नमभवदित्यर्थः - प्रसन्न इति। प्रसन्नं स्याज्जगत्त्रयमित्युत्तरपादமென்றபடி - प्रसन्नனானாலும் सर्वமும் प्रसन्नமானாலும் அவன் प्रसादமில்லாத दशैயில் सर्वமும் प्रतिकूलமாகையாலே सर्वविधबन्धुत्वं கூடுமோ? என்னவருளிச் செய்கிறார் - सुहृदमिति இப்படியாகில் निग्रहकर्तृत्वमुच्छिन्नமாக प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார் - आकारान्तरमिति। दण्डधरत्वமென்றபடி. அப்போ आज्ञातिलङ्घनमनादि-सिद्धமாகையாலே निग्रहकर्तृत्वाद्याकारமும் नित्यமாக प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார் - அதுவும் इति - மாறும், निवृत्तமாம். अनन्तकालार्जितनिग्रहमल्पव्याजத்தாலே கழியுமோ? என்னவருளிச் செய்கிறார் - இத்தனை इति - கீழே மூன்றெழுத்துடைய -

(सा.प्र) अस्माकमुपकारकोऽस्मत्पितास्मद्बन्धुरस्मत्स्वामी चेति तस्यां गाथायामुक्तमित्यर्थः - दयिततनयस्त्वमित्यादिः पितात्वमित्यस्य शेषः प्रसिद्धः, यस्येत्यादि - इतरेषामपि मनः प्रसादहेतुत्वान्निरुपाधि सर्वसुहृत्वं भगवत एवेति शोभनहृदयत्वापरपर्याय प्रसन्न मनस्कत्वोक्त्यावगम्यत इत्यर्थः - இத்தனை इत्यादि। भगवच्छेषत्वज्ञानपूर्वकं वाचिक -

(सा.वि) यस्य प्रसाद इति। ''प्रसन्ने देवदेवेश'' इत्यस्य शेषं प्रसन्नं स्याज्जगत्त्रयम् इति। आकारान्तरम्, ''तानहं द्विषतः क्रूरान्'' इत्युक्तनिग्रह सङ्कल्पत्वम् - மாறும், निवर्तेत - अत्र संमति माह - இத்தனை इति।

(सा.सं) ''नवाऽरे'' इत्यादि मैत्रेय ब्राह्मणमिहानुसन्धेयम्। एवं सर्वविधबन्धौ स्थिते केषाञ्चित्प्रतिकूलतादौ नियामकं सूचयति - यस्येत्यादिना - भगवत्यप्रसन्ने न केऽप्यनुकूला इति च - '' ब्रह्मा स्वयम्भूश्चतुराननो वा'' इत्यादिना सिद्धमिति - भगवानवश्यं यथाधिकारं प्रसाद्य इत्याशयः - ननु भगवतस्सुहृत्वरूपाकारस्यैव स्वाभाविकत्वेऽपि जनेषु दुःखाद्यास्पदतां केन सङ्घटयतीत्यत्राह। आकारान्तरमिति - व्याजத்தாலே, भगवदभिमतानुवर्तनेन - இத்தனை इति। -

**मू:-** யடியரானார்க்கிரங்கு நமரங்கனாய பித்தனை என்றார்களிறே, இந் **नारायणशब्द**த்தில் **चतुर्थि**யாலே சொல்லப்படுகிற **वाक्यार्थ**ங்களுக்கீடாக **तादर्थ्यादि**கள் காட்டப்படுகின்றன.

(सा.दी) பேராலென்று अल्पव्याजेन प्रसन्नனாமென்றது. இத்தனையடியரானார்க்கும், இவ் अल्पव्याजத்தைப் பண்ணி दासரானார்க்கும் - இரங்கும், प्रसन्नனாமவனான நமரங்கனாய பித்தனை - நம்பெருமாளாகிற आश्रित्तवत्सलனை - பெற்றும், लभित्தும் - ஐயோ जन्मचक्रத்தில் भ्रमिக்கிறார்களென்கை. இவன் இவ் व्याजेन प्रसन्नனால் பின்னையொன்றாலும் फलத்துக்கு प्रतिहतिயில்லையென்று கருத்து. இனி இப் पदத்தில் चतुर्थ्यर्थத்தை அருளிச் செய்கிறார் - இந் नारायणेत्यादिயால் - तादर्थ्यादीत्यादिशब्दத்தால் संप्रदानं-

(सा.स्वा) பேரால் என்று अल्पव्याजमुपक्रान्तமாகையாலே. இத்தனையடியரானார்க்கு, இந்த अल्पव्याजத்தைப் பண்ணி दासரானார்க்கு - இரங்கும், प्रसन्नனாமவனான. நம், நம்முடைய. அரங்கனாய, रङ्गनाथனான. பித்தனை, आश्रितविषयத்தில், व्यामोहத்தையுடையவனை. பெற்றும், लभित्தும். ஐயோ जन्मचक्र த்தில் लभिக்கிறார்களென்றபடி - धर्मिग्राहकप्रमाणத்தாலே ईश्वरस्वभावमेतादृशமாகையால் अल्पव्याजத்தாலே மாறக்கூடுமென்று கருத்து. ஆனாலும் नारायणाय என்று चतुर्थी கூடுமோ? तादथ्यचतुर्थिயாகில் भरसमर्पणपरयोजनैக்குச் சேராது - संप्रदानपरै யாகில் स्वरूपपरयोजனையில் சேராதோ? என்னவருளிச் செய்கிறார் - नारायणेति - ஆனாலும் नमस्सुக்கு स्थूलयोजनैயில் स्वतः प्राप्तशेषवृत्तिपरयोजनैயும் சொன்னபடியாலே அந்த अर्थத்தில் चतुर्थिக்கு-

(सा.प्रः) कैङ्कर्यरूप भगवन्नामसङ्कीर्तने प्रवृत्तविषये कृपां कुर्वन्नेवं रूपसौलभ्यप्रकाशनेनास्माकमपि स्वानुभवप्रदानार्थं श्रीरङ्गे सन्निहितोऽतिव्यामोहत्वेन भ्रान्त शब्दवाच्य इत्यर्थः - एतेन निरुपाधिकसुहृत्त्वस्य सांप्रदायिकत्वं सूचितम्-अल्पव्याजेन निरवधिकफलप्रदत्वं सौहार्दकार्यमिति भावः । एवं नारायणशब्दार्थ मुक्त्वा तद्गतचतुर्थ्यर्थमाह இந் नारायणश्ब्देत्यादिना - सम्प्रदानत्वं तादर्थ्यादीत्यादि-शब्दार्थः- तत्रोपपदविभक्तित्वं तावदाह-

(सा.वि) இத்தனையடியரானார்க்கு, एतावन्मात्रव्याजेन दासानाम्-भगवच्छेषत्वज्ञानपूर्वकं कैङ्कर्यरूप भगवन्नामकीर्तनमात्रव्याजेनेत्यर्थः । நமரங்கனாய, अस्मद्रङ्गनायकः । பித்தன், भ्रान्तः । महापराधकारिणोऽल्पव्याजेन रक्षன் भ्रान्त इत्यर्थः । एवं प्रकृत्यर्थं व्याख्यायाथ प्रत्ययार्थं व्याचष्टे - இந் नारायणशब्दத்தில் इति । चतुर्थिயாலே சொல்லப்புகுகிற वाक्यार्थங்களுக்கீடாக, चतुर्थ्या वक्ष्यमाण वाक्यार्थानुगुणम्-तादर्थ्यादिகள், तादर्थ्यादयः காட்டப்படுகின்றன, प्रदर्श्यन्ते । शेषवृत्तिकैङ्कर्यविवक्षायां तादर्थ्ये चतुर्थी वक्तव्येति संबन्धषष्ट्यपवादिका चतुर्थी आत्महविरुद्देश्य - त्वविवक्षाया चतुर्थीसम्प्रदान इति चतुर्थी-

(सा.सं:) मित्रभावनया दास्यमवलम्बितानामपि - இரங்க, अनुग्रहार्थम् । நமரங்கனாய, रङ्गनायकात्मनावतीर्णः - பித்தன், वात्सल्यादिकृतभ्रमवानित्यर्थः- इत्थं नारायणपदप्रकृत्यर्थो वर्णितः अथ प्रत्ययार्थो निरूप्यते- तत्र वक्ष्यमाणप्रत्ययार्थभेदान् सङ्गृह्णाति । இந் नारायणेति - आदिशब्देन संप्रदानत्वग्रहः- ननु तादर्थ्यरूपार्थराहित्येन मह्यं नम इत्यादिष्विवात्र-

**मूः - स्थूलानुसन्धानத்தில் இச்சதுர்थीनमश्शब्दयोगத்தாலும் கொள்ளலாம் - அப்போது இச்சதுர்थिக்கு प्रयोजनातिशयமில்லை-**

**षष्ठपञ्चदशाद्वर्णात् केवलव्यञ्जनीकृतात् ।**

(सा.दी) गृहीतम् । स्थूलानुसन्धानத்தில், नमश्शब्दத்தின் स्थूलयोजनैயில். இவ் अंशं मन्त्रத்தினுடைய शक्त्यंशமென்கையால் फलसिद्धिहेतुவான सारांशமென்று இச் चतुर्थिயில் वैभवத்தையருளிச் செய்கிறார் - षष्ठेत्यादिயால் - मन्त्रத்தினுடைய षष्ठवर्ण णकारम् - नमश्शब्दमारभ्य गणनैயென்று கருத்து- पञ्चदशवर्णமுமதுவே. स्पर्शங்களிலிவ் अक्षरं पञ्चदशமாகையால்-

(सा.स्वा) तादर्थ्यादिகள் கூடாதே? என்னவருளிச் செய்கிறார். स्थूलेति-இப்படியாகில் नमश्शब्दयोगத்தாலே தானே सर्वदा चतुर्थि சொல்லலாகாதோ? என்னவருளிச் செய்கிறார். அப்போது इति-ஆகையால் प्रयोजनातिशयवदर्थமே चतुर्थिக்குக் கொள்ளவேணுமென்று கருத்து. அப்போது कारकविभक्तिயே प्रबलैயாகையாலே संप्रदानचतुर्थिயே கொள்ளவேண்டாவோ? फलप्रार्थनापरयोजनैயில் संप्रदानार्थकत्वं கூடாதென்னில் अकाराल्लुप्तचतुर्थीफलप्रार्थनापरैயாய் இச் चतुथिसंप्रदानैकार्थिकैயாகலாகாதோ? என்னவருளிச் செய்கிறார் - षष्ठेति - षष्ठः, नकारमारभ्य णकारः षष्टः-पञ्च, दशः, कादिव्यंजमगणनायां णकारः पञ्चदशः-तस्मात् -

(सा.प्रः) तावदाह - स्थूलेत्यादिना । नमश्शब्दस्थूलार्थविशिष्टाष्टाक्षरानुसन्धान इत्यर्थः- नन्वस्मिन्पक्षे विभक्तेश्शब्दसाधुत्वाद्यर्थकत्वान्मन्त्रस्य पुरुषार्थपर्यवसायित्वं न स्यादित्यत्राह । षष्ठपञ्चदशादित्यादि -द्वये षष्ठात्; कचटतपयादि परिगणने पञ्चदशाच्चेत्यर्थः यद्वा अस्यैव मन्त्रस्यार्थोक्तिक्रमे षष्ठादित्यर्थः -

(सा.विः) तस्यास्त्यज्य (मान)மான हविरुद्देश्यत्वमित्यर्थः - उभयस्मिन्नपि पक्षे नमः पदयोगो नास्ति । तस्य वाक्यान्तरत्वात्पदद्वयात्मकत्वाच्च स्थूलयोजनायां नमश्शब्दान्वयेन नमस्स्वस्ति स्वाहा स्वधालं वषड्योगाच्चेति सूत्रेण चतुर्थी स्वीकार्येत्याह । स्थूलानुसन्धानத்தில் इति- तदानीं संबन्धमात्रबोधकषष्ठ्यपवादत्वेन चतुर्थ्या अर्थविशेषो नास्तीत्याह - அப்போது इति । केवलसाधुत्वार्थमिति भावः- ननु स्थूलयोजनायां नमश्शब्दस्योपायपरत्वपक्षेत्यज्यமான हविरुद्देश्यत्व सत्वेन संप्रदानत्वात्कारकत्वेन नमश्शब्दयोगचतुर्थ्या उपपदविभक्तित्वादुपपदविभक्तेः कारकविभक्तिर्बलीयसीति संप्रदानचतुर्थ्येव स्यान्नोपपदचतुर्थीति तत्कथं नमश्शब्दयोगத்தாலும் इति वाचोयुक्तिरिति चेदित्थम् । उपायपरत्वे संप्रदानचतूर्थ्येव । कैङ्कर्यपरत्वे नमश्शब्दयोगाच्चतुर्थी - अत एव नमशब्दयोगத்தாலும் इति समुच्चयोक्तिः । तादर्थ्यविवक्षायां नमश्शब्दयोगे च परत्वान्न- मश्शब्दयोग चतुर्थ्येव द्रष्टव्या - एतच्चतुर्थी प्रभावमाह - षष्ठपञ्चदशादिति द्वये षष्ठवर्णाण्ण- कारादित्यर्थः - कयादिक्रमगणनया पञ्चदशोऽपि णकारः द्वये षष्ठवर्णस्सन्

(सा.सं:) किं न स्यादित्यत्र नमशब्दस्थ स्थूलयोजनानुसारे तथाप्यस्त्वित्याह । स्थूलेति - स्वस्ति स्वाहा स्वधावषड्योगाच्चेत्यनुशासनानुसारेण नमश्शब्दमात्रेण चतुर्थीत्यर्थः । तर्हि तथैवेह स्यादित्यत्राह - அப்போது इति - साधुत्वातिरेकेण शेषत्वादिज्ञापनरूपप्रयोजनं नास्तीत्यर्थः - एतच्चतुर्थीप्रभावमाह - षष्ठेति - प्रणवं विना मूलमन्त्रस्थवर्णमध्ये षष्ठात् ।

मूः - उत्तरो मन्त्रशेषस्तु शक्तिरित्यस्य कथ्यते ।''
என்கையாலே இது திருमन्त्रத்தில் फलसिद्धिहेतुவான प्रदेशம். योजना विशेषங்களில் फलप्रार्थनैயும் இவ்விடத்திலேயாகிறது
''अर्थात्प्रकरणाल्लिङ्गादौचित्योद्देशकालतः ।
शब्दार्थाः प्रविभज्यन्ते न शब्दादेव केवलात्'' ॥
என்கிறபடியே ஒரு शब्दத்துக்கே प्रकरणादिகளுக்கீடாக अर्थभेदं கொள்ளுகை सर्वसंमतम्-

(सा.दीः) केवलव्यञ्जनीकृतात्, அதாவது उत्तरமான अच्சைவிட்டு व्यञ्जनमात्रமாக என்றத்தின் उत्तरो मन्त्रशेषः, ण என்கிற व्यञ्जनத்துக்கு மேலான मन्त्रशेषம். அதாவது? आय इत्यंशः இந்த मन्त्रத்தின் शक्तिயென்று சொல்லப்படும். शक्ति என்று फलसिद्धिहेतुभूतமான मन्त्रத்தின் सारांशம் - सर्व योजनैகளிலும் फलप्रार्थनै இங்கேயாமென்கிறார்- योजनाविशेषेत्यादि யால். चतुर्थिக்கு तादर्थ्यमर्थமாகிலதுக்குத் தானே संप्रदानार्थமும் கொள்ளப்போமோ? என்ன வருளிச் செய்கிறார். अर्थादित्यादि - अर्थात्, प्रयोजनविशेषात् - शब्दस्यार्थो निर्णीयते - न केवलादेव शब्दादिति । श्लोकத்துக்கு अर्थமாகையால்.

(सा.स्वाः) व्यञ्जनीकृतात्, ट इत्याकारं विहाय ण् इति वर्णात् - उत्तरतः, मन्त्रशेषः । आयेति भागः । अस्य, मूलमन्त्रस्य । शक्तिरिति कथ्यते, फलसाधनत्वांश इति कथ्यते என்றபடி. फलसाधनप्रदेशமாகையாலே இங்கே தானே फलप्रार्थनै उचितैயாகையாலே तादर्थ्यचतुर्थि கொள்ளவேணு மென்று கருத்து. नानार्थैயான चतुर्थिக்கு तत्तद्योजनैயிலே एकार्थकत्वं नियमिக்கப்போமோ? என்னவருளிச் செய்கிறார்- अर्थादिति - ஆனாலும் இங்கு संप्रदानार्थत्वं கூடுமோ? स्वकीयத்துக்கு -

(सा.प्रः) मन्त्राणां शक्त्यंशस्याप्रकाशनीयतया गूढोक्ति - सर्वरक्षकत्वेन सर्वशेषित्वेन च प्रणवादवगताय नारायणाय नम इति । पुरुषार्थपरयोजनायां कैङ्कर्यबोधकत्वेन चतुर्थीविभक्तिस्सार्थकेत्याह । योजनाविशेषेत्यादिना - अथवैकस्य शब्दस्य योजनाभेदेनानेकार्थत्वस्य प्रामाणिकत्वात्सर्वसंमतत्त्वाच्च संप्रदानार्थत्वमित्याह अर्थादित्यादिना-

(सा.वि) कखादिषु पञ्चदशस्सन् यो वर्णोऽस्मिन् मन्त्रे विद्यते - केवलव्यञ्जनीकृतात्, अज्विनाकृतात् । केवलहल्रूपात्तस्माद्वर्णात् - उत्तरः, आय इत्ययं मन्त्रशेषः - शक्तिरिति कथ्यते - अयमेवास्मिन् सारांश इति भावः- प्रणवं विहाय गणने षष्ठवर्णादिति केचिद्योजयन्ति - शक्तेर्गोपनीयत्वाद्गूढोक्तिः सारांशत्वादयमेवांशः फलसिद्धिहेतुरित्याह - என்கையாலே इति - अत ऐवात्रैव फलप्रार्थना स्यादित्याह - योजनाविशेषங்கள் इति - नन्वत्रैव पुरुषार्थप्रार्थना चेदुपायपरत्वयोजनापक्षो न घटत इत्याशङ्क्यार्थप्रकरणादिनार्थान्तरपरत्वपक्षो विघटत एवेत्याह - अर्थात्प्रकरणादिति - ननु समर्पणार्थे संप्रदानत्वमनुपपन्नं दीयमानार्थशेषित्वं हि संप्रदानत्वम् - दानकर्मत्वंहि दीयमानत्वम् ।

(सा.सं:) वर्णमध्ये षष्ठात् । कादिमात्रकासु पञ्चदशात्सर्वं विना कृताद्वर्णादुत्तरो मन्त्रशेषः आयेत्यंशः । शक्तिरभिधीयत इत्यर्थः - फलसिद्धिहेतुவான प्रदेशमिति शक्तिशब्दार्थः- इयं स्वरूपादिपरतया मन्त्रपरयोजनासुतादर्थ्यादिपरैव - फलपरयोजनासुतादर्थ्यदर्शितफलभूतशेषवृत्ति प्रार्थनापरापीत्याह - योजनेति - एकैव विभक्तिरनेकार्था कथमित्यत्राह । अर्थादिति - प्रयोजन-विशेषात् - यद्वा, समभिव्याहृतपदार्थस्वभावात् - लिङ्गम्, अर्थसामर्थ्यं औचित्याद्देशकालतः, देशकालौचित्याभ्याम्

मूः - ஆகையாலே "दीयमानार्थशेषित्वं संप्रदानत्वमिष्यते" इत्यादिகளிற்படியே परस्वत्वापादनं இவ்விடத்தில் கூடாதாகிலும் ईश्वरன் தனக்கு शेषமான वस्तुவைத்தானே रक्षिத்துக்கொள்ளும்படி समर्पिக்கிற அளவைப்பற்ற व्यापकमन्त्रங்களில் चतुर्थिயை संप्रदानार्थैயாக अहिर्बुध्न्यன் व्याख्यानம் பண்ணினான்.

"नीचीभावेन सन्द्योत्यमात्मनो यत्समर्पणम् ।-

(सा.दीः) योजनाभेदத்தில் प्रदानार्थं கொள்ளலாமென்றதாயிற்று- ननु தன்னுடைய अन्वयத்தை परस्वமாக்குகையன்றோ दानम् - அதில் दीयमानार्थशेषित्वं संप्रदानत्वम् - இவ்விடத்தில் தன் वस्तुவுக்கு परस्वत्वापादनं கூடாதே? என்னவருளிச் செய்கிறார்- ஆகையாலே इत्यादिயால் - केनचिद्दीयमानस्य परस्वत्वमापाद्यमानस्यार्थस्य शेषित्वமென்று अर्थம். இப்படி परस्वत्वापादनं கூடாதாகிலும் ईश्वरवस्तुவை ईश्वरன் பொருட்டு रक्ष्यமாக समर्पिக்கை मात्रं கொண்டு संप्रदानत्व-विवक्षया अहिर्बुध्न्यादिகள் व्यारव्यानं பண்ணினார்கள் என்கை - அந்த व्याख्यानத்தையே காட்டுகிறார் - नीचीभावेनेत्यादि-नीचीभावेन, शेषभावத்தாலே. यत्समर्पणं, संरक्ष्यतया समर्पणமுண்டு-

(सा.स्वाः) परस्वत्वापादनं பண்ணினாலன்றோ सम्प्रदानार्थत्वं கூடுவது. இங்கு स्वात्मा भगवत्स्वமாகையாலே அது கூடாதே? ஆகையாலே अहिर्बुध्न्यव्याख्यानத்துக்கு गतिயெது? என்னவருளிச் செய்கிறார் - ஆகையாலே इति - ஆகையாலே, औचित्यादिகளாலே अर्थं கொள்ளுகை सर्वसंमतமாகையாலே. स्वरूपेण समर्पणं கூடாதாகிலும் रक्ष्यतया समर्पणं கூடுகையாலே संप्रदानार्थत्वं கூடுமென்று கருத்து. ஆனாலும் "तत्कस्मा इत्यपेक्षायां विष्णवे सइतीर्यते" என்று विष्णु शब्दத்தில் चतुर्थीसंप्रदानार्थैயாக व्याख्यातैயானாலும் नारायणशब्दத்தில் चतुर्थिக்கு व्याख्यानं பண்ணவில்லையே? என்னவருளிச் செய்கிறார். नीचीभावेनेति-

(सा.प्रः) नन्वहिर्बुध्न्यवचने नारायण पदस्यैवाभावात्तद्गतचतुर्थ्यास्संप्रदानार्थ बोधकत्वमनुपपन्नमित्यत्र तुल्यन्यायादादिशब्दाच्च तत्सिद्धिरित्याह-नीचीभावेनेत्यादिना- व्यापकान्तरस्थवासुदेवादि शब्दो नारायणादीत्यादि शब्दार्थः-

(सा.विः) दानं च स्वस्वत्वनिवृत्तिपूर्वक परस्वत्वापादनम् - इह स्वत्वस्यैवाभावात्कथं परस्वत्वापादनम्? कथं तरां दानकर्मत्वम्? कथन्तमां दीयमानार्थशेषित्वमित्याशङ्क्य मुख्यदानशब्दार्थासंभवेऽपि ईश्वरस्स्वकीयमपि वस्तु समर्पणरूपव्याजं विना न रक्षेदिति तादृशसमर्पणमात्रमादायेह संप्रदानत्वं प्रमाणसिद्धमित्याह - दीयमानेत्यादिना-नीचीभावेन, शेषभावेन-

(सा.संः) ஆகையாலே, एकस्यैवानेकार्थोपस्थापकत्वसंभवात्-पूर्वं प्रदातृ शेषक्षुद्र दध्यादेरिन्द्रादि स्वत्वापादने इन्द्रादेस्संप्रदानत्ववदिह-विष्ण्वादेर्न सम्प्रदानत्वम् । किन्तु स्वत एव भगवच्छेषभूतस्यात्मनस्तत एव हेतोः स्वरक्षणभरे स्वान्वयत्यागपूर्वकतया तवैव भर इत्यर्पणमिति व्याख्यातमहिर्बुध्न्येनेत्याह - दीयमानेत्यादिना - अहिर्बुध्न्यवचनमेव संप्रदानपरमुदाहरति - नीची भावेनेत्यादिना नमश्शब्दस्थूलयोजनाप्रतिपन्नेन नीचीभावेन, आत्मनश्शेषत्वेन हेतुनेति यावत् - सन्द्योत्यं,

**मूः - विष्णवादिषु चतुर्थी (सा) तत्संप्रदानप्रदर्शिनी ।**
**नीचीभूतो ह्यसावात्मा यत्संरक्ष्यतयार्प्यते ।**
**तत्कस्मा इत्यपेक्षायां विष्णवे स इतीर्यति ॥**

என்கிற **वचन**த்தில் **"विष्णवादिषु"** என்கையாலே **नारायणादिशब्द**ங்களில் **चतुर्थि**யும் **व्याख्यानं** பண்ணப்பட்டது- **इ**த்திரு**मन्त्र**த்தில் **नकारं** முதலான ஏழு திரு **अक्षर**ங்களுக்கும் **प्रत्येकं मन्त्रस्मृति**களிற் சொன்ன **अर्थ**ங்களை-

(सा.दीः) तत्संप्रदानप्रदर्शिनी - तस्मिन्समर्पणे यत्संप्रदानकारकं तत्प्रदर्शिनी विष्णवादिषु शब्देषु चतुर्थी । आदिशब्दान्नारायणवासुदेवशब्दपरिग्रहः- சொன்ன अर्थந்தன்னையே विशिष्य காட்டுகிறார் - नीचीभूत इति-संरक्ष्यतयार्प्यत इति यत् । तत्कस्मा इत्यादि - स आत्मा विष्णवे समर्प्यत इति चतुर्थ्या इतीर्यते । अनन्तरமித்திரு मन्त्रத்துக்கு मन्त्रस्मृतिகளில் சொன்ன अर्थविषयமாக पूर्वाचार्यர்கள் सङ्ग्रहित्த संग्रहத்தைக்காட்டுகிறார் இத்திருमन्त्रத்திலென்று துடங்கி-

(सा.स्वाः) विष्णवादिषु चतुर्थी सा संप्रदान प्रदर्शिनी என்கையாலே आदिशब्दத்தாலே नारायणशब्द चतुर्थिயும் विवक्षितैயென்று கருத்து. இப்படி प्रमाणसंप्रदायங்களாலே पदार्थवर्णनं பண்ணினால் "नायकत्वं च सर्वेषां नामनत्वंपरे पदे । नाशकत्वं विरुद्धानां नकारार्थः प्रकीर्तितः" इत्यादिना சில आचार्यர் अक्षरार्थं சொன்னது अमूलமாகையாலே असङ्गतமாக प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார் - இத்திருमन्त्रத்தில் इति - அவர்கள் சொன்னதுவும் मन्त्रस्मृतिमूलமாகையாலே असाङ्गत्यமில்லையென்று கருத்து. यद्वा, இப்படி मूलमन्त्रத்துக்கு पदार्थकथनप्रस्तानத்திலே अखण्डप्रणवार्थं சொன்னது கூடுமோ? प्रणवமொரு वर्णமாகையாலே नकारादिवर्णங்களுக்கு अर्थं சொல்லாமல் प्रणवार्थं சொன்னால் वैरूप्यं प्रसङ्गिயாதோ? இனி नकारादिகளுக்கும் சில आचार्यர் अर्थवर्णनं பண்ணினார்களென்னிலதுக்கு मूलமில்லாமையாலே असाङ्गत्यं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். திருमन्त्रத்தில் इति -

(सा.प्रः) एवं पदार्थानुक्त्वा प्रत्यक्षरमप्यर्थानां प्रमाणेषूक्तत्वात्तानप्याह - இத்திருमन्त्रத்தில் इत्यादिना-

(सा.विः) यत्समर्पणं संरक्ष्यतयार्पितम् - तत्संप्रदानप्रदर्शिनी, तदीय संप्रदानबोधिका - विष्णवादिषु व्यापकमन्त्रस्थविष्णुवासुदेव नारायण पदेषु चतुर्थीत्यर्थः - तदेव विविनक्ति । नीचीभूत इति । पूर्वाचार्याः केचिन्मन्त्रस्मृत्यादिषु नकारादीनां सप्तानामक्षराणां तत्तद्वर्णोक्तानर्थान् सञ्जगृहुरिति तद्वचनोपन्यासपूर्वकमाह- இத்திருमन्त्रத்தில் इति-

(सा.सं:) इदमेव मे शक्यं विहितंचेति स्वविमर्शविषयम् । यत्समर्पणं, स्वनैर्भर्य फलकमर्पणम् - विष्णुशब्दो विष्णुषडक्षरी परः । आदिशब्दो अष्टाक्षरी द्वादशाक्षरीस्थ नारायणवासुदेवशब्दग्राहकः एवं च विष्णु शब्द प्रभृतिषु चतुर्थी तत्संप्रदानप्रदर्शिनी । तस्मिन्नर्पणे विष्णवादेरर्पितं प्रति सम्प्रदानता प्रदर्शिनीत्यर्थः । एतद्विवरणं नीचीभूत इति-शेषभूत इत्यर्थः । यस्मान्नीची भावाद्धेतोः स आत्मा विष्णवे प्रयोजनाय संरक्ष्यतयाऽर्प्यते - अनेन सात्विकत्यागपूर्वकताप्युक्ता भवति - इत्थमहिर्बुध्न्यादि निर्वचनप्रकारेण पदार्था व्याख्याताः । अथान्यैरपि मन्त्रप्रभावविद्भिरक्षरशस्सङ्गृहीतमप्यर्थं दर्शयति । இத்திருमन्त्रத்தில் इत्यादि -

मूः - "नायकत्वं च सर्वेषां नामनत्वं परे पदे ।
नाशकत्वं विरुद्धानां नकारार्थः प्रकीर्तितः ।।
मङ्गलत्वं महत्त्वश्च महनश्च करोति यत् ।
आश्रितानां ततो ज्ञेयो मकारार्थस्ततो बुधैः ।।
नास्तिक्यहानिर्नित्यत्वं नेतृत्वं च हरेः पदे ।
नाकारसेविनांनृणां मन्त्रविद्भिः प्रकीर्तितः ।।
रञ्जनं भगवत्याशु रागहानिस्ततोऽन्यतः ।
राष्ट्रत्राणादिकं चापि प्राप्यते रेफसेवया ।।
योगोद्योगः फलं चाशु यकारात्प्राप्यते बुधैः ।
वर्णनं च तथा विष्णोर्वाणीसिद्धिर्णकारतः ।।
यक्षराक्षसवेतालभूतादीनां भयाययः ।
एवमक्षरनिर्वाहो मन्त्रविद्भिः प्रकीर्तितः ।।"
इत्यादिகளாலே சில आचार्यர்கள் सङ्ग्रहित्तार्கள் -

(सा.दीः) नायकत्वं च सर्वेषां, सर्वेषां श्रेयसां प्रापकत्वमेकोऽर्थः परस्मिन् पदे प्रावण्यजनकत्वमिति त्रयं नकारार्थः - मङ्गलत्वं, मङ्गलक (का?)रकत्वम् । महनं, पूजनम् । नित्यत्वं, भगवत्सेवायां तत्परत्वम् । हरेःपदम्, परमपदम् - तद्विषये नेतृत्वम्, आचार्यत्वम् - नृणां भवतीति अध्याहारः- नास्तिक्यहान्यादिகளை नाकारादिகளுக்கு प्रयोजनமாகச் சொல்லுகையால் नकारादिகளுக்கு नास्तिक्यहान्यादिकरत्वमर्थமென்று फलित्तது. सार्थமாக तत्तद्वर्णानुसन्धानत्தாலே तत्तदनुगुणप्रयोजन सिद्धिக்கை उचितமிறே. राष्ट्रत्राणादिकं, स्वदेशरक्षकत्वम् । आदिशब्दत्தால் राष्ट्रकृतपूजादि सङ्ग्रहीतम् । योगे भगवत्प्राप्तौ उद्योगः, त्वरा-विष्णोर्वर्णनं, तदुचितवाक्सिद्धिश्च । भयाय, भीत्या पलायनाय भवति यकारः- இனிதாம் सत्संप्रदायसिद्धமாகவருளிச் செய்த पदार्थविशेषपरामर्शपूर्वकமாக திருमन्त्रத்தை-

(सा.स्वाः) नायकत्वमिति, सर्वेषां श्रेयसां नायकत्वं, प्रापकत्वम् - परे पदे, परमपदे-नामनत्वं, प्रावण्यजनकत्वम् । विरुद्धानां, अनात्मगुणानाम् । नाशकत्वमिति त्रयं नकारार्थः- आश्रितानां मङ्गलत्वं, मङ्गलकरत्वम् । महत्वं, धर्मभूतज्ञानविकासः- महनं, पूजनम्-करोतीतियत् तत्ततः बुधैः मकारार्थो ज्ञेयः - नित्यत्वं भगवत्सेवायां तत्परत्वम् - परे पदेनेतृत्वम् आचार्यत्वम् - नाकारसेविनां नृणां भवतीति फलोक्त्या नास्तिक्यहान्यादिकरत्वं नकारार्थ इति भावः- सार्थतत्तद्वर्णानुसन्धानेन तत्क्रतुन्यायेन तत्तदनुगुणप्रयोजन सिद्धिरुचितेति भावः- राष्ट्रत्राणादिकं सुराष्ट्ररक्षकत्वम् - आदिशब्देन राष्ट्रपूज्यत्वम्-योगोद्योगः भगवत्प्राप्तौ त्वरा-विष्णोर्वर्णनम्, तदुचितवाक् । भयाय, भीत्या पलायनाय यकारः இப்படி திருमन्त्रத்துக்கு बहुविधतत्त्वहितपुरुषार्थविशेषங்கள் -

(सा.प्रः) சில आचार्यர்கள் इत्यनेनाक्षरार्थस्यापि संप्रदायागतत्वमुक्तम् एवं सप्रमाणम् -

(सा.विः) महनं, पूजनम् -

(सा.संः) नायकत्वं, श्रेयस्संप्रापकत्वम्-परे पदे, परस्मिन्पदे । नामनत्वं, प्रावण्यजनकत्वम् । महत्त्वम्, धर्मभूतज्ञानेन बृहत्वम् - महनम् - बृहणम्-तच्च कैङ्कर्यानन्दादिवर्धनम् - नित्यत्वं, भगवद्विषयरागादेः हरेः पदे नेतृत्वम्, आचार्यत्वमित्यर्थः, राष्ट्रत्राणादि । "यत्राष्टाक्षरसंसिद्धे" इत्युक्तविधया-योगे, भगवत्प्राप्तौ-उद्योगः, त्वरा - विष्णोर्विषये वर्णनम्, विविधोल्लेखेनानुभवः - वाणीसिद्धिः, तदुचितवाक्सिद्धिश्च । यः, यकारः । भयाय, भीत्यैव भवतीत्यर्थः - इत्थं व्याकरणनिरुक्तमन्त्रशास्त्रप्रक्रियया मन्त्रार्थनिरूपणफलं -

**मूः - இப்படி पदங்களினுடைய व्याकरणनिरुक्तादिसिद्धव्युत्पत्तिपरामर्शத்தாலே परवादिमूलமாக வரும் மாசற விளக்கப்பட்ட திருमन्त्रமாகிற கண்ணாடி परस्वरूपादिகளையும் स्वस्वरूपத்திற்காணவரிய நிலங்களையுமெல்லாம் सुव्यक्तமாகக் காட்டும் -**

(सा.दी) अनुसन्धिக்கும்போது मुमुक्षुவுக்கு ज्ञातव्यार्थविशेषங்களையெல்லாமிதிலே காணலாமென்கிறார்-இப்படி पदங்களினுடைய इत्यादि-व्युत्पत्तिसिद्धार्थपरामर्शத்தாலென்கை - अक्षरनिघण्टु मन्त्रस्मृत्यादि निरुक्तादीत्यादिशब्दार्थः - परस्वरूपादीत्यादि शब्दத்தால் रूपगुणविग्रहादेस्सङ्ग्रहः - उपायफलादेर्वा - स्वस्वरूपத்தில், जीवस्वरूपத்திலென்கை - காணவரிய நிலங்களை, प्रत्यक्षानुमानங்களால் इति शेषम् -

(सा.स्वाः) अर्थமானால் இம்मन्त्रத்தாலே सर्वजनங்களுக்கும் एतावदर्थपरिज्ञानமுண்டாகாமலிருக்கக் கூடுமோ? என்ன मन्त्रத்தாலே एतावदर्थपरिज्ञानहेतुவைக் காட்டா நின்றுகொண்டு उपसंहरिக்கிறார் - இப்படி इति - மாசு इति - மாசற, அழுக்கற- விளக்கப்பட்ட, व्युत्पत्तिपरामर्शத்தாலே விளக்கப்படாவிட்டால் उपदेशमात्रத்தால் एतावदर्थपरिज्ञानम् उदिயாதென்று கருத்து. காணவரிய इति- दुर्वादिमूल प्रतिबन्धकभूयसैயாலே उपदेशमात्रத்தாலே दासत्वपारतन्त्र्यादिविवेकमशक्यமென்று கருத்து - இப்படி இம்मन्त्रं स्वस्वरूपपरस्वरूपाद्यखिलार्थप्रकाशनक्षमமானாலும் अनुसन्धाता किञ्चिज्ज्ञानवान् ஆகையாலே कृत्स्नानुसन्धानमशक्यமன்றோ? ईश्वरன் उपाय மாகையாலே उपायत्वोपयुक्तरक्षकत्वादि कतिपयाकारमनुसन्धेयமென்னில் அப்போ प्राप्यனுமாகையாலே तदुपयुक्तकृत्स्नाकारமும் अनुसन्धिக்கவேண்டாவோ? என்ன मुमुक्षुदशैயில் मन्त्रத்திலே उपायत्वप्राप्यत्वोपयुक्तकृत्स्नाकारमनुसन्धातुमशक्यமானாலும் उपायत्वप्राप्यत्वोपयुक्तप्रधानगुणங்கள் अनुसन्धेयங்களென்று उपपादिக்கிறார்.

(सा.प्रः) नानाविधार्थवर्णने कुदृष्टिकथितार्थान्तरप्रदर्शकत्वरूपमलापगमेन मूलमन्त्रो जीवेश्वरौ सप्रकारौ संयक् ज्ञापयितुमलमिति सदृष्टान्तमाह- இப்படி இப்पदங்கள். इत्यादिना - अक्षरनिघव्टुमन्त्रस्मृत्यादिर्निरुक्तादीत्यादिशब्दार्थः ।' மாசற விளக்கப்பட்ட, मलापगमनं यथा तथाशोधितः रूपगुणविभूत्यादिः परस्वरूपादीत्यादिशब्दार्थः । காணவரிய நிலங்களையுமெல்லாம் - अति यत्नेन द्रष्टव्यांशान् - जीवेश्वरौ कीदृशप्रकारविशिष्टौ ज्ञापयेदित्याकाङ्क्षायां कांश्चन भगवत्प्रकारविशेषांस्तावदाह-

(सा.विः) परवादिमूलமாக इति-மாசற விளக்கப்பட்ட, मलस्यापकर्षणंयथा स्यात्तथा शोधितः । திருमन्त्रமாகிற கண்ணாடி, திருमन्त्राख्यदर्पणः - परस्वरूपादिகளையும், परस्वरूपादीन् । स्वस्वरूपத்தில் காணவரிய நிலங்களையுமெல்லாம், स्वस्वरूपविषयेऽतिप्रयत्नेन द्रष्टव्यांशान् सर्वानपि । सुव्यक्तமாகக் காட்டும், सुव्यक्तं प्रकाशयेत् । तत्र प्रथमं तावदकारेऽनुसन्धेयान्

(सा.सं:) मुमुक्षुज्ञेययावदर्थविज्ञानं तदप्यत्र स्वरूपपरयोजनायां स्वपरस्वरूपादिविषये शब्दतोऽर्थतश्च भवतीति दिङ्मात्रेण प्रदर्शयति । இப்படி इत्यादिना - காணவரிய நிலங்கள், दुर्ज्ञेय स्वभावान्

**मूः - இதுக்கு प्रतिपाद्यदेवतैயாய் प्राप्यமுமான परस्वरूத்தை இத்திருमन्त्रத்தில் शाब्दங்களாயும் आर्थங்களாயுமுள்ள प्रकारங்களோடே கூட यथाप्रमाणमनुसन्धिக்கும்போது; रक्षकत्वं, அதினுடைய स्वभावसिद्धत्वम्, அதின் सर्वविषयत्वं, रक्ष्यवस्तु विशेषानुरूपமாக रक्षैயினுடைய नानाप्रकारत्वं, सर्वदारक्षकत्वं, सर्वत्र रक्षकत्वं, सर्वप्रकाररक्षकत्वं, स्वार्थरक्षकत्वं -**

---

(सा.दीः) இனி परस्वरूपादिகளையெல்லாமிம் मन्त्रंகாட்டும் प्रकारத்தையருளிச் செய்கிறார். இதுக்கு प्रतिपाद्येत्यादिயால் - प्रात्यமுமான परस्वरूपத்தை प्राप्य प्राप्तादिகளெல்லாமிதுக்கு अर्थமாகையால் प्राप्यமான परस्वरूपத்தை अनुसन्धिக்கும்போதென்றபடி - प्रकारங்களோடே, विशेषங்களோடென்கை - रक्षकत्वमित्यादि - स्वभावसिद्धत्वं, स्वतस्सिद्धत्वं-रक्ष्यवस्तुविशेषः, बद्धमुक्तनित्यர் - सर्वदारक्षकत्वं, कालोपाध्यनुक्तिயால் - सर्वत्ररक्षकत्वं, देशोपाध्यनुक्तिயால். - सर्वप्रकाररक्षकत्वम्, प्रकारविशेषानुक्तिயால். स्वार्थरक्षकत्वं, स्वप्रयोजनाय रक्षकत्वமென்றபடி - आश्रितरक्षणமும் -

---

(सा.स्वाः) இதுக்கு प्रतिपाद्येति महावाक्यத்தாலே - प्रतिपाद्यமாய் என்று एतावन्मात्रं சொல்லாதே देवतै என்று சொல்லுகையாலே उपायत्वं द्योतितமென்றபடி. இந்த ரெண்டு विशेषणங்களாலே उपायत्वप्राप्यत्वोपयुक्तगुणरूपप्रकारங்களோடே अनुसन्धिக்கும் போதென்கிற अर्थं द्योतितமாகிறது रक्षकत्वमित्यादि । उपाध्यनुक्त्या स्वभावरक्षकत्वं, स्वतोरक्षकत्वम् - विषयानुक्तेस्सर्वविषयरक्षकत्वम् - रक्ष्यवस्तुविशेषाः, बद्धमुक्तनित्याः - रक्ष्यवस्त्वनुरूपनानाप्रकाररक्षाकर्तृत्वमिति यावत्- सर्वदिति - कालानुक्तेः सर्वत्रेति देशानुक्तेः, सर्वेति प्रकारविशेषानुक्तेः - एकविषय एव संभावित सर्वप्रकाररक्षकत्वमिति यावत् । स्वार्थाय रक्षकत्वं स्वार्थरक्षकत्वं-

---

(सा.प्रः) இதுக்கு प्रतिपाद्येत्यादिना - रक्षकत्वाद्यालुप्तचतुर्थिकाकारलभ्याः । अनन्यशेषत्वाद्या समाधिकराहित्यान्ता उकारविशिष्टलभ्याः । स्वतन्त्रः कर्तेत्युक्तेः स्वतः कर्तृत्वाद्या आश्रिताविद्या निवर्तकत्वान्ता नमश्शब्दलभ्याः - अनन्तरमुक्ताः सर्वे नारायणशब्दलभ्याः । रक्षकत्वतत्स्वा भाविकत्व सर्वविषयत्वाद्या अकारेशाब्दाः ''अनुपाधिकनिर्देशे ह्यसङ्कोचो मनीषिभिः । सिद्धे शब्दार्थसंबन्ध इति न्यायेन कथ्यते'' इत्यादेः प्रमाणाद्दीयमानार्थशेषित्वं संप्रदानत्वमित्युक्त्या चतुर्थ्याश्शेषित्वेऽर्थे तन्निरुपाधिकत्वसर्वविषयत्वात्महविरुद्देशार्हत्वसपत्नीकशेषित्वाद्याः प्रणवे शाब्दाः । निरुपाधिकनन्तव्यत्वाद्याः प्रणव - नमसोश्शाब्दाः । स्वरूपान्यथाभावस्वभावान्यथाभावराहित्य सर्वनेतृत्वाद्या नारायणपदे शाब्दाः । सर्वज्ञत्वसर्वशक्तित्वाद्यास्स्वतः कर्तृत्वाद्यास्सर्व व्यापकत्वाद्याश्च क्रमेण पदत्रयेऽप्यार्थाः - एवमन्येष्वपि -

---

(सा.विः) रक्षकत्वमारय विशेषणवत्वान्तान् सप्तदशगुणानाह - रक्षकत्वमित्यादिना - रक्षणसंरंभः, रक्षकप्रतिज्ञा - अथ लुप्तचतुर्थ्यनुसन्धेयान् भगवदीयान् शेषित्वादिकानेकादशधर्मानाह-

---

(सा.सं:) परस्वरूपस्य विशेषणद्वयमुभयथापि यथावदेवानुसन्धेयत्वाय - यथा प्रमाणमित्यनेन परोक्तोपायवैभवादीनामप्रामाणिकत्वं सूचितम् -

**मूः - सर्वरक्षकत्वापेक्षित**மான **सर्वज्ञत्वं, सर्वशक्तित्वं, स्वेच्छाव्यतिरिक्तानिवार्यत्वम्, अनतिक्रमणीयरक्षणसंरम्भत्वं, परमकारुणिकत्वं, अवसरप्रतीक्षत्वं, व्याजमात्रसापेक्षत्वं, आश्रितसुलभत्वं, विश्वसनीयत्वं, सापराधघटनाद्यनुगुणविशेषणवत्त्वं, शेषित्वम्,** அதினுடைய **निरुपाधिकत्वनित्यत्वसर्वविषयत्व**ங்கள்; -

(सा.दीः) स्वप्रयोजनமாகையால். स्वेच्छेति-रक्षणे स्वेच्छाव्यतिरिक्तங்களால் अनिवार्यत्वम् । स्वेनाप्यनतिक्रमणीय रक्षणसंरंभत्वम् - संरम्भोऽत्र प्रतिज्ञा - रक्षणोपयुक्तानि परमकारुणिकत्वादीन्युच्यन्ते-कारुणिकत्वकार्यमवसरप्रतीक्षत्वम् । रक्षणे व्याजमात्रसापेक्षत्वम्-कारुणिकत्वादि प्रयुक्तमाश्रितसुलभत्वम् - अवसरप्रतीक्षत्वादिप्रयुक्तविश्वसनीयत्वम् । उक्तसर्वगुणहेतुभूतं सापराधघटनाद्यनुगुणविशेषणवत्वम् । सापराधानां चेतनानां घटनं पुरुषकारकृत्यम् - आदिशब्दத்தால் उपायप्राप्तिविरोधिनिवर्तनयोस्सङ्ग्रहः । तत्रानुगुणविशेषणं लक्ष्मीः । एते सप्तदशगुणा रक्षणोपयुक्ता अकारे प्रकृतावनुसन्धेयाः- இனி लुप्तचतुर्थिயில் अनुसन्धेयங்களான பதினோரு गुणங்களைக் காட்டுகிறார் - शेषित्वमित्यादि - निरुपाधिकत्वमुपाधिनिर्देशं பண்ணாமையால் - नित्यत्वं, सर्वकालसंबन्धित्वम्-

(सा.स्वा) आश्रितरक्षणस्य स्वप्रयोजनत्वादिति भावः - स्वेच्छेति । स्वेच्छाव्यतिरिक्तैः अनिवार्यत्वम् । अनतीति स्वेनापीति शेषः-संरंभः, प्रतिज्ञा । सर्वज्ञत्वादीनि रक्षकत्वेनाक्षेपितस्सिद्धानि । कारुणिकत्वकार्यमवसरप्रतीक्षत्वम् । रक्षणे व्याजमात्रसापेक्षत्वंच - कारुणिकत्वादि प्रयुक्तमाश्रितसुलभत्वम् - अवसरप्रतीक्षत्वादिप्रयुक्तं विश्वसनीयत्वं, कार्यत्वम् - उत्पाद्यत्वम् - प्रयुक्तत्वं, व्यापकत्वमिति भेदः - उक्तसर्वगुणहेतुभूतं सापराधघटनाद्यनुगुणविशेषणवत्त्वम् - सापराधानां चेतनानां घटनं पुरुषकारकृत्यम् - आदिशब्देन उपायप्राप्तिविरोधिनिवर्तनं गृह्यते- तत्रानुगुणविशेषणं लक्ष्मीः एते सप्तदशगुणाः रक्षणोपयुक्ताः अकारे प्रकृतावनुसन्धेयाः । अथ लुप्तचतुर्थ्यामनुसन्धेयानेकादशगुणान् दर्शयति - शेषित्वमित्यादि । அதினுடைய इत्यादि उपाध्यनिर्देशेन निरुपाधिकशेषित्वम् -

(सा.प्रः) शब्दत्वार्थत्वे यथासम्भवमूह्ये - स्वेच्छया निवारितायां प्रलयकाले स्थापनरूपरक्षायाम् ''अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः । तमेव शरणं गच्छ नाभागतनयं मुने'' इत्युक्ते स्वेच्छया निवारिते अम्बरीषव्रतभङ्ग प्रसक्त्या सुदर्शनाभिद्रुतस्य रक्षगं प्रार्थयमानस्य दुर्वाससो रक्षणे चानिवार्यत्वासिद्धे स्स्वेच्छाव्यतिरिक्तेति विशेषणम् - संरम्भः, उद्योगः-तस्य अनतिक्रमणीयत्वं निर्विघातत्वम् - अकिञ्चनानुसन्धेय गुणानामेवात्रोक्तेर्भक्तिनिष्ठरक्षणे व्याजतया विवक्षितभरन्यासस्य भक्तेश्चापेक्षितत्वान्मात्रपदेन भक्तिव्यावृत्तिः क्रियते - सापराधेत्यादि - पुरुषकारत्वोपायत्वादियोग्यलक्ष्मी विशिष्टत्वमित्यर्थः - शेषोत्पादितातिशयाश्रयत्वयोग्यत्वं शेषित्वम् - ''लक्ष्म्यास्समस्तं चिदचित्स्वरूपं व्याप्यं तदीशस्य तु सापि सर्वम् । तथापि वा धारणमीशितृत्वं श्रीश्रीशयोर्द्वौच सदैकशेषि । अस्या मम च शेषंहि विभूतिरुभयात्मिका'' इत्यादि भगवच्छास्त्राद्यानुगुण्येनोभयाधिष्ठानैक-

(सा.विः) शेषित्वमित्यादिना - परशेषित्वहेतुत्वं, परेषां स्वव्यतिरिक्तानां जीवानां शेषित्वे दारपुत्रादीन् प्रतिशेषित्वहेतुत्वम् । सोपाधिकशेषित्वप्रदातृत्वमित्यर्थः -

(सा.सं:) संरम्भः, प्रतिज्ञा । सापराधघटनानुगुणविशेषणं श्रीः एते गुणा अकारे प्रकृतावनुसन्धेयाः - लुप्तचतुर्थ्यर्थफलिता गुणाश्शेषित्वादयः - अवधारणार्थकमध्यमाक्षरार्थफलितमनन्यशेषत्वम् । -

**मूः - अनन्यशेषत्वं, गुणकृत (पारार्थ्यं) शेषत्वं, सपत्नीकशेषित्वम्, समाभ्यधिकराहित्यम् । आत्महविरुद्देशार्हत्वम्, अचिद्बद्धमुक्तनित्यविलक्षणत्वम् - परशेषित्वहेतुत्वम् - स्वतः कर्तृत्वम्, शक्त्याधायकत्वम् - प्रेरकत्वम्, अनन्यप्रेर्यत्वम्, अनुमन्तृत्वं, कर्मसाक्षित्वम् -**

---

(सा.दीः) अनन्यशेषत्वम्, अन्यान् प्रति शेषत्वाभावः । तस्य गुणकृतशेषत्वं, सपत्नीकस्यैव शेषित्वम् - सर्वशेषित्वात्समाभ्यधिकराहित्यम् - सपत्नीकस्यैवात्महविरुद्देश्यत्वम् - शेषित्वादेवाचिदादि-विलक्षणत्वम् । परशेषित्वहेतुत्वं नाम परेषां स्वकीयवस्तुप्रति सोपाधिकशेषित्वे हेतुत्वम् । तद्दातृत्वमिति यावत् - अथ मकारे जीवस्य पराधीनज्ञातृत्व कर्तृत्वसिद्ध्या भगवति फलितங்களான குணங்கள் சொல்லுகிறார். स्वतः कर्तृत्वमित्यादि । शक्त्याधायकत्वं, जीवர்களில் ज्ञातृत्वकर्तृत्व शक्तिகளையுண்டாக்குகை. तत्तत्कार्यங்களிலவர்களைப் प्रेरिக்கைதான் अनन्यप्रेर्यனாயிருக்கை. அதில் क्वचिदनुमन्तृत्वम् - कर्मसु साक्षित्वम् -

---

(सा.स्वाः) कालानुक्त्या नित्यशेषित्वम् - विषयानुक्त्या सर्वशेषित्वम् - एतत्प्रयुक्तमनन्यशेषत्वम्, अन्यं प्रति शेषत्वाभावः - भगवतो भाववतविषये गुणकृत शेषत्वम् - सपत्नीकशेषित्वम् । सर्वशेषित्वादेव समाभ्यधिकराहित्यम् - शेषित्वादेव आत्महविरुद्देशार्हत्वम् - शेषित्वादेवाचिद्दादिविल-क्षणत्वम् - परेषां स्वकीयं प्रति सोपाधिकशेषित्वे हेतुत्वमित्येकादश - अथ मकारे नमसि च जीवस्वरूपकथनेन भगवति फलितान् विंशतिगुणानाह - स्वतः कर्तृत्वमित्यादि - शक्त्याधायकत्वं, जीवगतकर्तृत्व ज्ञातृत्वशक्त्याधायकत्वम् । प्रेरकत्वं नाम? तत्तत्कार्येषु जीवप्रेरकत्वम् - अन्यप्रेर्यत्वा भावः क्वचित्कार्ये अनुमन्तृत्वम् - कर्मसु साक्षित्वम् -

---

(सा.प्रः) शेषित्वाश्रयत्वं सपत्नीकशेषित्वम् । तत्तत्कार्ये प्रवृत्तिशक्तिजनकत्वं शक्त्याधायकत्वम् । तत्तत्पुरुषार्थोत्कृष्टेच्छाजनकत्वं प्रेरकत्वम् - कर्मानुगुण्येन निषिद्धेवा जीवे प्रवृत्त्युन्मुखे सति प्रवर्ततामिति सङ्कल्पवत्त्वमनुमन्तृत्वम् ।

---

(सा.विः) अनन्तरं मकारे जीवस्य पराधीनकर्तृत्वादिसिद्ध्या भगवति फलितान्नवगुणानाह - स्वतः कर्तृत्वमित्यादिना -

---

(सा.सः) तच्च "न तस्येशे" इति श्रुत्यर्थः - गुणकृतेति - स्वातन्त्र्यकारुण्याभ्यां कृतेत्यर्थः - लक्ष्म्यर्थकमध्यमाक्षरफलितं सपत्नीकशेषित्वम् - मकारार्थफलितमात्महविरुद्देशार्हत्वम् । परशेषित्वहेतुत्वं नाम परेषां स्वकीय वस्तुप्रति शेषित्वे हेतुत्वम् - जीवे मकार सिद्धगुणैर्भगवति फलितगुणास्स्वतः कर्तृत्वमित्यादयः - स्वतो निरुपाधिकतया-चिच्छक्तिप्रवृत्तिशक्त्यादय इह शक्तिरुच्यते ।

**मूः - सहकारित्वं, प्रियप्रवर्तकत्वं, हितप्रवर्तकत्वं, निरुपाधिकनन्तव्यत्वं, वशीकार्यत्वं, सिद्धोपायत्वं, साध्योपायहेतुत्वं, श्रुतिस्मृतिरूपाज्ञापकत्वं, दण्डधरत्वं, सर्वसमत्वम्, आश्रितपक्षपातित्वम्, अविद्यादिहेतुत्वम्, अविद्याद्यनर्हत्वम्, -**

(सा.दीः) அதில் सहकारित्वम् - आश्रितविषये प्रियप्रवर्तकत्वं हितप्रवर्तकत्वञ्च - இனி नमस्ஸில் अनुसन्धेयமான எட்டு गुणங்கள் சொல்லுகின்றன - निरुपाधिकनन्तव्यत्वमित्यादि । स्वप्रयोजनத்தை अपेक्षिயாதே स्वतो नन्तव्यत्वम् - नमनेन वशीकार्यत्वम् - वशीकृतस्य तस्य सिद्धोपायत्वम् । सिद्धोपायस्यैव स्वतस्साध्योपायप्रवर्तकत्वम् । वशीकर्तुरुत्तरकृत्यविधायकश्रुतिस्मुतिरूपाज्ञावत्त्वम् - आज्ञातिक्रमे दण्डधरत्वम् - सर्वत्रसमत्वंनामकर्मानुगुणफलप्रदत्वम् - इदं दण्डधरत्वेहेतुः - सर्वसमत्वेऽप्याश्रितपक्षपातित्वम् - पक्षपातित्वं नाम? बहूनामपराधानामल्पव्याजेन क्षमि க்கை - இனி नमश्शब्दத்தினுடைய मकारार्थமான अविद्यादिविषयமானமூன்று गुणं சொல்கின்றன - अविद्यादीत्यादि - आदिशब्दத்தால் कर्मादिगृहीतम् - तत्र हेतुत्वम्-அதாவது? कर्मफलत्वे नाविद्यादियोगकृत्त्वम्, स्वस्याविद्याद्यनर्हत्वम् - இனி नरशब्दोक्तங்களான

(सा.स्वाः) सहकारित्वम् - आश्रितविषये प्रियप्रवर्तकत्वम् - आश्रितस्य तदानीं प्रियत्वज्ञानाभावेऽपि वस्तुतः हितप्रवर्तकत्वम् - निरुपाधिकनन्तव्यत्वं स्थूलयोजनासिद्धम्-नमनेन वशीकार्यत्वं वशीकृतस्य सिद्धोपायत्वम्-सिद्धोपायस्यैवस्तस्साध्योपायप्रवर्तकत्वम् वशीकर्तुरुत्तरकृत्यविधायक श्रुतिस्मृतिरूपाज्ञावत्त्वम् - आज्ञातिक्रमे दण्डधरत्वं - तत्कृतदोषपरिहारार्थं सर्वसमत्वम् - सर्वसमत्वेऽप्याश्रितपक्षपातित्वम् - तन्नामाल्पव्याजेन अनन्तापराधसहिष्णुत्वम् अविद्यादीति-आदिशब्देन कर्म गृह्यते - स्वस्याविद्याद्यनर्हत्वम् - आश्रिताविद्यानिवर्तकत्वम्-

(सा.प्रः) अन्धप्रवृत्तावनन्धस्येवानेकपुरुषप्रापणीयाश्मकाष्ठादेः प्रापणे अन्योऽन्यस्येव जीवानां तत्तत्कार्यकरणे भगवतोऽपि कर्तृत्वेनान्वितत्वं सहकारित्वम् । एतेन चेतनैः क्रियमाणसकल व्यापारविषयककृत्याश्रयत्वं भगवत उक्तम्-भगवदुपायत्वे अनादि मुक्तत्वप्रसङ्गपरिहारार्थं वशी कार्यत्वपदम् - सर्वसमत्वादेव निषिद्धानुष्ठाने क्लेशजनकत्वरूपं दण्डधरत्वम् - विहितानुष्ठाने प्रीतिमत्वरूपपक्षपातित्त्वं च - "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति" इति तरुपदपर्याय वृक्षशब्दोक्तदेहहेतुतया "अनात्मन्यात्मबुद्धिर्या अस्वेस्वमिति या मतिः । अविद्यातरु सम्भूतबीजमेतद्द्विधास्थितम्" इत्यादिषूक्तो देहात्मभ्रमस्स्वतन्त्रात्मभ्रमश्च अविद्याकर्म

(सा.विः) इतः परं नमः पदे अनुसन्धेयानष्टगुणानाह । निरुपाधिकनन्तव्यत्वमित्यादिना - अथाखण्डनारायणपदप्रवृत्त्यंशानुसन्धेयान् त्रिंशद्गुणानाह - अविद्याद्यनर्हत्वमित्यादिना । -

(सा.संः) निरुपाधिकनन्तव्यत्वादयो नमस्यनुसन्धेयाः अचेतनसिद्धोपायव्यावृत्त्यर्थं वशीकार्यपदम् - हेतुत्वम्, प्रदत्वम् । श्रुतीति - श्रुत्यादिमुखेनाज्ञापकत्वमित्यर्थः - दण्डधरत्वमाज्ञातिक्रमवति । सर्वसमत्वमाधारत्वसुहृत्त्वनियन्तृत्त्वादिना - पक्षपातित्वं नाम अल्पव्याजेनैव आश्रितविषये क्षमावत्त्वम् । नमश्शब्दस्थ मकारसिद्धगुणफलितगुणाः अविद्यादिहेतुत्वादयः -

**मूः - आश्रिताविद्यादि निवर्तकत्वं, स्वरूपान्यथाभावराहित्यं, स्वभावान्यथाभावराहित्यं, सर्वनेतृत्वं, सर्वजगद्व्यापारलीलत्वं, सर्ववेदान्तप्रधानप्रतिपाद्यत्वम्, सर्वोपादानत्वं, सर्वनिमित्तत्वं, सत्यसङ्कल्पत्वं, सर्वशरीरित्वं, सर्वशब्दवाच्यत्वं, सर्वकर्मसमाराध्यत्वं, सर्वफलप्रदत्वं, सर्वविधबन्धुत्वं, सर्वव्यापकत्वं, निरतिशयसूक्ष्मत्वं, सर्वाधारत्वं, स्वनिष्ठत्वं, सत्यत्वं, ज्ञानत्वंम्, आनन्दत्वम्, अनन्तत्वम्, अमलत्वम्, -**

---

(सा.दीः) நாலு गुणங்கள் சொல்லுகின்றன. स्वरूपान्यथेत्यादि - नरशब्दं नृनये என்கிற धातुவில் निष्पन्नமானபோது सर्वनेतृत्वं, सर्वनिर्वाहकत्वं - तन्मूलसर्वजगद्व्यापारलीलत्वम् இனி । अखण्डनारायणशब्दार्थங்களொன்று குறைய முப்பது சொல்லப்படுகின்றன - सर्वशब्दवाच्यत्व मूलமான सर्ववेदान्तप्रधानप्रतिपाद्यत्वम् । सर्वशब्दवाच्यत्वं सर्वशरीरित्वहेतुत्वम्-இதுவும் सर्वान्तर्यामित्वप्रयुक्तम् । இதுவும் सर्वव्यापकत्वमूलम् - இதுவும் नाराः अयनंव्याप्यं यस्येति बहुव्रीहि समाससिद्धम् - सर्ववेदान्तप्रतिपाद्यत्वप्रयुक्तं सर्वकर्मसमाराध्यत्वम् - अत एव सर्वफलप्रदत्वम् - अत एवसर्वविधबन्धुत्वम् - सर्वव्यापकत्वप्रयुक्तं सर्वजगदुपादानत्वं - सर्वव्यापकत्वे हेतुर्निरतिशय सूक्ष्मत्वम् - अखिलजगन्निमित्तोपादनत्वे हेतुस्सत्यसङ्कल्पत्वं - सर्वान्तर्यामित्वात्सर्वाधारत्वम् - अत एव स्वनिष्ठत्वम् - नारशब्देन नरसंबन्धिनो नारा इति व्युत्पत्त्या सत्यत्वादीनामुक्ततया तद्वत्त्वेन भगवतस्सत्यत्वादिकमुपपद्यते -

---

(सा.स्वाः) अथ नरशब्दोक्तान् गुणानाह - स्वरूपेति । नृनय इति धातौ सर्वनेतृत्वं नाम सर्व निर्वाहकत्वम् - तन्मूलसर्वजगद्व्यापारलीलत्वम् - आहत्य चत्वारो गुणाः - अथाखण्डनारायण शब्दसिद्धानेकोनत्रिंशद्गुणानाह । सर्ववेदान्तेति - तत्र हेतुस्सर्वशब्दवाच्यत्वम् - तत्र हेतुस्सर्व शरीरित्वम् - तत्र हेतुस्सर्वान्तर्यामित्वम् - तत्र हेतुर्व्यापकत्वम् - तच्च बहुव्रीहिलब्धमिति भावः - सर्ववेदान्तप्रतिपाद्यत्वप्रयुक्तं सर्वकर्म समाराध्यत्वम् - तेन सर्वफलप्रदत्वंच - अत एव सर्वविधबन्धुत्वम् । सर्वव्यापकत्वप्रयुक्तं जगदुपादानत्वम् - सर्वव्यापकत्वे हेतुः निरतिशयसूक्ष्मत्वम् । जगन्निमित्तोपादानत्वे हेतुस्सत्यसङ्कल्पत्वम् - सर्वान्तर्यामित्वात्सर्वाधारत्वम् । अत एव स्वनिष्ठत्वम् नरसंबन्धिनो नारा इत्यत्र नारशब्देन सत्यत्वादिकमुच्यते । -

---

(सा.प्रः) वासनादिरादिशब्दार्थः - स्वभावान्यथाभावराहित्यमित्यत्र स्वभावशब्दो धर्मभूतज्ञानपरः - ननु धर्मभूतज्ञानस्यैवेच्छाद्यवस्थाभाक्त्वात्तस्यान्यथाभावाभावोक्तिरनुचितेति चेन्न - सार्वज्ञान्यथा भावाभावादिच्छाद्यवस्थानां कर्मकृतत्वाभावाच्च तथोक्तिरिति भावः - निर्विघातेच्छत्वं सत्यसङ्कल्पत्वम् - अनन्याधारत्वं स्वनिष्ठत्वम् - त्रिविधपरिच्छेदराहित्यवाच्यनन्तपदं -

---

(सा.विः) सर्ववेदान्तप्रतिपाद्यत्वमित्यादिना च - अथ व्यक्तचतुर्थ्यंशानुसन्धेयान् सप्तविंशति गुणानाह । -

---

(सा.संः) कर्मफलत्वेन अविद्यादि योक्तृत्वमित्यर्थः - आदिशब्देन असाधुकर्मकारयितृतादिर्गृह्यते । नरशब्देऽनुसन्धेयास्स्वरूपान्यथाभावेत्यादयः । सर्ववेदान्तेत्यादिना अखण्डनारायण शब्देऽनुसन्धेयगुणाः । -

**मूः - निरूपितस्वरूपविशेषणानुक्तानन्तगुणवत्त्वं, नित्यदिव्यमङ्गलविग्रहवत्त्वं, परव्यूहाद्यवस्थावत्त्वम् - सत्यावतारत्वम् (अजहत्स्वस्वभावत्वम्) अप्राकृतावतारत्वम्, अकर्मवश्यावतारत्वम्, अकालनियमावतारत्वम्, आश्रितार्थगुणपरिवाहावतारत्वं, सर्वावस्थ शुभाश्रयत्वं, सर्वावस्थलक्ष्मीसहचरत्वं, दिव्यभूषणायुधमहिषीस्थानपरिजनपरिच्छदद्वारपालपार्षदादिमत्वं, स्थूलशरीरविश्लेषकत्वं, विश्रमस्थानत्वंम्, अनुग्रहविशेषवत्वं, ब्रह्मनाडीद्वारप्रकाशकत्वं - तत्प्रवेशकत्वंम्, ब्रह्मरन्ध्रोत्क्रान्तिहेतुत्वम्, अर्चिराद्यातिवाहिक नियोक्तृत्वं, सूर्यद्वारादिनेतृत्वंम्, अण्डावरणप्रकृतिमण्डलातिक्रमहेतुत्वं, विरजातीरप्रापकत्वं, सूक्ष्मशरीरविश्लेषकत्वम्, अप्राकृतदेहप्रदत्वं, दिव्याप्सरस्सत्कारादि प्रयोजकत्वं, ब्रह्मगन्धादिप्रवेशकत्वं, नित्यमुक्तसत्कार विशेषहेतुत्वं, पर्यङ्काधिरोहणपर्यन्तादरवत्त्वं, परिपूर्णानुभवहेतुत्वं, प्रधानप्राप्यत्वं, सदेहविदेह बहुदेहकृत सर्वविधकैङ्कर्य प्रतिसम्बन्धित्वम्, अवाप्तसमस्तकामत्वं,**

(सा.दीः) निरूपितस्वरूपविशेषगुणाः ज्ञानशक्त्यादयस्तद्वत्वम् - सत्यावतारत्वं, परमार्थமான प्रादुर्भावங்களையுடையவனாகை - अप्राकृतद्रव्योपादानावतारविग्रहत्वम् । आश्रितार्थं गुणपरिवाहरूपावतारत्वम् - अन्यत्स्पष्टम् - இனி व्यक्तचतुर्थियில் अनुसन्धेयங்களான இருபத்தேழு गुणங்கள் சொல்லப்படுகிறன - स्थूलशरीरविश्लेषकत्वमित्यादि - अनन्तरं विश्रमस्थानत्वं हार्दरूपेणेति विवक्षितम् - आतिवाहिकाः, अर्चिरादिपुरुषाः - तत्प्रेरकत्वமென்றபடி - सदेहेन विदेहेन बहुदेहेन च कृतसर्वकैङ्कर्यप्रतिसंबन्धित्वम् - एवंभूतकैङ्कर्यप्रदानेनावाप्तसमस्तकामत्वम् - अत एव

(सा.स्वाः) निरूपितस्वरूपविशेषणगुणाः ज्ञानशक्त्यादयः । तद्वत्वम् - नित्यदिव्यमङ्गलविग्रहवत्त्वं - परव्यूहाद्यवस्थावत्त्वम् - सत्यावतारत्वं नाम परमार्थप्रादुर्भाववत्त्वम् - अप्राकृतावतारत्वम्, अप्राकृतद्रव्योपादानावतारविग्रहवत्त्वम् - आश्रितेति - आश्रितार्थं गुणपरिवाहरूपावतारत्वम् । अन्यत्स्पष्टम् - अथ नारायणपदचतुर्थ्यामनुसन्धेयान् सप्तविंशतिगुणान् दर्शयति । स्थूलेत्यादिना । विश्रमस्थानत्वं, स्थूलशरीरविश्लेषजनितश्रमापनयनस्थानत्वम् - हार्दरूपेणानुग्रहविशेषवत्त्वम् - ''हार्दानुगृहीतश्शताधिकया'' इति सूत्रसूचितानुग्रहविशेषवत्त्वम् । सदेहेति - सदेहेन विदेहेन बहुदेहेन च कृतसर्वकैङ्कर्यप्रतिसंबन्धित्वम् - अवाप्तेति-

(सा.प्रः) सर्वव्यापकत्वस्य पृथगुक्त्या देशपरिच्छेदराहित्यव्यतिरिक्तपरम् -

(सा.विः) स्थूलशरीरविश्लेषकत्वमित्यादिना -

(सा.संः) अवतारस्याश्रितार्थत्वाद्वात्सल्यादिगुणकृतत्वाच्चाश्रितार्थगुणपरिवाहावतारत्वमित्युक्तम् - स्थूलशरीरविश्लेषकत्वादयश्चतुर्थ्यामनुसन्धेयाः- विश्रमस्थानत्वं, ''मनसि करणग्रामम्'' इत्युक्तघटनजनितश्रम परिहर्तृत्वम् - हार्दानुग्रहीत इत्युक्तानुग्रहोऽनुग्रहविशेषः - अवाप्तसमस्तकामत्वमिह सदेहादीत्युक्तकैङ्कर्यप्रदानेन स्वसर्वकामावाप्तिकृतम् ।

**मू: - निरतिशयानन्दवत्त्वम्, निरतिशयभोग्यत्वं, सर्वप्रकारभोग्यत्वं, सर्वदाऽनुकूलस्वभावत्वम् - अत्यन्ततुल्य भोगप्रदत्वम्, आश्रितविश्लेषासहत्वम्, अपुनरावृत्तिहेतुत्वम्** என்று இவை **प्रधान**மாக மற்றும் இவற்றைத்துவக்கிவரும் ஏற்றங்களுமெல்லாம் அடைவே **अनुसन्धेय**ங்கள் **- इह सङ्गृहतः श्रीमान् गोप्ता शेषी समाधिकदरिद्रः । शरणं सर्वशरीरी प्राप्यस्सेव्यश्च साधुभिर्भाव्यः ।**

(सा.दीः) निरतिशयानन्दवनत्त्वम् - आनन्दवत्वेन निरतिशयभोग्यत्वम् । இதுக்குமேல் सर्वदानुकूलस्वभावत्वम् - विश्लेषासहत्वादपुनरावृत्तिहेतुत्वम् - இப்படியெல்லாம் கூட भगवतः अष्टोत्तरशतगुणங்களிங்கே अनुसन्धेयங்களென்கை. இங்கு गुणங்களில் अवश्यानुभावव्यत्वेन प्रधानगुणங்களை कारिकैயால் सङ्गृहिத்துக் காட்டுகிறார். इह सङ्गृहत इति - इह, मन्त्रे । संक्षेपेण अकारे श्रीमान् गोप्ताच भाव्योऽनुसन्धेयः । लुप्तचतुर्थ्यां शेषी समाधिकदरिद्रश्च भाव्यः । नमसि शरणत्वेन भाव्यः ।

(सा.स्वाः) एवंभूतकैङ्कर्य प्रदानेनावाप्तसमस्तकामत्वम् । ततएवनिरतिशयानन्दवत्त्वम् । शेषं स्पष्टम् । ஆனாலும் एतावदष्टोत्तरशतगुणங்கள் தான் मन्दप्रज्ञருக்கு नियमेन अनुसन्धातुं शक्यங்களோ? என்ன இந்த प्रधानगुणங்களிலும் अवश्यानुसन्धेयात्यन्तप्रधानங்களை सङ्गृहिக்கிறார் - इहेति । इह, मन्त्रे । सङ्गृहतः, सङ्क्षेपतः - अकारेण श्रीमान् गोप्ता च भाव्यः, अनुसन्धेयः - लुप्तचतुर्थ्यां शेषी समाधिकदरिद्रश्च भाव्यः । नमसि शरणमुपायः भाव्यः - नारायणशब्दे सर्वशरीरी भाव्यः - अन्तिमचतुर्थ्यां प्राप्यत्वेन -

(सा.प्रः) काम्यन्त इति कामाः विभूत्यादयः - ते सर्वे अवाप्ता येन तत्त्वमवाप्तसमस्तकामत्वं नतु प्राप्तुं योग्यकाम्यमानत्वम् । सत्यसङ्कल्पत्वेन पौनरुक्त्यप्रसङ्गात् । एतेन पूर्णत्वमुक्तम् - परव्यूह विभवादि सर्वप्रकारैरपि भोग्यत्वं सर्व प्रकारभोग्यत्वमित्येवमाद्याकारेण तत्तत्प्रकारविशेषाणां भेदोद्रष्टव्यः । மற்றுமிவற்றை इत्यादि - सर्वविधकैङ्कर्यहेतुत्वनिरतिशयप्रियावलोकनालापनादिभिरानन्दयितृत्वमित्यादिरुक्तानुबन्धी प्रकारविशेषोऽप्यनुसन्धेय इत्यर्थः । उक्ताशेषप्रकारानुसन्धानाक्षमस्य मन्त्रार्थानुसन्धानं न सिद्ध्येदित्यत्राह - इह सङ्गृहत इत्यादि

(सा.विः) अथ तत्रात्यन्तप्रधानगुणान् कारिकया सङ्गृह्णाति - इहेति - इह, अस्मिन् मन्त्रे । सङ्गृहतः अकारे श्रीमान् गोप्ता च भाव्यः - लुप्तचतुर्थ्यां शेषी समाधिकदरिद्रश्च भाव्यः - नमसि शरण्यत्वेन -

(सा.सं:) इत्थं शब्दानार्थांश्च भगवद्धर्मान् विस्तरेणानुसन्धेयान् प्रदर्श्य तेषु प्रधानान् जपादि कालावश्यानुसन्धेयान् सङ्गृह्णाति - इहेति - मन्त्र इत्यर्थः - श्रीमान् गोप्तेत्यकारार्थः । अवरक्षण इति धात्वर्थरक्षणस्थ गोप्तृत्वरूपस्य "लक्ष्म्या सह" इति प्रमाणेन । विशिष्टनिष्टत्वात् । एवं प्रकृत्यर्थमुक्त्वा प्रत्ययार्थ माह । शेषीति - तादर्थ्यचतुर्थ्यानुशासनाच्छेषित्वं चतुर्थ्यर्थ इतिभावः । श्रीमान् शेषीत्यर्थः - प्रकृतिप्रत्ययाभ्यां फलितमाह । समाधिकदरिद्र इति - निस्समाभ्यधिक इत्यर्थः । नमश्शब्दार्थभाह - शरणमिति - पन्थानकार इत्युक्तविधया वा तदीयस्य तत्परतन्त्रस्य तं विनेष्टप्रापको नेत्याक्षेपेण वा शरणं श्रीमानेवेति भावः - नारायणशब्द प्रकृत्यर्थस्सर्वशरीरीति -

**मूः - இப்படி प्राप्यனான परमात्माவை प्रापिக்கும் जीवात्मा இத்திருमन्त्रத்தாலே अनुसन्धेयனாம்போது श्रीमद्रक्ष्यत्त्वम्, अनन्यरक्ष्यत्त्वं, सर्वत्र सर्वदा सर्वप्रकाररक्ष्यत्त्वं, सुशीलरक्षकवत्त्वं, पुरुषकारवत्वं, महाविश्वासयोगित्त्वं, सलक्ष्मीकदासत्वं, नित्यदासत्त्वं, निरुपाधिकदासत्त्वम् -**

(सा.दीः) नारायणशब्दे सर्वशरीरी भाव्यः । अन्तिमचतुर्थ्यां प्राप्यत्वेन सेव्यत्वेनच भाव्य इति - प्राप्यं, अनुभाव्यम् - सेव्यः कैङ्कर्यप्रतिसंबन्धी-இனி இம் मन्त्रानुसन्धाताவுமாய் प्राप्ताவுமான जीवस्वरूपத்தில் अनुसन्धेयगुणங்களைக் காட்டுகிறார். இப்படியென்று - श्रीमता भगवता रक्ष्यत्वं - श्रीमद्रक्ष्यत्वात्पुरुषकारवत्त्वम् । पुरुषकारवत्त्वान्महाविश्वासयोगित्वமென்று இவ்வைந்து गुणங்கள் अकारத்தில் अनुसन्धेयங்கள் - अथ लुप्तचतुर्थ्यामनुसन्धेयங்களான நாலு गुणங்கள் - सलक्ष्मीकं प्रतिदासत्वम् । कालोपाद्यभावान्नित्यदासत्वम् - उपाध्यनुक्त्या निरुपाधिकदासत्वम् ।-

(सा.स्वाः) सेव्यत्वेन च भाव्यः । व्याप्यत्वमनुभाव्यम् - सेव्यत्वं, कैङ्कर्यप्रतिसंबन्धित्वम् - இப்படி उपायप्रवृत्तனான இவ் अधिकारिக்கு स्वात्मांशத்தில் இம் मन्त्रத்திலே अनन्ताकारங்கள் प्रतिपाद्यங்களானாலும் प्राधान्येन சில आकारங்களை क्रमेणानुसन्धेयங்களென்கிறார் - இப்படியே इति - अकारे श्रीमद्रक्ष्यत्वादयः पञ्चगुणास्स्वस्यानुसन्धेयाः । लुप्तचतुर्थ्यां सलक्ष्मीकदासत्वम् - कालनिर्देशाद्यभावान्नित्यदासत्वं निरुपाधिकदासत्त्वम् - अवधारणेनानन्यार्हशेषत्वमिति चत्वारो गुणाः -

(सा.प्रः) प्राप्यस्सेव्यः, "अज्यायांसो परे सर्वे ज्यायानेको मतः परः । नन्तृनन्तव्यभावेन तेषां तेन समन्वयः" इत्यादि प्रमाणाच्छेषभूतस्य शेषिणि वृत्तिभूतं नमनंसेवा । तत्प्रतिसंबन्धीत्यर्थः - गोप्तृत्व, शेषित्व, शरणत्व, प्राप्यत्व कैङ्कर्यप्रतिसंबन्धित्वानि शाब्दानि - इतरे त्वार्था इत्यर्थः । अथ जीवप्रकारानाह । இப்படியே इत्यादिना - अनन्यार्हशेषत्वज्ञानवत्वस्वस्मैभासमानत्वादयः प्रणवे शाब्दाः । अविद्या कर्मवासनादिमत्व तन्निवृत्तिसापेक्षत्वादिर्नमसि शाब्दः, अक्षयत्वस्वतो बहुत्व भगवद्व्याप्यत्वादिर्नारायणपदे शाब्द इत्याद्यूह्यम् - श्रीमद्रक्ष्यत्वाद्या अकारलभ्याः - सलक्ष्मीकदासत्वाद्या उकारलभ्याः - ज्ञानत्वाद्या मकारलभ्याः ।

(सा.विः) नारायणशब्दे सर्वशरीरी भाव्यः । अन्तिम चतुर्थ्यां प्राप्यस्सेव्यश्च भाव्य इति । प्राप्यः, अनुभाव्यः - सेव्यः, कैङ्कर्यप्रतिसंबन्धीकर्तव्यः - अथाकारेऽनुसन्धेयान्पञ्चजीवगुणानाह - श्रीमद्रक्ष्यत्वमित्यादिना - लुप्तचतुर्थ्यनुसन्धेयांश्चतुरो गुणानाह - सलक्ष्मीकदासत्वमित्यादिना -

(सा.सं:) नाराः अयनं यस्येति बहुव्रीहौ ल्युटश्चाधिकरणार्थत्वे सर्वान्तः प्रवेशनियमनमर्थ इति भावः । तत्पुरुषे तु ल्युटः कर्मार्थत्वे प्राप्यत्वमर्थ इत्यभिप्रयन्नाह - प्राप्य इति । उत्तरचतुर्थ्यर्थस्सेव्य इति, सेवारूपकैङ्कर्य प्रतिसंबन्धीत्यर्थः - कैङ्कर्यस्य शेषवृत्तिरूपस्य तादर्थ्यचतुर्थ्यर्थत्वादिति भावः - अथैतन्मन्त्रानुसन्धातृगताननेकानुसन्धेयाकारानाह । இப்படியே इत्यादिना । महाविश्वा-सयोगित्वमित्यन्ता अकारेऽनुसन्धेयगुणाः - अथ लुप्तचतुर्थ्यामनुसन्धेयानाह - सलक्ष्मीकेत्यादिना -

**मूः - अनन्यार्ह(शेषत्वं) दासत्वं, ज्ञानत्वं, आनन्दत्वं स्वयंप्रकाशत्वं, स्वस्मै भासमानत्वम्, अहं शब्दवाच्यत्वम्, अणुपरिमाणत्वं, सूक्ष्मत्वं, छेदनाद्यनर्हत्वं, चतुर्विंशति तत्त्वविलक्षणत्वम्, अमलत्वम्, ईश्वरादन्यत्वम्, ज्ञातृत्वम् - आनुकूल्यादि योग्यत्वं, परमपुरुषार्थापेक्षार्हत्वम्, नियोगयोग्यत्वम्, कैङ्कर्ययोग्यत्वम्, सर्वसाक्षात्कारयोग्यत्वं, निरतिशयानन्दयोग्यत्वम्, परापेक्षकर्तृत्वम्, सोपाधिकस्वामित्वं, भागवतशेषत्वं, भागवतकिङ्करत्वम्, अनन्योपायत्वम्, अविद्यादिमत्त्वम्, -**

(सा.दीः) अवधारणतः अनन्यार्हदासत्वम् - இனி मकारத்தில் अनुसन्धेयங்களான பதினெட்டு गुणங்கள் - ज्ञानत्वमित्यादि - ज्ञानस्यैवानुकूलरूपत्वादानन्दत्वम् - मकारத்தின் अस्मच्छब्दव्युत्पत्तियாலே अहं श्ब्दवाच्यत्वम् - मकारस्य मस परिमाण इति धातोः निष्पन्नतमाणुपरिमाणत्वम् - अत एवसूक्ष्मत्वम् - अत एवच्छेदनाद्यनर्हत्वम् - ज्ञानत्वादिना चतुर्विंशति तत्त्वविलक्षणत्वम् - अत एवामलत्वम् - अणुत्वादीश्वराद्भिन्नत्वम् - ज्ञानस्वरूपत्वे सत्येवज्ञातृत्वम् - अत एवानुकूल्यादियोग्यत्वम् - ज्ञातृत्वादेव परमपुरुषार्थापेक्षार्हत्त्वम् । नियोगयोग्यत्वम् । नियोगः, नियमनम् । इदं कुर्विति । तद्योग्यत्वम् - अत एव कैङ्कर्येऽपि योग्यत्वम् - तत्पूर्वभावि सर्वसाक्षात्कारयोग्यत्वम् - अत एव निरतिशयानन्दयोग्यत्वम् - இனி जीवனுக்கு नमस्ஸில் अनुसन्धेयங்களான ஐந்து गुणங்கள் - परापेक्षकर्तृत्त्वमित्यादि - परमात्माधीनकर्तृत्वமென்றபடி. स्वकीयेषु सोपाधिकस्वामित्वम् । अथ नमसि अनुसन्धेयங்களான நாலு गुणங்கள் - अविद्यादिमत्त्वमित्यादि - आदिशब्दं कर्मवासनादि ग्राहकम् ।

(सा.स्वाः) मकारे मन ज्ञाने इति व्युत्पत्त्या ज्ञानत्वम् - ज्ञानस्वरूपस्यैवानुकूलत्वादानन्दत्वम् - अस्मच्छब्दे पूर्वोत्तरलोपेनमकार शेषादहं शब्दवाच्यत्वम् । "मस परिमाणे" इति धातोरणुपरिमाणत्वम् । अत एव सूक्ष्मत्वम् - ततश्छेदनाद्यनर्हत्वम् । ज्ञानस्वरूपत्वादिभिश्चतुर्विंशतितत्त्वविलक्षणत्त्वम् - अत एवामलत्त्वम् - अणुत्वादीश्वरान्यत्वम् । मन ज्ञाने इत्यस्मिन् कर्तृव्युत्पत्त्या ज्ञातृत्वम् - अतएवा - नुकूल्ययोग्यत्वादिकमित्यादयोऽष्टादशगुणाः । नमसि परापेक्ष कर्तृत्वादयः पञ्चगुणाः - नमसो मकारे षष्ठ्यन्ते अविद्याकर्मवासनादिमत्त्वम् -

(सा.प्रः) परापेक्षकर्तृत्वाद्या नमःपदलभ्याः -

(सा.विः) अथ मकारेऽनुसन्धेयानष्टादशगुणानाह - ज्ञातृत्वमित्यादिना - अथ नमः पदेऽनुसन्धेयान्पञ्च गुणानाह । परापेक्षकर्तृत्वमित्यादिना - अथ नमः पदस्थे मकारेऽनुसन्धेयांश्चतुरो गुणानाह । अविद्यादिमत्त्वमित्यादिना - पुनरपि नमः पदानुसन्धेयान् षड्गुणानाह - अकिञ्चनत्त्वमित्यादिना -

(सा.सं:) अनन्यार्हशेषत्वमवधारणेनानुसन्धेयम् - अथ मकारेऽनुसन्धेयानाह । ज्ञानत्वमित्यादिना । मकारस्यास्मच्छब्दांशत्वात्, माङ्मान इति धातुबलाच्च स्वस्मैभासमानत्वम् अहंशब्दवाच्यत्त्वं च फलितम् - सूक्ष्मत्वं सर्वाचेतनान्तः प्रवेश समर्थत्वम् - नियोगो नियमनम् - नमस्यनुसन्धेया जीवधर्माः परापेक्षकर्तृत्वमित्यादयः - सोपाधिकस्वामित्वं स्वीयान् प्रति विवक्षितम् । नरशब्दानुसन्धेयानाह । विशिष्टवेषத்தாலே इत्यादिना -

**मूः - करणादिना सापेक्षज्ञानविकासवत्त्वं, संसारभयाक्रान्तत्वम्, अविद्यानिवृत्तिसापेक्षत्वम्, अकिञ्चनत्वम्, ईश्वरसौहार्दादिमत्त्वं, सदाचार्यप्राप्तिमत्वम्, साध्योपायानुष्ठानार्हत्त्वम्, उपायनिष्ठत्वं, महाप्रभावत्त्वम्, विशिष्टवेषத்தாலே सृष्टिसंहारविषयत्वम्, अक्षयत्वं, स्वतो बहुत्वम्, असङ्ख्यातत्त्वम्, ईश्वरव्याप्यत्वम्, ईश्वरनियाम्यत्वम्, ईश्वरधार्यत्त्वम्, இவற்றினடியாக வந்த ईश्वरशरीरत्वम्, ईश्वरलीलारसहेतुत्वम्, ईश्वरभोगोपकरणतार्हत्त्वं, तदधीनगतित्त्वं, तदधीनतत्प्राप्तित्वम्, ऐश्वर्यकैवल्यनिरपेक्षकत्वं, भगवत्प्राप्त्यर्थित्वम्, -**

---

(सा.दीः) अतएव करणादिसापेक्षज्ञान विकासवत्त्वं, इन्द्रियापेक्षज्ञान प्रसरत्व மென்றபடி - अविद्यादिमत्त्वात्तन्मूलसंसाराद्भीतत्त्वम् - अविद्यादेर्निवृत्त्यपेक्षत्वम् - पुनरपि नमस्यनुसन्धेयங்களான षड्गुणங்கள் - अकिञ्चनत्वमित्यादि - उपायान्तरानर्हत्वமென்றபடி - ईश्वर सौहार्दादि उपायहेतुतया नमस्यनुसन्धेयமென்றபடி - उपायनिष्ठत्वादेव महाप्रभावत्त्वम् - இனி नारशब्देऽनुसन्धेयங்களான பதிநாலு गुणங்கள் - विशिष्टवेषத்தால் इत्यादि - प्रकृतिविशिष्टवेषத்தாலேயென்கை - अक्षयत्वम् - இது नरशब्दार्थம். असङ्ख्यातत्वं, नारः नराणां समूहः என்கையால் - ईश्वरव्याप्यत्वं बहुव्रीहिपक्षे - तन्मूलनियाम्यत्वं, तद्धेतुभूतधार्यत्वम् - अन्तः प्रविश्य नियमनप्रयुक्ततच्छरीरत्वम् । नियाम्यत्वाल्लीलारसहेतुत्वम् । तस्मादेव भोगोपकरणतार्हत्वम् । सर्वत्र तदधीनगतित्वम् - तदधीन तत्प्राप्तिर्यस्यतत्त्वम् - भोगोपकरणतार्हत्वादेरैश्वर्यकैवल्यनिरपेक्षत्वम् - अत एव भगवत्प्राप्त्यर्थित्वम् । अथ व्यक्तचतुर्थ्यामनुसन्धेयங்களான பத்து गुणங்கள் -

---

(सा.स्वाः) इन्द्रियादिकरणसापेक्षज्ञान प्रसरत्वं - संसारभयाक्रान्तत्त्वम् - अतएवाविद्यादि निवृत्तिसापेक्षत्वमिति चत्वारो गुणाः । पुनश्च नञ् सहितमकारे उपायान्तरानर्हतारूपाकिञ्चनत्वम् - ईश्वरसौहार्दादिमत्त्वम् - उपायपरनमस्यर्थलब्धमेवमाचार्य प्राप्तिमत्त्वम् - साध्योपायानुष्ठानार्हत्वम् - उपायनिष्ठत्वमत एव महाप्रभाववत्त्वमिति षड्गुणाः - अथ नारशब्दे प्रकृति विशिष्टत्वाकारेण सृष्टिसंहारादिभाक्त्वम्, स्वरूपतोऽक्षयत्वम् । नारा इति बहुवचनसिद्धं बहुत्वमसङ्ख्यातत्त्वम् - बहुव्रीहिपक्षे ईश्वरव्यापित्वम् - तन्मूलं नियाम्यत्वम् - तद्धेतुभूतं धार्यत्वम् - अन्तः प्रविश्य नियमनप्रयुक्तं तच्छरीरत्वम् - नियाम्यत्वादीश्वरलीलारसहेतुत्वम् - अत एव भोगोपकरणतार्हत्वम् - सर्वत्र तदधीनगतिमत्त्वम् - तदधीन तत्प्राप्तिमत्त्वम् - भोगोपकरणत्वादेरैश्वर्यकैवल्य निरपेक्षत्वम् - अत एव भगवत्प्राप्त्यर्थित्वमित्येते चतुर्दशगुणाः -

---

(सा.प्रः) विशिष्टवेषத்தாலே इत्यारभ्योक्ता नारायणपदलभ्याः - இவை इत्यादि ।

---

(सा.विः) इतः परं नारशब्दानुसन्धेयांश्चतुर्दशगुणानाह - विशिष्टवेषத்தாலே इत्यादिना । अथ व्यक्तचतुर्थ्यनुसन्धेयान् दशगुणानाह -

---

(सा.संः) नारशब्दार्थः बहुत्वम् - नारा इति बहुवचनार्थः । असङ्ख्यातत्त्वमीश्वरव्याप्यमित्यादयो बहुव्रीह्याद्यर्थाः । तदधीनगतित्वम्, तदधीन प्रवृत्तिनिवृत्त्याश्रयत्वम् । भोगोपकरणतार्हत्वादेव ऐश्वर्यकैवल्यनिरपेक्षत्वम् - सर्वाविद्योन्मुक्तत्वादयो व्यक्त्यचतुर्थ्यामनुसन्धेयाः -

**मूः - सर्वाविद्योन्मुक्तत्वम्, आविर्भूतस्वरूपत्वम्, सर्वद्रष्टृत्वं, सर्वप्रकारभगवदनुभवैकभोग्यत्वं, निरतिशयानन्दवत्त्वम् । भगवद्भोगार्थभोक्तृत्वम्, ऐच्छिकविग्रहादिमत्त्वम्, इच्छाविघातरहितत्त्वम्, ईश्वरलक्षणव्यतिरिक्तपरमसाम्यवत्त्वम्, अशेषकैङ्कर्यैक रतित्वम्, अपुनरावृत्तिमत्त्वम्** என்று இவை **प्रधान**ங்களாகக் கொண்டு இவற்றைத் துவக்கிவரும் மற்றுள்ள **प्रामाणिकार्थ**ங்களு மெல்லாம் இப்**पद**ங்களில் அடைவே **शब्दसामर्थ्य**த்தாலும், **अर्थस्वभाव**த்தாலும், **अनुसन्धेय**ங்கள். **पदत्रयेऽत्र संक्षेपाद्वाव्याऽनन्यार्हशेषता । अनन्योपायता स्वस्य तथाऽनन्यपुमर्थता । -**

---

(सा.दीः) सर्वाविद्योन्मुक्तत्वमित्यादि - सर्वप्रकारेणाविद्यया मुक्तत्वமென்றபடி - ततः आविर्भूतस्वरूपत्वम् । ततस्सर्वद्रष्टृत्वम् । ततस्सर्वप्रकारभगवदनुभवैकभोगत्वम् - ततो निरतिशयानन्दवत्त्वम् । भगवद्भोगार्थभोक्तृत्वम् - ஆகக் கூடி प्रधानानुसन्धेयत्वेन जीवனுடைய அறுபத்தாறு गुणங்கள் சொல்லப்பட்டன - இங்கும் अत्यन्तावश्यकत्वेनानुसन्धेयगुणत्रयத்தை सङ्गृह्य காட்டுகிறார் - पदत्रय इति மூன்று पदத்திலும் - அடைவே अनन्यार्हशेषத்தையும், अनन्योपायத்தையும், अनन्यपुरुषार्थत्वமும் अवश्यानुसन्धेयங்களென்கை -

---

(सा.स्वाः) नारायणपदव्यक्तचतुर्थ्यां सर्वप्रकारेणाविद्योन्मुक्तत्वम् - तत आविर्भूतस्वरूपत्वम् - ततस्सर्वद्रष्टृत्वम् - ततस्सर्वप्रकारभगवदनुभवैक भोगवत्वम् - ततो निरतिशयानन्दवत्त्वम् । भगवद्भोगार्थभोक्तृत्वम् । ऐच्छिकविग्रहादिमत्त्वम् । इच्छाविघातरहितत्वम् - ईश्वर लक्षणव्यतिरिक्तपरमसाम्यत्वम् । अशेषकैङ्कर्यैकवत्वम् । अपुनरावृत्तिमत्त्वमित्येकादशगुणाः । आहत्य जीवे प्राधान्येन षट् षष्ठि गुणा अनुसन्धेयाः என்றபடி - ஆனாலும் இத்தனை गुणங்களுக்கு वाचकशब्द மில்லாதேயிருக்க अनुसन्धानं கூடுமோ? என்னவருளிச் செய்கிறார் - अर्थस्वभावத்தாலும் इति । ஆனாலும் मन्दप्रज्ञருக்கு स्वात्मांशத்திலே தான் षट् षष्टीगुणங்கள் अनुसन्धातुं शक्यங்களோ? என்னவருளிச் செய்கிறார் - पदत्रयेति - प्रणवத்திலே अनन्यार्हनिरुपाधिकशेषத்தையும், नमस्ஸிலே भगवदनन्योपायத்தையும், चतुर्थीயிலே अनन्यप्रयोजनत्वமும் प्राधान्येनावश्यमनुसन्धेयமென்று கருத்து. -

---

(सा.प्रः) भागवतकैङ्कर्यैकरतित्व तदीयपर्यन्त देवतान्तरविमुखत्वादिश्चानुसन्धेय इत्यर्थः - उक्ताकाराणां जीवगतानामनेकत्वात्तदनुसन्धानाक्षमाणां सुखानुसन्धानाय तेभ्यस्सारतमान् सङ्गृह्याह - पदत्रयेत्रेत्यादिना - नन्वेवं सङ्ग्रहेण ज्ञातुं शक्यत्वे -

---

(सा.विः) सर्वाविद्याविमुक्तत्वमित्यादिना - इहात्यन्तावश्यानुसन्धेयगुणान् सङ्गृह्याह - पदत्रय इति । पदत्रये, क्रमेणानन्यार्हशेषत्वमनन्योपायत्वमनन्यपुरुषार्थत्वं च सङ्ग्रहेणानुसन्धेयमिति भावः -

---

(सा.सं:) अत्रापि सङ्ग्रहरुचीनामवश्यानुसन्धेयतया प्रधानानाकारान् सङ्गृह्णाति - पदत्रये इति - अन्ययोगव्यवच्छेदकोकारबलादनन्यार्हशेषत्वं प्रणवे । परतन्त्रदासस्य स्वतन्त्रस्वामिनं विना शरणान्तरासम्भवात्स एव तस्य शरणमित्यनन्यशरणता नमसि । व्यक्तचतुर्थ्याः कैङ्कर्यपरतया शेष भूतस्य -

मू: - இப்படி ''सर्वमष्टाक्षरान्तस्थम्'' என்னும்படியிருக்கிற இத்திருமன்த்ரத்திலே चिदचिदीश्व (रादि) रस्वरूपங்களும், जीवர்களுடைய अन्योन्यभेदமும், शेषशेषिभावादिகளாலே निरुपाधिकजीवेश्वरभेदமும், निखिलजगन्निमित्तोपादानभूतपरदेवता विशेषनिर्धारणादिகளும் सिद्धिக்கையால் இப்படியே अनुसन्धिப்பாரிருந்த ஊரிலிருக்குமவர்களுக்கும் ईश्वरன் இல்லையென்றும், निर्विशेष னென்றும், अत्यन्तोदासीन னென்றும், प्रतिफलनतुल्यैश्वर्य னென்றும், कर्मविशेषसिद्धैश्वर्यனென்றும், कदाचित्कर्मादिपरवशனென்றும், -

(सा.दीः) இனி இத்திருமன்த்ரத்தில் अर्थविशेषங்களையுள்ளபடி अनुसन्धिப்பாரிருந்த ஊரிலிருப்பார்க்கு बाह्यकुदृष्टिमतங்களால் கலக்கம் வாராதென்கிறார் - இப்படி सर्वमित्यादियाल् - तत्त्वत्रयस्वरूपமுமென்றபடி - जीवान्योऽन्य भेदமும், जीवेश्वरभेदமும், परदेवता विशेषनिर्धारणादिகளும், परत्वेन शङ्कित देवतान्तरव्यावृत्तिயும், आदिशब्दத்தால் जीवानां शेषत्वज्ञातृत्वादि सङ्ग्रहः ईश्वरனில்லையென்றும் इत्यादि - ईश्वरविषये बाह्यकृदृष्टिमतங்கள் ஆறு - ईश्वरனில்லையென்று माध्यमिकனும், मीमांसकனும் சொல்லுவர்கள். निर्विशेष னென்றுமாயிகள் - अत्यन्तोदासीनனென்று सांख्यன் - प्रतिफलनतुल्यैश्वर्यனென்று, योगमतनिष्ठன் - कर्मादिविशेषसिद्धैश्वर्यனென்றும், कदाचित्कर्मादिपरवशனென்றும் -

(सा.स्वाः) ஆனாலும் जीवेश्वरविषयத்திலே एतावदाकारानुसन्धानं कर्तव्यமோ? இதுव्यर्थமன்றோ? दुर्वादि समुदीरितकुयुक्तिमूलबुद्धिक्षोभनिरासமும் दुष्कर्म मूलान्तरशत्रुभूतविश्वासमान्द्यादिनिवृत्तिயும் प्रयोजनமென்னில் बहुकाल साध्य वेदान्त श्रवणतन्मूल मननादि निवर्त्तक्षोभमल्पकालीन मन्त्रार्थानु सन्धानमात्रத்தாலே கழியுமோ? என்னவருளிச்செய்கிறார். இப்படி सर्वमिति, இப்படியே इति च वाक्यद्वयத்தாலே - सर्वमित्यादिना सर्ववाङ्मयसारतया प्रमाण दार्ढ्यं சொன்னபடி - अनुसन्धिப்பார் इति । இவர்களிருந்த ஊரிலிருக்குமவர்களுக்கும் तत्संसर्ग த்தாலே -

(सा.प्रः) ''अत्केचेन्मधुविन्देत किमर्थं पर्वतं व्रजेत्'' इति न्यायेन विस्तरेण ज्ञानापेक्षा कस्यापि न स्यादित्यत्र सङ्ग्रहेण ज्ञाने सिद्धेऽपि बाह्यकुदृष्ट्यादि मतस्य कैश्चिद्विस्तरेणोपन्यासेऽपि निरीश्वरत्वनिर्विशेषत्वस्वातन्त्र्यादिभ्रम पूर्वकं विश्वास मान्द्यरक्षकान्तरान्वेषणादि स्वनिष्ठाविरोधिवर्गान्वय-स्स्यादिति तद्व्यावृत्त्यर्थं शक्तानां विस्तरेण ज्ञाने अशक्तानां तादृशज्ञानवन्निकट निवासेन मतान्तरजनित भ्रमस्तत्कार्यविश्वासमान्द्यादिश्च न स्यादित्याह - இப்படி सर्वमित्यादिना वाक्यद्वयेन -

(सा.विः) एवं मन्त्रार्थानुसन्धायि सहवासिनामपि वाह्यकुदृष्टिपक्षोक्तार्थैर्मतिकालुष्यं न जायत इत्याह । இப்படி इत्यादिना - अनुसन्धिப்பாரிருந்த ஊரிலிருக்குமவர்களுக்கும், एवमनुसन्धा-तृनिवासभूत ग्रामवासिनामपि अत्यन्तोदासीन इति साङ्ख्यमतम् । प्रतिफलनतुल्यैश्वर्य इति योगमतम् । कर्माधीनैश्वर्य, कर्मपरवश इति कश्चित् ।

(सा.सं:) शेष्यभिमतकैङ्कर्यं विना पुमर्थ विरहात् अनन्यपुमर्थता नारायणायेति पदे फलितार्थ इत्यर्थः - एवं मन्त्रेण जीवेश्वरस्वरूपादि परिज्ञानवत् संबन्धिनामपि बाह्यकुदृष्टिमूलव्यामोहोऽप्युपशाम्यतीत्याह - இப்படி इत्यादिना - ईश्वरादीत्यादिशब्देन उपायपुरुषार्थसङ्ग्रहः - अत्यन्तोदासीन इति साङ्ख्याः । प्रतिफलनतुल्यैश्वर्य इति योगमतनिष्ठाः ।

**मूः** - **त्रिमूर्ति**களும், **सम**ரென்றும், **एक**ரென்றும், **त्रिमूर्त्युत्तीर्णं परतत्त्व**மென்றும், **ब्रह्मादि**களிலே யொருவன் **ईश्वर**னென்றும், **स्वरूप परिणामवा**னென்றும், **निमित्तोपादानैक्यं** கொள்ள வொண்ணாதென்றும் **जीवेश्वर**ர்கள், **एकात्मा**வென்றும், **उपाधिसिद्धभेद**ரென்றும், **नित्यभिन्नाभिन्न**ரென்றும், **जीव**ன், **कर्ममात्राधीनशेषभाव**னென்றும் **अनियतशेषभाव**னென்றும் **जड**னென்றும், **ज्ञानमात्रस्वरूप**னென்றும், **नित्यमुक्त**னென்றும், **आरोपितभोग**னென்றும், **कर्ता**வல்லனென்றும், **ईश्वरनिरपेक्षकर्ता**வென்றும், **आप्रलयस्थायि**யென்றும், **आमोक्षस्थायि**யென்றும், **एक** னென்றும், **स्वनिष्ठ**னென்றும், **स्वरूपतः कार्यभूत**னென்றும், **कार्यत्व प्रसङ्गरहित**னென்றும், -

(सा.दीः) சிலர் - त्रिमूर्तिविषयத்தில் ஐந்து मतान्तरम् - அவையாவன? त्रिमूतिகளும் समரென்றும் एकரென்றும் சிலர் - त्रिमूर्तेरुत्तीर्णं परतत्त्वமென்று சிலர் ब्रह्मेत्यादि - ब्रह्मा ईश्वरனென்றும் சிலர் - ருத்ரன் ஈச்வரனென்று வேறே சிலர் - पुनरपीश्वरविषये मतद्वयम् - அதாவது? स्वरूपेण परिणामवानिति यादवप्रकाशीयाः - जगन्निमित्तमात्रमीश्वर इति नैय्यायिकादयः - இனி जीवेश्वरविषयத்தில் मतत्रयम् जीवेश्वरர்கள் एकतत्त्वமென்று मायिகள் - उपाधिसिद्धभेदரென்று भास्करीयர் - नित्यभिन्नाभिन्नரென்று यादवप्रकाशीयர். जीवविषये द्वाविंशति मतानि - कर्म मात्राधीनशेषभावனென்று केचित् - अनियमशेषभावன், नियमेन शेषत्वं नास्ति कदाचिच्छेषो भवति अशेषोऽपि कदाचित् என்கை - जडश्च भवतीत्यन्ये - ज्ञानमात्रस्वरूपனென்று प्रच्छन्नबौद्धादयः - नित्यमुक्तனென்று साङ्ख्याः - आरोपितभोगனென்று त एव - कर्ताவல்லனென்றும் सांख्यர். ईश्वरनिरपेक्षकर्ता என்று मीमांसकाः - आप्रलयस्थायिயென்று சிலர் - आमोक्षस्थायिயென்று मायिகள். एकரென்றுமவர்களே - स्वनिष्ठரென்று मीमांसकाः - ब्रह्मविशेषण भूतனன்றென்றபடி - स्वरूपतः कार्थभूतனென்று यादवप्रकाशीयाः - कार्यत्व प्रसङ्गरहितனென்று मीमांसकादयः । -

(सा.स्वाः) ''पङ्कच्छिदः फलस्येव निघर्षेणाविलं पयः'' என்று கலக்கம் नशिக்கையாலே कैमुत्य -

(सा.प्रः) परमपुरुषार्थलक्षणमोक्षतदुपायादेश्चिच्छब्दवाच्यस्यैव भगवतः प्राधान्यज्ञापनार्थं पृथगुक्तिवदीश्वरादीत्यादि शब्देन पृथङ्निर्देश इति भावः - अष्टाक्षरगताकारादि -

(सा.विः) स्वरूपपरिणामवानिति यादवमतम् । जीवेश्वरावेक इति मायिमतम् - उपाधि सिद्धभेद इति भास्करमतम् - नित्यभिन्नाभिन्न इति यादवमतम् - इदमीश्वरविषयम् - अथ जीवविषये आरोपितभोग इति कर्ता नेति च सांख्यमतम् - आप्रलयस्थायीति केचित् - आमोक्षस्थायीति मायिनः - एको जीव इति त एव - स्वनिष्ठः, ईश्वर विशेषणभूतो न भवतीतीदं मीमांसकमतम् - स्वरूपतः कार्यभूतனென்று इति यादवप्रकाशीयमतम् - कार्यत्वप्रसङ्गरहितனென்று इति मीमांसकादयः ।

(सा.संः) स्वरूपपरिणामवादिनो यादवप्रकाशीयाः - निमित्तमात्रमीश्वर इति नैयायिकाः माध्वाश्च । आत्मैक्यवादिनश्शाङ्कराः - उपाधिसिद्धभेद इति भास्करीयाः - नित्यभिन्नाभिन्न इति यादवप्रकाशीयाः । ज्ञानमात्रस्वरूपत्व, नित्यमुक्तत्व, आरोपितभोगत्व, अकर्तृत्व, व्यापारादि रहितत्ववादिनश्च साङ्ख्याः । स्वनिष्ठன், स्वतन्त्र इत्यर्थः स्वरूपतः -

**मूः - कर्ममात्रोपाय**னென்றும், **मुक्तदशै**யில் **पाषाणकल्प**னென்றும், **स्वात्मानन्दमात्रतृप्त**னென்றும், **अत्यन्तस्वतन्त्र**னாமென்றும், **ईश्वर**னோடே **एकीभूत**னாமென்றும், **व्यापारादिरहित**னென்றும், **विभागाविभागादि शक्तिमान्** என்றும், **आनन्दतारतम्यवा**னென்றும், **व्यवस्थितसालोक्यादिभेदवान्** என்றும் மற்றுமிப்புடைகளிலுள்ள **बाह्यकुदृष्टिमत**ங்களொன்றாலும் கலக்கம் வாராது. இப்படியே **रक्षक**னான **श्रियःपति**யைப்பற்ற **विश्वासमान्द्य**மும்,**रक्षकान्तरान्वेषण**மும், **''त्वं मेऽहं मे''** என்று பிணக்கும் -

(सा.दीः) कर्ममात्रोपायனென்று त एव - उपायम्, अभिमतफलोपायम् । मात्रशब्दादीश्वरव्यावृत्ति - मुक्तिदशैயில் पाषाणकल्पனென்று नैय्यायिकाः - स्वात्मानुभवानन्दमात्रतृप्तனென்று मीमांसकाः - अत्यन्तस्वतन्त्रனாமென்று पाशुपताः - ईश्वरனோடு एकीभूतனாமென்று मायिகள் - व्यापाररहित னாமென்று नैय्यायिकाः - ईश्वराद्विभागादि शक्तिमान् என்றும், यादवप्रकाशीयाः - आनन्दतार तम्यवान् என்று तत्त्ववादिகள் - व्यवस्थितसालोक्यादिभेदवान् என்றும், त एव । மற்றுமிப்புடை களிலுள்ள, வேறுமிப் प्रकारங்களிலுள்ள - ऊर्ध्वगतस्वभाववत्त्वादि पक्षाः என்றபடி - अनन्तरமிப்படி திரு मन्त्रार्थ தெரிந்தவரிருக்கும் ஊரிலிருந்தவர்க்கும் स्वनिष्ठाविरोधिகளொன்றும் अनुवर्ति யாதென்கிறார். இப்படியே रक्षकेत्यादिயால் रक्षकனுடைய श्रीपतित्वानुसन्धानத்தால் शङ्कापञ्चकहेतुவான विश्वासमान्द्यமும், तत्प्रयुक्तरक्षकान्तरान्वेषणமும், चतुर्थिயில் शेषत्वानुसन्धानத்தால் ''त्वं मेऽहं मे'' என்ற பிணக்கும் - பிணக்காவது? வழக்கு.

(सा.स्वाः) न्यायத்தாலே अनुसन्धाताக்களுக்கு बुद्धिक्षोभप्रसक्तिயில்லையென்று கருத்து - இந்த मतभेदवादिविशेषங்கள் -

(सा.प्रः) तत्तत्पदानामर्थानुसन्धानेन तेते पूर्वपक्षा निरस्ता वेदितव्या इति विविधमतोपादानम् - ऊर्ध्वगतिस्वभावत्वादिपक्षाः மற்றுமிப்புடைகளிலுள்ள इत्यनेन विवक्षिताः । பிணக்கு, विवादः, ''देहासक्तात्मबुद्धिर्यदि भवति पदं साधु विद्यात्तृतीयं, स्वातन्त्र्यान्धो यदि स्यात्प्रथममितरशेषत्वधी-श्चेद्द्वितीयम् । आत्मत्राणोन्मुखश्चेन्नम इति च पदं बान्धवाभासलोलः, शब्दं नारायणाख्यं विषयचपलधीश्चेच्चतुर्थीम् प्रपन्नः'' ।। इत्युक्तरीत्या अकारार्थानुसन्धानाद्विश्वासमान्द्यादि त्रिकस्यानुदयः - अकारार्थानुसन्धानान्निरुपाधिकान्य-

(सा.विः) कर्ममात्रोपायனென்றும், इति च त एव । मात्रशब्दादीश्वरव्यावृत्तिः । मुक्तिदशैயில், पाषाणकल्पனென்று इति नैय्यायिकाः स्वात्मानन्दानुभवमात्रतृप्त इति मीमांसकादयः - अत्यन्त स्वतन्त्र னென்று इति पाशुपताः - ईश्वरனோடு एकीभूतனாம் इति मायिनः - व्यापाररहित னாமென்று इति नैय्यायिकाः - ईश्वराद्विभागादिशक्तिमानिति यादवप्रकाशीयाः - आनन्दतारतम्यवान् इति माध्वाः - व्यवस्थित सालोक्यादिभेदवानिति च त एव - பிணக்கும், विवादश्च -

(सा.सं:) कार्य इति विभागाविभागादिशक्तिमानिति च यादवप्रकाशीयाः - आनन्द तारतम्यवान्, व्यवस्थितसालोक्यादिभेदवानिति च माध्वाः - एवं मन्त्रार्थाभिज्ञस्य स्वनिष्ठाविरोधिनो विनिवर्तन्ते इत्याह । இப்படியே इत्यादिना - ''कर्तव्यं सकृदेव'' इत्यादिनोक्तशङ्कापञ्चकारम्भकविश्वासमान्द्यं तत्प्रयुक्तरक्षकान्तरान्वेषणं च अकारार्थानुसन्धानेन, ''त्वं मेऽहं मे'' इति भ्रमः -

**मू:** - **निरुपाधिकान्यशेषत्वभ्रम**மும், **देवतान्तर प्रावण्य**மும், **तद्भक्तसंसर्ग**மும், மற்றுமுள்ள **असेव्यसेवारुचि**யும், **देहात्मभ्रमादि**களும், **स्वतन्त्रात्मभ्रमादि**களும், **स्वार्थपरिग्रह**மும், **भागवतापचार**மும், **आकिञ्चन्यविस्मृति**யும், **संसारानुवृत्तिरुचि**யும், **आत्मनाशादिभय**மும், **असदाचाररुचि**யும், **शत्रुमित्रादि विभागनिरूपण**மும், **बान्धवान्तरपरिग्रह**மும், **प्रयोजनान्तररुचि**யும், **परमप्रयोजनवैमुख्य**மும், மற்றும் **स्वनिष्ठाविरोधि**களொன்றும் பின்னாடாது. -

(सा.दी:) अन्ययोगव्यवच्छेदानुसन्धानத்தால் निरुपाधिकान्यशेषत्भ्रमமும், एतत्प्रयुक्त देवतान्तरप्रावण्य तदीयसंसर्गமும், अन्यशेषत्वभ्रमप्रयुक्तமான असेव्यसेवारुचिயும், मकारार्थानुसन्धानத்தால் देहात्मभ्रमादिகளும், नमश्शब्दार्थानुसन्धानத்தால் स्वतन्त्रात्म भ्रमादिகளும், आदिशब्दात्सर्वरक्षकत्वभ्रमமும், स्वस्य भगवच्छेषत्वानुसन्धानात्स्वार्थपरिग्रहமும், भागवत शेषत्वज्ञानाद्भागवतापचारமும், आकिञ्चन्य ज्ञानानुवृत्तैराकिञ्चन्यविस्मृतिயும், नमसोऽर्थानुसन्धानादहङ्कारादिनिवृत्त्या संसारानुवृत्तिरुचिயும், नरशब्दार्थानुसन्धानादात्मनाशादि भयமும், नारायणशब्दार्थभूतस्वतस्सुहृत्त्वज्ञानात्तदनभिमतமான असदाचाररुचिயும், सर्वेषां नरसंवन्धित्वानुसन्धानाच्छत्रुमित्रादिविभागनिरूपणமும், भगवति सर्वविधबन्धुत्वानुसन्धानाद्बान्धवान्तरपरिग्रहமும், चतुर्थ्यर्थानुसन्धानात् प्रयोजनान्तररुचिயும், अत एव परमप्रयोजनवैमुख्यமும், மற்றும், प्रयोजनभूतकैङ्कर्य -

(सा.स्वा:) सर्वार्थसिद्ध्यादिகளிலே கண்டுகொள்வது - ஆனாலும் दुर्वाद्युक्तकुयुक्त्यनुसन्धानமும் मन्त्रार्थानुसन्धानமும் तुल्यबलமாகில் பின்னாடாதென்று சொன்னது

(सा.प्र:) शेषत्वभ्रमादि चतुष्टयस्यानुदय: मकारार्थानुसन्धानाद्देहात्मभ्रमाद्यनुदय: - आत्मविषयकजडत्व-भ्रमादिरादिशब्दार्थ: । नमश्शब्दार्थानुसन्धानात्स्वतन्त्रात्मभ्रमादिपञ्चकानुदय: - स्वाधीनभोक्तृत्व भ्रमादिरादिशब्दार्थ: । स्वार्थपरिग्रहो नामस्वार्थभोक्तृत्वम् । नारायणशव्दार्थानुसन्धानादात्मनाशादिभयादि पञ्चकानुदय: - "अच्छेद्योऽयमदाह्योऽयम्" इत्युक्ताच्छेद्यत्वादिरादिशब्दार्थ: । उदासीनो मित्रादीत्यादि शब्दार्थ: ।

(सा.सं:) चतुर्थ्यर्थानुसन्धानेन, निरुपाधिकान्यशेषत्वभ्रम: तत्प्रयुक्तदेवतान्तरप्रावण्यं तदीयसंसर्ग: अन्यशेषत्वप्रयुक्तासेव्यसेवारुचिश्च अन्ययोगव्यवच्छेदार्थकोकारार्थानुसन्धानेन, देहात्मभ्रमो मकारार्थानुसन्धानेन, स्वतन्त्रात्मभ्रमो नमश्शब्दार्थानुसन्धानेन, स्वार्थपरिग्रहस्स्वस्य भगवच्छेष - त्वानुसन्धानेन, भागवतापचार: भागवतशेषत्वज्ञानात्, आकिञ्चन्य विस्मृतिराकिञ्चन्यज्ञानानुवृत्त्या, नमसोऽर्थानुसन्धानादहङ्कारादिनिवृत्त्या संसारानुवृत्तिरुचि:, नरशब्दार्थानुसन्धानादात्मनाशादितिभीति:, नारायणशब्दार्थभूतस्वतस्सुहृत्त्वस्य भगवति ज्ञानात्सर्वेषां नरसंवन्धित्वानुसन्धानाच्छत्रुमित्रादिवि-भागनिरूपणं, भगवति सर्वविधबन्धुत्वानुसन्धानात् बान्धवान्तरपरिग्रह:, चतुर्थ्यर्थानुसन्धानात्प्रयो-जनान्तररुचि:, अत एव परमप्रयोजनवैमुख्यम्, மற்றும் इत्यनेन तत्रापि स्वार्थ कर्तृत्वादि भ्रमादिच பின்னாடாது इत्यर्थ: -

**मूः - ''इह निजपक्षविरुद्धैःरीदृशनिष्ठा विरोधिभिश्चान्यैः ।**
**द्विचतुष्कसारवेदी गङ्गाह्लद इव न गच्छति क्षोभम् ।।''**

(सा.दीः) करणத்தில் स्वार्थकर्तृत्वभ्रमादिகளுமான स्वाधिकारविरोधिகளொன்றுமென்றபடி-கீழ்ச்சொன்ன अर्थத்தைக் कारिकैயால் सङ्ग्रहिத்துக் காட்டுகிறார்.

इहेति । इह, जगति । निजपक्षविरुद्धैः, बाह्यकुदृष्टिपक्षैरित्यर्थः - இது पूर्ववाक्यार्थानुवादम् । ईदृशेः, निजपक्षविरुद्धसदृशैः । निष्ठाविरोधिभिः, निष्ठा, स्वनिष्ठा । प्रपत्तिनिष्ठा । तद्विरोधिभिः, यद्वा ईदृश्याः विलक्षणभूतायाः इत्यर्थः । स्वनिष्ठाया विरोधिभिः, विश्वासमान्द्यादिभिश्च - द्विचतुष्कस्य, श्रीमदष्टाक्षरस्य मन्त्रस्य सारार्थवेदी पुमान् - गङ्गाह्लद इव नद्यन्तरस्रोतोभिरिति भावः । क्षोभं न गच्छति, अविचाल्यனாமென்றபடி - இப்படி पदार्थங்களை प्रतिपादिத்த अनन्तरं वाक्यமும்

(सा.स्वाः) கூடுமோ? என்ன सदृष्टान्तமாக उत्कर्षமருளிச் செய்கிறார். इहेति - इह, जगति - निजपक्षविरुद्धैः, बाह्यकुदृष्टिपक्षैः - ईदृशैः, निजपक्षविरुद्धसदृशैः - निष्ठाविरोधिभिः, निष्ठा, प्रपत्तिनिष्ठा - तद्विरोधिभिः - विश्वासमान्द्यादिभिश्च - द्विचतुष्कस्य श्रीमदष्टाक्षरस्य - सारार्थवेदी पुमान् - गङ्गाह्लद इव अन्यनदीभिः । क्षोभं न भजति - अथवा द्विचतुष्करूपसारप्रमाणवेदीत्यर्थः - निर्दुष्टसारभूत प्रमाणगम्यार्थानुसन्धानप्रबलतया मतान्तरप्रवृत्तीनामप्रामाणिकत्वात्तदधीनः क्षोभ एव नावतरतीति - भावः ।

(सा.प्रः) प्रयोजनान्तरसाधनरुचि परमप्रयोजनसाधनवैमुख्यादिः மற்றும் स्वनिष्ठाविरोधिகள் इत्यस्यार्थः । பின்னாடாது, नानुवर्तेत - एवं विधान् पदार्थान् प्रदर्श्य अनन्तरमेव प्रणवप्रतिपाद्यस्वभाव विशिष्टाय नारायणाय नम इत्यादिना वाक्यार्थोक्तौ पदार्थवर्णनसमाप्तिर्वाक्यार्थवर्णनप्रारम्भो वाक्यतदर्थवैविध्यं च स्फुट नजायत इति पदार्थवर्णनफलं निष्कृष्य वदन् वाक्यतदर्थजिज्ञासां वाक्ययोर्वैविध्यं च प्रदर्श्य वाक्यार्थानपि क्रमेण दर्शयति । इह निजेत्यादिना -

(सा.विः) பின்னாடாது, नानुवर्तते - उक्तार्थवेदिनं प्रशंसति - इह निजपक्षेति । इह, अस्मिन् जगति । निजपक्षविरुद्धै, बाह्यकुदृष्टिपक्षैः - अन्यैः, पूर्वोक्तभिन्नैः - ईदृशनिष्ठाविरोधिभिः प्रपत्तिनिष्ठाविरोधिभिः विश्वासमान्द्यादिभिश्च द्विचतुष्कसारवेदी, अष्टाक्षरमन्त्रसारवेदी - इतरक्षुद्रस्रोतोभिरतिविस्तीर्ण गभीर गङ्गाह्लद इव - क्षोभं, बुद्धिचापल्यम् - तरलीभावं न गच्छतीत्यन्वयः ।

(सा.सं:) एवमुक्तां स्वसिद्धान्तविरुद्ध सिद्धान्तव्यामोहनिवृत्तिं स्वनिष्ठाविरोध्यनुत्पत्तिं च विस्तरेणोक्तां सङ्गृह्णाति । इहेति - युगस्वभावहारदोषहैतुक संसर्गादि प्रयुक्तव्यामोहप्रचुरेऽस्मिन् भुवने इत्यर्थः । निजपक्षविरुद्धैः बाह्यकुदृष्टिपक्षैः - मन्त्रतः प्राप्तायास्स्वरूपादित्रयनिष्ठा सा ईदृशेत्युक्ता - तद्विरोधिभिश्च, अन्यैः, मानावमानजपरितापादिभिः - अक्षराणां द्विचतुष्कमष्टकम् - तत्सारभूतार्थाभिज्ञानवान् - गङ्गाह्लद इवेति - अत्र ''न प्रहृष्यति संमाने नावमानेनुतप्यते । गङ्गाह्लद इवाक्षोभ्यो यस्स पण्डित उच्यते ।'' इति वचनमिह विवक्षितम् -

**मूः - இத்திருமந்த்ரத்தில் வாக்யமும், வாக்யார்தமும் இருக்கும்படியெங்ஙனே யென்னில்? இத்தைஏகவாக்யமென்றும், வாக்யத்வயமென்றும், வாக்யத்ரயமென்றும், அவ்வோ ஸம்ப்ரதாயங்களாலே அநுஸந்திப்பர்கள்.**

(सा.दीः) वाक्यार्थமுமிருக்கும்படியை प्रश्नपूर्वकமாகவருளிச் செய்கிறார். இத்திருमन्त्रத்தி லென்று துடங்கி. திருमन्त्रमेकवाक्यமென்றும், वाक्यद्वयமென்றும் वाक्यत्रयமென்றும் மூன்று पक्षமுண்டு. அதில் एकवाक्यपक्षத்தில் उपायपरமென்றும் उपेयपरமென்றுமிரண்டு योजनै - वाक्यद्वयपक्षத்தில் स्वरूपपरமாயும், सपरिकरात्मसमर्पणरूपोपायपरமாயும், इष्टप्राप्त्यनिष्टनि-वृत्तिरूपपुरुषार्थ प्रार्थनापरமாயும் மூன்று योजनै - वाक्यत्रयपक्षத்தில் प्रणवनमस् ஸுக்கள் स्वरूपपरமாய் மேலிரண்டு पदமும் क्रमेणानिष्टनिवृत्तीष्टप्रार्थनापरமாயும், प्रणवं स्वरूपपरமாய் द्वितीयतृतीयपदங்கள் उपायपरமாயும், प्रणवं भरन्यासपरமாய் மேலிரண்டு पदमनिष्टनि-वृत्तीष्टप्रार्थनापरமாயும், प्रणवं स्वरूपपरமாய் नमस् उपायपरமாய் तृतीयपदं पुरुषार्थप्रार्थनापरமாயும் ஐந்து योजनै - पक्षत्रयத்திலுமெல்லாம் கூட பத்து योजनैயாயிருக்கும் - அதில் एकवाक्यपक्षத்தில் उपायपरयोजनैயை-

(सा.स्वाः) இப்படி मूलमन्त्रान्तर्गतपदங்களுக்கு परस्परविरुद्धार्थங்கள் சொன்னது கூடுமோ? परस्परविरुद्धनानार्थங்கள் एकवाक्यार्थத்திலே अन्विயாதோ? என்கிற अभिप्रायத்தாலே शङ्कित्து उत्तर மருளிச் செய்கிறார். இத்திருमन्त्रத்தில் इत्यादिना - परस्परविरुद्धार्थங்கள் एकवाक्यताविरुद्धங்களானாலும் वाक्यभेदपक्षத்தில் विरुद्धங்களன்றென்று கருத்து. ஆனாலுமிப்படி पदार्थनिरूपणं கூடுமோ? प्रणवमखण्डமாய் भगवद्वाचकமென்றும், सखण्डமாய் शेषत्वपरமென்றும், नमस्सन्यशेषत्व निवृत्तिपरமென்றும், अन्यशेषित्वनिवृत्तिपरமென்றும், स्वस्वातन्त्र्यादिनिवृत्तिपरமென்றும், नारायणपदचतुर्थी तादर्थ्यपरैயென்றும், संप्रदानपरैயென்றும், परस्परविरुद्धार्थங்களுக்கு एकवाक्यத்தில் अन्वयं கூடாதே? இனி द्विवाक्य त्रिवाक्यपक्षத்தில் अन्वयं கூடுமென்னில் एकवाक्यतापक्षத்தில் स्वरूपरूपैक वाक्यार्थமும், द्विवाक्यतापक्षத்தில் शेषित्वस्य शेषत्वनिवृत्तिरूपार्थद्वयமும், त्रिवाक्यतापक्षத்தில் स्वरूपोपायपुरुषार्थरूपार्थत्रयமும், सङ्गतமானாலும் नमस्ஸுக்கு स्वस्वातन्त्र्यनिवृत्तिपरत्वकथनமும், प्रणवத்துக்கு अखण्डतया भगवत्परत्वकथनமும், अन्तिमचतुर्थिக்கு संप्रदानपरत्वकथनமும் -

(सा.विः) एवं पदार्थभेदान् संशोध्य वाक्यार्थभेदान्वर्णयितुकामस्तद्भेदस्य वाक्यभेदाधीनत्वात्प्रथमं वाक्यतदर्थभेदप्रकाराकाङ्क्षामुद्रावयति - இத்திருமந்த்ரத்தில் इति । एकवाक्यं वाक्यद्वयं वाक्यत्रथमिति पक्षत्रयम् - तद्भेदेनार्थ बहुविधा इति वृद्धा अनुसन्दधत इत्युत्तरमाह - இத்தை इति -

(सा.सं:) इत्थं पदविभागविग्रहादिनिरूपणपूर्वकं मन्त्रस्य पदयोजना कृता - अथ वाक्यभङ्गी तदर्थभेदांश्च तत्तदाचार्याभिमतानुपपादयितुमारभते - இத்திருமந்த்ரத்தில் इत्यादिना । तत्रैकवाक्यतापक्षे वाक्यार्थद्वयम् - तत्राद्ये उपायपरो मन्त्रः - द्वितीये प्राप्यान्तर्गतशेषवृत्तिपर इत्युपपादयति ।

**मूः - இப்படி வாक्यार्थத்தையும் बहुप्रकारமாக வகுத்து अनुसन्धानंபண்ணுவர்கள். एकवाक्यமானபோது ''तस्य वाचकः प्रणवः'' इत्यादिகளிற்படியே प्रणवप्रतिपाद्यस्व-भावविशिष्टाय नारायणाय नमः என்று अन्वयமாம். -**

(सा.दीः) दर्शिப்பிக்கிறார். एकवाक्यமானபோது इत्यादिயால். तस्येति । तस्य, परमात्मनः - प्रणवो वाचकः - प्रणवप्रतिपाद्यस्वभावங்கள், जगत्कारणत्व रक्षकत्व शेषित्वादयः - இப்பக்ஷத்தில் प्रणवं தானே भगवन्नामமாயிருக்க नारायणशब्दं சொல்லுகை पुनरुक्तिயன்றோ? என்னும் शङ्कैயிலருளிச் செய்கிறார்.

(सा.स्वाः) अन्वयिயாமையாலே असङ्गतமாகாதோ? என்னவருளிச் செய்கிறார். இப்படி इति இப்படி एकैकपक्षத்தில் பலவகையாக वाक्यार्थं சொல்லுகையாலே तत्तद्वाक्यங்களிலே यथायोग्यं पदार्थங்கள் अन्वयिக்கையாலே असाङ्गत्यமில்லையென்று கருத்து. ஆனாலும் एकवाक्यतापक्षं கூடுமோ? प्रणवं शेषत्वपरமாகையாலே नमस् ஸுக்கு अभिन्नवाक्यत्वमवश्यं भाविயன்றோ? என்ன एकवाक्यतापक्षத்தில் वाक्यार्थान्वयமருளிச் செய்கிறார். एकवाक्यமானபோது इति - एकवाक्यतापक्षத்தில் प्रणवमखण्ड மாய்க்கொண்டு स्वरूपपरமன்றென்றபடி. प्रणवं भगवद्वाचकமாகில் नारायणशब्दத்தோடு पौनरुक्त्यं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார்.प्रणवप्रतिपाद्येति - अव तेष्टिलोपश्चेति मनिन्प्रत्यये प्रत्ययस्य टि लोपेष्टिलोपश्चेति ओमितिरूपनिष्पत्तेरव्ययतया रक्षकत्वंनिमित्तीकृत्य नारायण विशेषणமாகையால் पौनरुक्त्यமில்லையென்று கருத்து - ஆனாலும் प्रणवं -

(सा.प्रः) भगवति निरूढस्यापि प्रणवस्य प्रसिद्धिप्राचुर्याभावेनाव्यक्तार्थत्वेनविशेष्य निर्णायकत्वाभावात्तद्विशेष्यसमर्पकत्वं नारायणपदस्येति दर्शयंस्तस्मिन् भरसमर्पणपरत्वं नमस इति कृत्स्नस्य मन्त्रस्योपायपरत्वेन योजनां दर्शयति - एकवाक्यமானபோது इत्यादिना । प्रणवप्रतिपाद्यस्वभावविशिष्टायेति ''क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः तस्य वाचकप्रणवः'' इति हेयप्रत्यनीकत्व प्रवृत्तिनिमित्तकत्वोक्तेस्तद्विशिष्टायेत्यर्थः - एवं प्रणवस्य वाचकत्वे व्यापकत्रये नामान्तरोपादानं -

(सा.विः) इमं, मन्त्रं - வகுத்து विभज्य । एकक्रियान्वित सुबन्तपदसमुदाय वाक्यमिति वाक्यलक्षणम् - एकवाक्यत्वपक्षे उपायपरत्वमुपेयपरत्वं वा शाब्दम् - इतरदार्थमिति पक्षद्वयमभिप्रेत्य व्याचष्टे - एकवाक्यமானபோது इतिं वाचकः प्रणवः, ''ओमिति ब्रह्म - ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः'' इति प्रमाणबलादिति भावः - अस्मिन्पक्षे अवति रक्षतीति ओमिति व्युत्पत्तिः । अव रक्षण इत्यस्मान्मनिन्प्रत्यये जरत्वरेत्युपधाया वकारस्य च स्थाने उकारादेशे सार्वधातुकार्धधातुकयोरिति गुणे मनिन्प्रत्ययस्य टिलोपे च रूपं बोध्यम् । तस्य कृन्मेऽजन्त इत्यव्ययत्वेन नारायणायेति चतुर्थ्यन्तशब्द सामानाधिकरण्याच्चतुर्थ्येकवचनमुत्पाद्य तस्याव्ययादाप्सुप इति लोपो द्रष्टव्यः - ओं रक्षकत्वादि विशिष्टायेत्यर्थः । ननु प्रणवस्य भगवन्नामत्वात्तत एव -

(सा.सं:) एकवाक्यமானபோது इत्यादिना । जीवप्रधानक इवायं परमात्मप्रधानकोऽपीति तत्र प्रमाणमुदाहृतं तस्य वाचक इति - तर्हि कथं पदान्वयवाक्यार्थावित्यत्राह - प्रणवेति तत्प्रतिपाद्य स्वभावः, रक्षकत्वादयः - तर्हि प्रणवेनैव नन्तव्यविशेषोपस्थितेर्नारायणनाम्नः कृतकर्तेत्यत्राह । अव्यक्तेति -

**मूः - இப் प्रणवं தானே नामமாகவைத்தாய் நிற்க,**

**"अव्यक्तार्थतयोङ्कारः केवलं नैव साधकः"**

**என்னும் शाण्डिल्याद्युक्तप्रक्रियैயாலே व्यापकमन्त्रங்களில் नामान्तरं व्यक्त्यर्थम् । இந்த योजनाविशेषं अहिर्बुध्न्याद्युक्तமான स्थूलानुसन्धानप्रकारத்தைப்பார்த்தால் उपायपरम् -**

---

(सा.दीः) प्रणवं தானே इत्यादिயால் - परिहारமருளிச்செய்கிறார். अव्यक्तार्थतयेत्यादिயால். ओंकारः अव्यक्तार्थतया स्वस्यार्थो भगवान् तं स्फुटतया प्रकाशयितुमक्षमतया என்றபடி. केवलं, नामान्तरமன்றியே. नैव साधकः, स्वार्थனான श्रियः पतिயை शृङ्गग्राहिकया சொல்லமாட்டா தென்கை. व्यक्त्यर्थं, वाच्यस्य स्फुटप्रतिपत्त्यर्थமென்கை. இந்த योजनैயிலும் मन्त्रं किं परम्? என்னவருளிச்செய்கிறார். இந்த योजनेति -

---

(सा.स्वाः) स्वतः परमात्मनामधेयமாகையால் அதினாலே தானே परमात्मप्रतिपत्ति सिद्धिக்கையால் नारायणशब्दं व्यर्थமாக प्रसङ्गिயாதோ? द्वादशाक्षरादिகளிலே प्रणवமிருக்கச் செய்தே वासुदेवादि पदமிருக்கிறாப்போலே இங்கும் नारायणपदமிருக்கிறதென்னில் द्वादशाक्षरादि मन्त्रங்களிலே தான் वासुदेवादि पदத்துக்கு प्रयोजनமெது? என்னவருளிச்செய்கிறார். இப்प्रणवं தானே इति - अव्यक्तेति - ओंकारः अव्यक्तार्थतया, अस्पष्टार्थत्वादेव । नैव साधकः, देवताविशेषस्फुटप्रतीति जनको न भवति என்கை. व्यक्त्यर्थं, देवता विशेषस्फुटप्रतीत्यर्थ மென்றபடி- இந்தपक्षத்தில் नमस् ஸுக்கு मे, न என்று अर्थமாகில், अनन्वयமாகில், वाक्यभेदமாகில், प्रसङ्गिக்கும் प्रह्वीभावमर्थமாகில் तत्त्वहितपुरुषार्थान्यतर परत्वाभावं प्रसङ्गि யாதோ? என்னவருளிச்செய்கிறார். இந்த इति - नमस्ஸு भरन्यासपर மாகையாலே नारायणன் பொருட்டே भरமென்று अन्वयமென்று கருத்து - இந்த योजनैயில் स्वरूपपुरुषार्थयोरसिद्धि प्रसङ्गि யாதோ? என்னவருளிச்செய்கிறார். இப்படியானாலும் इति இப்படியாகில் नमस्ஸுக்கு -

---

(सा.प्रः) व्यर्थमित्यत्राह - இப்प्रणवந்தானே इत्यादि - अव्यक्तार्थतयेति - नारायणादिशब्द-वल्लक्ष्मीपतौ प्रसिद्धि प्राचुर्याभावेन स्फुटार्थत्वादित्यर्थः केवलं, प्रसिद्धपदसमभिव्याहारादि राहित्येनेत्यर्थः -

---

(सा.विः) विशेष्य प्रतिपत्तौ सत्यां नारायणपदव्यर्थमित्याशङ्क्य प्रणवस्यास्फुटार्थत्वाच्छीघ्रमर्थबोधो न भवतीति नामान्तरनिर्देश इत्याह । प्रणवंதான் इति - उपाय परमिति । नमश्शब्दश्शरणागतिपर इति भावः - प्रणवप्रतिपाद्यरक्षकत्वादि धर्मविशिष्टनारायणोद्देश्यं नमनं समर्पणमिति वाक्यार्थः । अस्मिन्पक्षे स्वरूप -

---

(सा.सं:) अव्यक्तार्थत्वं ब्रह्मशब्दवदन्यत्रापि प्रयोगेण नन्तव्यदेवताविशेषोपस्थापने मन्धरत्वम् - नैव साधकः- झटिति देवताविशेषोपस्थापको न - व्यक्त्यर्थमिति - प्रणवप्रतिपाद्यो नन्तव्यः नारायणादिशब्दवाच्यः परम पुरुष इति विशेषपर्यवसानेन स्फुटीकरणार्थमित्यर्थः । अत्रावयवशक्त्युपस्थापित सर्वरक्षकत्वाद्याकारसमर्पकत्वेन प्रणवस्य च सप्रयोजनतामभिप्रेत्य प्रणव प्रतिपाद्येत्युक्तिः - अस्त्वेवमन्वयः - उपायपरतास्य कथमित्यत्राह - இந்த इति । नमः पदस्य स्थूलयोजनाग्रहणे उपायानुष्ठानपरोऽऽद्य मन्त्र इत्यर्थः ।

**मू॰ - இப்படியானாலும் स्वरूपपुरुषार्थங்கள் இதிலே अन्तर्गतங்கள் ''बद्धाञ्जलिपुटा हृष्टा नम इत्येव वाचिनः''**

**इत्यादिகளைப் பார்த்து प्राप्यान्तर्गतशेषवृत्तिपरமாகவும் अनुसन्धिப்பார்கள். இவ் वृत्तिविशेषமும் स्वरूपानुसन्धानपूर्वकम् । -**

(सा.दीः) स्थूलानुसन्धान प्रक्रियानुसारेण என்றபடி இப்படியானாலும், मन्त्रस्योपायपरत्वेऽपि என்கை - स्वरूपपुरुषार्थங்கள் இப்பக்ஷத்தில் प्रथमतृतीयपदங்களிலும் प्रह्वीभाववाचिயான नमःपदத்திலும் अर्थात्सिद्धமாமென்கை. बद्धाञ्जति पुटा हृष्टा इत्याद्यनुसरणे இந்த योजनै उपेयपरமுமாமென்கிறார். बद्धाञ्जलीत्यादि - शेषवृत्तिः कैङ्कर्यम् - उपेयமென்றபடி, இப்பக்ஷத்தில் स्वरूपोपायत्वங்கள் सिद्धिக்கும்படி காட்டுகிறார். இவ்वृत्तिविशेषமுமென்று - स्वरूपानुसन्धानपूर्वकं, शेषत्वज्ञान पूर्वकமென்றபடி -

(सा.स्वाः) प्रह्वीभावरूपकायिकशेषवृत्तिயும் स्थूलयोजनैயிலே अर्थமாகச் சொல்லுகை யாலே அதுக்கும் वाक्ययोजनैயில் अन्वयं சொல்லவேண்டாவோ? अन्यथा तत्परित्यागं प्रसङ्गिயாதோ? என்ன तत्परமாயுமொரு योजनैயுண்டென்றருளிச் செய்கிறார். बद्धेति - नम इत्येव वादिनस्सन्तः बद्धाञ्जलिपुटाः कायिकशेषवृत्तिं कुर्वन्तः हृष्टाः என்கை - இந்த शेषवृत्तिस्वरूपादि त्रिकान्तर्गतै யன்றாகில் मन्त्रத்துக்கு तत्परत्वं கூடுமோ? என்ன प्राप्यान्तर्गतेति - இந்த योजनैயில் प्रणवप्रतिपाद्य स्वभावविशिष्ट नारायणன் பொருட்டே प्रह्वीभावादिशेषवृत्तिயைப் பண்ணுகிறேனென்று பொருளென்று கருத்து - இந்த पक्षத்தில் स्वरूपोपायसिद्धि யெங்ஙனே?என்னவருளிச்செய்கிறார். இவ்वृत्तिविशेषமும் इति - शेषत्वस्वरूपानुसन्धानமும் उपायமுமன்றிக்கே प्राप्यान्तर्गत-शेषवृत्तिसिद्धिயாமையாலே आर्थिकि மாக स्वरूपोपायங்கள் सिद्धங்களென்று கருத்து -

(सा.प्रः) ननूपायबोधनं नियोज्य तद्विशेषणोक्तिपूर्वकमेव कार्यम्? ताभ्यामेवोपायस्य निरूपणीयत्वात्तथा चात्र तयोः केनावगम इत्यत्र तथोरार्थत्वमभिप्रयन्नाह - இப்படியானாலும் इत्यादि - एवं प्राधान्येनोपायबोधकत्वमुक्त्वा एकवाक्यत्वेनैव शेषवृत्तिरूपपुरुषार्थपरत्वं वेत्याह - बद्धाञ्जलीत्यादिना । अस्मिन्पक्षे स्वरूपोपाययोरार्थत्वमाह - இவ்वृत्तीत्यादिना - शेषवृत्तिप्रार्थनायाश्शेषत्व ज्ञानाधीनत्वाच्छेषत्वृत्तिरूपकैङ्कर्यस्योपायानुष्ठान साध्यत्वाच्चोभयोश्शेषवृत्ति-

(सा.विः) ज्ञानपुरुषार्थज्ञानयोरार्थत्वमित्याह । இப்படியானாலும் इति - अन्तर्गतங்கள், स्वरूपज्ञानपुरुषार्थज्ञानयोरभावे उपायाधिकारासिद्धिरिति भावः - उपेयपरत्वपक्षमाह, बद्धाञ्जलिपुटा इति - सर्वधानुसन्धेयत्वज्ञापक नमः पदसत्त्वात्तदनुसन्धानस्य कैङ्कर्यरूपत्वात्तत्परत्वमुपायस्वरूपयोरिह सिद्धिप्रकारमाह - இவ்वृत्तिविशेषமும் इति । एतदुक्तिरूपवृत्तिविशेषोऽपि स्वरूपज्ञानपूर्वक एक -

(सा.संः) स्वरूपपुरुषार्थाप्रतिपत्तौ उपायानुष्ठानदौर्घट्यादाह - இப்படி इति अन्तर्गतत्वम्, अर्थसिद्धत्वम्, अस्मिन्नेवान्वये वाक्यार्थान्तरमाह । बद्धाञ्जलीति । शेषवृत्तिरपि स्वरूपादित्रयब- हिर्भूता चेन्न तत्परो मन्त्रस्स्यादिति शङ्कावारणाय प्राप्यान्तर्गतेति विशे (श्ले / शपे!?) षणम् - शेषवृत्तिश्च स्वरूपज्ञानाभावे स्वाधीनकर्तृत्वादि भ्रममूला स्यादित्यत्राह - இவ் वृत्तीति - अर्थसिद्धस्वरूपानुसन्धानपूर्वकमित्यर्थः - तथाप्यकृतोपायं प्रति प्राप्यतया वृत्तिप्रतिपादनमसङ्गतम् । वृत्ते दुःखात्मकत्वादित्यत्राह - அதுவும் इति -

**मू: - இ(அ)துவும் कृतोपायர்க்கு இவ்வளவு रसिக்கும் अवस्थैயில் उपजीव्यम् -**

(सा.दी:) இதுவும் इत्यादि - திருமன்त्रத்திலே प्राप्यतयानुसन्धेयமான शेषवृत्तिरसिப்பது कृतोपायமென்கிறார் - ஆகையால் प्राप्यतयानुसन्धेयशेषवृत्तियால் उपायமும் अर्थात्सिद्धமென்கை. இப்போமोक्ष दशैயில் போலே रसமில்லாமையால் प्राप्यतयानुसन्धानं கூடுமோ? என்ன சொல்லுகிறார் - இவ்வளவு रसिக்கும் अवस्थैயிலுமென்று. कृतोपायனான பின்பு अपरोक्षसिद्धமான रसलेशத்தை இவ்வளவென்கிறது. இது கொண்டு प्राप्यतयानुसन्धानं கூடுமென்கை - अपिशब्दத்தால் मोक्षदशैயிற்போல उपजीव्यமென்கிறது - இது, இவ்வृत्तिविशेषम् - இனி वाक्यद्वयपक्षத்தை अवतरिப்பிக்கிறார். -

(सा.स्वा:) ஆனாலும் मोक्षदशैயில் போல इदानीं रसமில்லாமையாலே प्रत्युत शेषवृत्तिदु:खात्मिकैயாகையாலே मन्त्रं तत्परமென்று मन्त्रार्थानुसन्धानकालத்தில் சொல்லப்போமோ? என்னவருளிச் செய்கிறார். இதுவும் इति । இதுவும், शेषत्वस्वरूपानुसन्धानपूर्वकமான இஶ்शेषवृत्तियுமென்றபடி - இவ்வளவு रसिக்கும் अवस्थैயில், परमपदத்தில் போலே अत्यन्तरस्यतापादककृत्स्न शेषिस्वभाव प्रत्यक्षமில்லாவிட்டாலும் परोक्षமாக शेषत्वமும் परमात्मस्वभावமும், தெளிந்தவனாகையாலே अल्पமாகிலும் शेषवृत्तिरसिக்கையால் இவ்வளவு अल्प रसावस्थैயிலென்றபடி. இவ்வளவு रसिக்கும் अवस्थैயிலும் इत्यपिशब्दத்துக்கு मोक्षदशैயில் போலே उपजीव्यமென்று கருத்து - இப்படி एकवाक्यतापक्षத்தில் योजनाभेदத்தாலே उपायமும் शेषवृत्तिरूपफलமும் शाब्दமாகில் प्रधानार्थं सिद्धமாகையாலே वाक्यद्वयपक्षத்துக்கு वैय्यर्थ्यं प्रसङ्गिயாதோ? -

(सा.प्र:) रूपार्थादाक्षेप्यत्वमिति भाव: - एवमेकवाक्यतयाऽर्थद्वयपरत्वमुक्त्वा नम: पदव्यतिरिक्तस्यैकवाक्यतया भगवच्छेषत्वबोधकत्वं नमसस्तु -

(सा.वि:) இதுவும், इह प्राप्यतयानुसन्धीयमानशेषवृत्तिरपि कृतोपायस्यैव - अत उभयसिद्धिरिति भाव: - ओं नारायणाय नम:, प्रणवार्थ भूताय नारायणाय नम: - तदर्थ: नम:, करणत्रयसाध्यं नमनरूपं कैङ्कर्यमिति वाक्यार्थ: - नन्विदानीं मोक्षदशानुभाव्यरसस्याभावात्कथं तादृशानुसन्धानं घटत इत्यत आह - இவ்வளவு इति - रसिக்கும் अवस्थैயில், इहसंभावित यत्किञ्चिद्रसावस्थायाम् - उपजीव्यं, भोग्यम्. இதுவும் उपजीव्यमित्यन्वय: - एवमेकवाक्यत्वपक्षे उपायपरत्वेन पुरुषार्थपरत्वेन व्याख्याय वाक्यद्वयपक्षमवलम्ब्य -

(सा.सं:) शेषत्वादि स्वरूपानुसन्धानपूर्वकशेषवृत्तिरपीत्यर्थ: - कृतोपायர்க்கு इत्यनेन उपायज्ञानानुष्ठानयोरप्यत्रार्थसिद्धत्वं सूचितम् । नम इत्युक्तेर्दुश्शककैङ्कर्याल्लघुतमत्वसूचनाय இவ்வளவு इत्युक्ति: - रसिக்கும் अवस्थै, अद्वेषाभिमुख्या दशा । उपायोत्तरदशा - समुच्चयार्थ: अवस्थैயிலும் इत्यपि शब्द: । उपजीव्यं, सुखावहम् - स्वात्माभिमानानुगुणत्वात्पुरुषार्थ व्यवस्थाया: परमशेषिशेषतयैव स्वात्मानमभिमन्यमानस्य तच्छेषवृत्तिरादित आरभ्य रस्यतया फलत्वेन प्राथिता सुखायैव भवतीत्यर्थ: ।

**मूः - இவ்விரண்டு अनुसन्धानமும் प्रतिष्ठितமாம் போது स्वरूपविवेकं வேணும்-அ(இ)தற்காக वाक्यद्वयமாக अनुसन्धिக்கும்போது अकारनारायणशब्दवाच्य सर्वरक्षकत्वसर्वाधारत्वादिविशिष्ट னானவனுக்கே நான் निरुपाधिकानन्यार्हशेषभूतன்.**

---

(सा.दीः) இவ்விரண்டு इत्यादिயால் - वाक्यद्वयपक्षத்தில் स्वरूपपरयोजनैயில் இம் मन्त्रार्थमிருக்கும்படியைக் காட்டுகிறார். अकारनारायणेत्यादि - अनन्यार्हशेषभूतனென்னுமளவும் नारायणपदान्वितप्रणवार्थपरम् - மேல் नमश्शब्दार्थम् -

---

(सा.स्वाः) என்னவருளிச் செய்கிறார் - இவ்விரண்டு अनुसन्दानமும் इति - यद्वा, शेषवृत्तिயும் उपायமும் स्वरूपतस्स्वरूपानुसन्धानपूर्वकமானாலும் मन्त्रத்திலே उपायानुसन्धानமும், वृत्तिविशेषरूपवाक्यार्थानुसन्धानமும், स्वरूपानुसन्धान सापेक्षமல்லாமையால் स्वरूपத்துக்கு अर्थसिद्धिயெங்ஙனே? என்னவருளிச் செய்கிறார். இவ் इति - उभयानुसन्धान प्रतिष्ठायाः उभयपर्यन्ततारूपतया तदर्थं स्वरूपविवेकம் अत्यन्तावश्यकः என்று கருத்து. ஆகையால் स्वरूपं शाब्दமாக सिद्धिக்கைக்காக वाक्यद्वययोजनै வேணுமென்று கருத்து. वाक्यद्वयपक्षத்தில் தான் स्वरूपं शाब्दமாகக் கூடுமோ? नमस् ஸுக்கு எனக்கு भरமல்லேனென்று பொருளானால் प्रणवத்துக்கு अकारवाच्यன் பொருட்டே அடியேன் भरत्वेन समर्पितனென்று अन्वय மாகையாலே स्वरूपं शाब्दமாக सिद्धिக்கவில்லையே? என்னவருளிச் செய்கிறார் - அதற்காக इति - இந்த पक्षத்தில் प्रणवं पदत्रयात्मकமாய், अकारं लुप्तचतुर्थ्यन्तமாய், नारायणपदविशेषणமாய், चतुर्थीशेषत्वपरैயாய், -

---

(सा.प्रः) स्वातन्त्र्यादिनिवृत्तिबोधकत्वमिति वाक्यद्वयात्मकत्वेन स्वरूपपरत्वं वेत्याह । இவ்விரண்டு इत्यादिना - नन्वकारनारायणशब्दयोर्भगवति रूढयोः हस्तकरशब्दयोरिव कथं पौनरुक्त्यभावसामानाधिकरण्यं चेत्याशङ्क्य -

---

(सा.विः) तस्मिन्पक्षे स्वरूपपरत्वमुपायपरत्वं वा पुरुषार्थपरत्वं वेति त्रेधा व्याचिकीर्षुः । प्रथमं स्वरूपपरत्वपक्षमवतारयति - இவ்விரண்டு अनुसन्धानமும் इति - उपायपुरुषार्थयोर्निर्वाहाय स्वरूपज्ञानमपेक्षितमित्यर्थः । இதுக்காக, स्वरूप ज्ञानार्थम् - वाक्यद्वयமாக इति - ओं नारायणायेत्येकं वाक्यम् । नम इत्येकं वाक्यमिति वाक्यद्वयमित्यर्थः - तत्र प्रथमवाक्यार्थमाह - अकारनारायणशब्द वाच्येति - अकारवाच्य सर्वरक्षकत्वनारायण शब्दवाच्य सर्वाधारत्व सर्वान्तर्यामित्वादि विशिष्टायेत्यर्थः । द्वितीयवाक्यार्थमाह -எனக்குரியேனல்லேன் इति । -

---

(सा.संः) तत्र प्रणवस्य भगवद्वाचकता न रूढ्या - तर्हि प्रणवप्रतिपाद्यस्वभावायेत्यनुपपत्तेः - न योगेन भगवति - पदत्रयार्थघटनायोगादित्येकवाक्यतायोजनायामस्वारस्याद्वाक्यद्वयत्वपक्षं तदा मन्त्रार्थानुसन्धानत्रैविध्यं क्रमेण मन्त्रस्य स्वरूपोपायपुरुषार्थप्रार्थनापरतां चोपपादयति - இவ்விரண்டு इत्यादिना இரண்டு इत्यनेनोपायश्शेषवृत्तिश्चोच्यते - शेषवृत्तिरूपपुरुषार्थनिष्ठायास्तदुपायनिष्ठायाश्च स्वरूपविवेकविरहेऽनुदयात्स्वरूपविवेक आवश्यक इति भावः - அதுக்காக, स्वरूपविवेकार्थम् - वाक्यद्वयत्वयोजनापक्षे प्रणवः नारायणायेति पदं चैकं वाक्यम् । नम इत्यपरं वाक्यम् । तत्र वाक्यद्वयस्यापि स्वरूपपरतया एकयोजना । अपरा तूपायपरतया । पुरुषार्थप्रार्थनापरतयाऽन्येत्युपपादयति - वाक्यद्वयமாக इत्यादिना ।

**मूः - எனக்குரியேனல்லேன், ஒன்றைப் பற்ற निरुपाधिकस्वामियुமல்லேன், निरपेक्षस्वतन्त्रனு மல்லேன் என்றதாம். अकारनारायणशब्दங்களிரண்டும் भगवन्नामமாகையாலே पुनरुक्ति வாராதோவென்னில்?**

(सा.दीः) எனக்குரியேனல்லேனென்று अहङ्कारनिवृत्तिः - ஒன்றைப்பற்றவென்று ममकारनिवृत्तिः - மேல் स्वातन्त्र्यनिवृत्तिपरम् । இப்பக்ஷத்திலும் नामद्वयத்தில் रूढियாய் வரும் पुनरुक्तिदोषத்தைப் परिहरिக்கிறார். अकारनारायणेत्यादियால்

(सा.स्वाः) नमस् ஸு स्वस्यशेषत्वनिवृत्तिपरமாதல், अन्यशेषित्वनिवृत्तिपरமாதல், स्वातन्त्र्यनिवृत्तिपरமாதலாய்க்கொண்டு आहत्य कृत्स्नमन्त्रமும், स्वरूपपरமாக सिद्धिக்கிறதென்று கருத்து. இந்த योजनैயில் "अकारो विष्णुवाचकः" என்கிற படியே भगवन्नामமாகை யாலே नारायणशब्दத்துக்கு पुनरुक्ति வாராதோ? என்று शङ्किத்து उत्तरமருளிச் செய்கிறார்- अकारेत्यादिना -

(सा.प्रः) सर्वरक्षकत्व सर्वाधारत्वादिभिन्न प्रवृत्तिनिमित्तकतया नाराणामयनभूतायेति वा, सर्वरक्षकाय नारायणायेति वा, सामानाधिकरण्यसिद्धेर्नपौनरुक्त्यमित्याह - अकारेत्यादिना - नच समस्तपदैकदेशस्याकाराख्य पदस्य व्यस्तपदान्तरार्थविशेषण विशेष्यत्वं चानुपपन्नमिति वाच्यम् । अस्यां योजनायां व्यस्तत्वस्यैवेष्टत्वात् ।

(सा.विः) इतिपदमनुषञ्जनीयम् - अहं मम शेषभूतो नास्मीत्यर्थः - यद्यप्युकारार्थावधारणेनैव स्वस्य स्वशेषत्वमपि निषिद्धम् । तथापि तत्र गोबलीवर्दन्यायेन स्वव्यतिरिक्तान्यशेषत्वमेव निषेद्धव्यमिति भावः - ननु गोबलीवर्दन्यायेनोकारे स्वव्यतिरिक्तविवक्षायाः किं प्रयोजनमिति चेन्मैवम् पृथक्स्वस्य शेषत्वनिषेधेन स्वगुणविग्रहादिकं प्रतिगुणाः प्रधानानुवर्तिन इति न्यायेन स्वामित्वनिष्पत्तिः फलमिति नमशशब्दव्याख्याने मूल एवोक्तं न विस्मर्तव्यम् - ननूकारे शेषत्वस्यापि निषेधसिद्ध्या तत एव स्वगुणविग्रहादिकं प्रत्यपि स्वस्य निरुपाधिक स्वामित्व निवृत्तिसिद्ध्या च न नमशशब्दस्सप्रयोजन इत्याकाङ्क्षायां नमः पद एवोक्तमर्थान्तरमाह - ஒன்றைப்பற்ற इति - तदपि न प्रयोजनम्? स्वस्य स्वनिरुपाधिक परकीयत्वे स्वसंबन्धिपुत्रदारादेरपि निरुपाधिकपरकीयत्वसिद्धेरित्यत्र तत्रैवोक्तमर्थान्तरमाह । निरपेक्षस्वतन्त्रனுமல்லேன் इति । इदमनुसन्धानं प्रणवेन सिद्ध्यतीति भावः - ननु भगवति रूढयोरकारनारायणशब्दयोः पर्यायत्वात्पौनरुक्त्यमित्याशङ्क्य योगरूढत्वात्कारणत्व सर्वाधारत्वादिबोधकत्वेन विशेषणविशेष्यभावविवक्षया पौनरुक्त्यं परिहरणीयमित्याह । अकारनारायणेति । ननु सर्वकारणत्व सर्वरक्षकत्वादिकं नारायण -

(सा.सं:) எனக்கு इत्यादिना अहङ्कारममकारस्वातन्त्र्यनिवृत्तयः क्रमेणोक्ताः - रूढिमुखेन वाचकयोरकारनारायणपदयोः पौनरुक्त्यमाशङ्क्य अकारस्यावयवार्थविवक्षया विशेषणपरत्वमादाय तत्परिहरति । अकारेति ।

मूलं। இங்கே प्रमाणसंप्रदायங்களாலே கண்டுகொள்வது. இப்படிப்பட்ட रहस्यतमार्थங்களில் हेतुनिरूपणं பண்ணக் கடவதன்று. शास्त्रத்தைக் கொண்டு विश्वसिக்கு மத்தனை யென்னுமிடம், महाभारतத்திலே - ...

(सा.दी.) ननु समुदाय ज्ञान पूर्वक सकृदुच्चारण मात्रத்தாலே यावज्जीवानुवर्तनीय भक्तिफलமான मोक्षं सिद्धिக்குமோ? என்னவருளிச்செய்கிறார். இப்படிப்பட்ட इत्यादिயால் - ...

(सा.स्वा.) को मन्त्रस्सर्वमन्त्राणां पुरश्चरणवर्जितः। सकृदुच्चारणात्नॄणां ददाति परमं पदम्।। श्रीभगवानुवाच - साधु पृष्ठं महाभाग सर्वलोक हितैषिणा। तस्माद्वक्ष्यामि ते गुह्यं येन मामाप्नुयुर्नराः।। सर्वेषामेव मन्त्राणां मन्त्ररत्नं शुभाह्वयम्। सकृत्स्मरणमात्रेण ददाति परमं पदम्।। मन्त्ररत्नं द्वयं न्यासः प्रपत्तिश्शरणागतिः। लक्ष्मीनारायणं चेति हितं सर्वफलप्रदम्।। नामानि मन्त्ररत्नस्य पर्योयेण निबोध मे। तस्योच्चारणमात्रेण परितुष्टोऽस्मि नित्यशः।। सर्वलोकेश्वरस्साक्षाद्ब्रह्माधिभुवनेश्वरः। ममापि नारदस्यापि प्रोक्तवान्मन्त्रमुत्तमम्।। शौनकादिमहर्षीणां नैमिशारण्यवासिनाम्। नारदः प्रददौ मन्त्रं प्रपत्तिं शरणागतिम्।। एतद् गुह्यतमं राजन् नजानन्ति महर्षयः। मया च प्राप्तवान्मन्त्रं शक्तिपुत्रः पराशरः।।'' इत्यादिकं द्रष्टव्यम् - तथा भगवन्तं श्रीभाष्यकारं प्रति अर्चावतारेऽपि श्रीरङ्गनाथेन ''येनकेनापि प्रकारेण द्वयवक्तात्वम्'' इत्यन्ताभिमतत्वसूचनपुरस्सरं मन्त्रान्तरव्यावृत्ततया प्रति वचनोक्तिरपि प्रमाणम् - संप्रदायः, श्रीमत्पराङ्कुशमारभ्याद्य यावदाचार्याणां तन्निष्ठतयैव ''திரு मन्त्रத்திலே பிறந்து द्वयத்திலே வளர்ந்து द्वयैकनिष्ठனாவாய்'' इत्यादिः पारम्पर्येणोपदेशः - ஆனாலும் बहुजन्म साध्यबहुयत्नसाध्य भक्ति योगादिகளுக்குமில்லாத இப்प्रभावं இம்मन्त्रத்துக்கூடுமோ? प्रमाणங்கள் தான் इतोऽप्यधिकाक्षरமான भगवन्मन्त्रங்களுக்கும் वैदिकोत्तमமான मूलमन्त्रத்துக்கு மிப் प्रभावத்தையும் இந்निबन्धनத்தையும் சொல்லாதே तान्त्रिकமான இம்मन्त्रத்துக்குச் சொல்லக்கூடுமோ? என்னவருளிச் செல்கிறார் - இப்படிப்பட்ட इति - ...

(सा.प्र.) एवमाकाङ्क्षितस्या वचनमनुचितमित्यत्र ''अहो द्वयस्य माहात्म्य महो वीर्यमहोबलम्'' इत्यादिभिः प्रामाणिकत्वावगमात् तेनैवोपायानुष्ठानसिद्धौ गुह्यार्थ ज्ञान निबन्धनः प्रमाणविरुद्ध इत्याह - இப்படிப்பட்ட इत्यादिना। द्वयस्य शरणागति प्रतिपादकत्वकृतं माहात्म्यम् - ...

(सा.वि.) ''सकृदुच्चारणे'' इत्यादि प्रमाणम् - இங்கே, अस्मिन्दर्शने। प्रमाणसंप्रदायங்களாலே, प्रमाणभूतसंप्रदायैः - கண்டுகொள்வது, यद्वा ''सकृदुच्चारणमेव संसारतारकम्'' इति श्रुति प्रतिपादित प्रभावस्य निबन्धनं शरण्य शरणागति तत्फल परिपूर्ण प्रकाशकत्वम् - इदं कुतो ज्ञातव्यमित्यत्राह - இப் प्रभावेति - प्रमाणसंप्रदायங்களாலே, संप्रदाय परम्परा प्राप्तेन द्वयमन्त्रः परिपूर्ण प्रकाशक इत्याप्त वाक्येन। இப் प्रभाव निबन्धनं, एतत्प्रभावकारणभूतापेक्षितयावदर्थ प्रतिपादकत्वम्। இங்கே, एतन्मन्त्रविषय एव। கண்டுகொள்வது, द्रष्टव्यमित्यर्थः - ननु समुदाय ज्ञान पूर्वक सकृदुच्चारणमात्रेण यावज्जीवानुवर्तनीय भक्ति फलभूतमोक्षः कथं सिद्ध्येदित्यत आह। இப்படிப்பட்ட इत्यादिना। - ...

(सा.सं.) कथमुपपन्नस्स्यादित्यत्राह। இப்படிப்பட்ட इति। इत्थमस्य शब्द द्वारकप्रभावमुक्त्वा अर्थद्वारा च - ...

मूलं। ''देवगुह्येषु चान्येषु हेतुर्देवि निरर्थकः।
बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा॥''

इत्यादि களாலே சொல்லப்பட்டது. இம்मन्त्रத்தில் विवक्षितமான आत्मसमर्पणम् –

''सर्वोपाधि विनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत्।
एतद्ध्यानं च योगश्च शेषोऽन्यो ग्रन्थविस्तरः॥''

इत्यादिகளாலே प्रकरणान्तरங்களிலும் स्तुतिக்கப்பட்டது – ''एतद्ध्यानं च ध्येयं च'' என்று पाठान्तरम् – ...

(सा.दी.) देवगुह्येष्विति – देवानामपि रहस्य भूतेषु ईदृशेष्वन्येष्वप्यर्थेषु – हेतु प्रश्नं निष्प्रयोजनम् – ஆனாலென்னசெய்யக்கடவதென்னில் சொல்கிறார் – ''बधिरान्धवदेवेति'' आत्महितैषिणा पुंसा – अत्र, देवगुह्यार्थத்தில் – बधिरान्धवदेव वर्तितव्यं, महा विश्वासத்தோடே वर्तिக்கக்கடவனென்கை. இவ்விடத்தில் आत्मसमर्पणं, आत्मभर समर्पणத்தைச் சொல்லுகிறது. सर्वोपाधिविनिर्मुक्तम् अविद्यादिसर्वोपाधि विनिर्मुक्तமான. आत्मनो निष्कृष्टस्वरूपத்தை सभरமாக ब्रह्मणि समर्पयेत्। – एतद्ध्यानं च योगश्च, ध्यानं, भक्तिः। योगः, तत्परिकरभूतः कर्मयोगादिः – सपरिकरभक्तेः फलद्वारा अत्रैवान्तर्भावात् என்று கருத்து – ध्येयं च என்று पाठமானபோது ध्येयं परब्रह्मम्। ननु இஃश्लोकத்தில் स्वरूप समर्पण மன்றோ தோற்றுகிறது? என்னவருளிச்செய்கிறார். – ...

(सा.स्वा.) देवानां रहस्य भूतेषु व्यासाद्युत्पत्तिषु अन्येष्वपि गुह्यतमेष्वर्थेषु हेतु प्रश्नं निरर्थकम् – ஆனால் என் செய்கிறதென்னில் சொல்லுகிறார் – बधिरान्धवदिति – हितैषिणा बधिरान्धवदेव शङ्कैபண்ணாமல் महाविश्वासयुक्तனாக वर्तिக்க வேணுமென்கை – ஆனாலும் ''तमेवैकं ध्यायथात्मानम्। अन्या वाचो विमुञ्चथ। क्लेशानां च क्षयकरं योगादन्यन्न विद्यते'' என்று अन्यत्यागपूर्वकமான ध्यानத்தையும் योगத்தையும் शास्त्रं स्तुतिக்கிற அத்தைவிட்டு मुमुक्षुவுக்கு द्वयार्थ व्युत्पादनमसङ्गत மன்றோ? என்னவருளிச்செய்கிறார். இம्मन्त्रத்தில் विवक्षितமான आत्मसमर्पणमिति – प्रकरणान्तरங்களிலும் इति – स्वप्रकरण स्तुत्यपेक्षया प्रकरणान्तरस्तुते रत्यन्तो पादेयतमत्वद्योतकत्वान्मुमुक्षोरिदमेवोपादेय மென்று கருத்து – न्यसेत्, समर्पयेत् – ध्यानं, भक्तिः – योगः, तत्परिकर भूतः कर्मयोगादिः। पाठान्तरे तु सम्पादनीयं ज्ञानम् – अवश्य ज्ञातव्यं चैतदेव என்கை. –

(सा.प्र.) शरणागतेरतिशयितत्व एव भवेत्। तदेव कुत इत्यत्र ''शरणागतिरप्यैषामयि निक्षिप्त कर्तव्यः कृतकृत्यः'' इत्याद्युक्तकृतकृत्यत्वापादकतया प्रमाणेषु स्तुतत्वादित्याह – இம्मन्त्रத்திலே इत्यादिना। नन्वस्य श्लोकस्य आत्मस्वरूप समर्पणस्तावकस्य कथं भरन्यासस्तावकत्वमित्यत्र ''अत्र रक्षा भरन्यासः समस्तसर्वफलार्थिनाम्।

(सा.वि.) देवगुह्येषु देवानामपि रहस्य भूतेषु। अन्येषु, ईदृशेष्वप्यन्येष्वर्थेषु – हेतुः, प्रश्नः – निरर्थकः, निष्प्रयोजनः – प्रमाण प्रतिपन्नेषु विश्वासवता भवितव्यम् – नतु वादाः कर्तव्या इति भावः। ननु शरणागते रतिशयितत्वे हि तत्प्रतिपादकतया द्वयस्यातिशयितत्वं स्यात्त देव कुत इत्यत्र प्रमाणान्तरेषु शरणागतेः प्रशंसितत्वं दर्शयति – இம्मन्त्रத்திலே इति – ...

(सा.सं.) तदाह। இம्मन्त्रத்தில் इति। सर्वेति – परिशुद्धात्मस्वरूपं रक्ष्यतया अर्पयेत्। एतन्न्यसनमेव ध्यानम्। समाधिः, चित्तव्यापारनिरोधः। शेषः, न्यसनार्थकद्वयाददतिरिक्तः निरर्थक इत्यर्थः॥

मूलं। இஶ்லோகं स्वरूपसमर्पणपर மானாலும் இங்கு சொல்லுகிற भरसमर्पण(த்திலு)ம் तदनु प्रविष्टम् – இஸ்समर्पणத்துக்கு. ''निवेदयीत स्वात्मानं विष्णावमलतेजसि। – ...''

(सा.दी.) இஶ்லோகमित्यादि - शरणागति मन्त्रத்தில் சொல்லுகிற भरसमर्पणम् இஶ்லோகத்தில் अनुप्रविष्टम् - भरसमर्पणத்திலும் இஶ்லோகத்திக்கு विवक्षैயுண்டென்று கருத்து - இஸ்समर्पणத்துக்கு स्मृत्यादिகளிற் சொன்ன मन्त्रान्तरங்களிதுக்கு सदृशமன்றென்கிறார். இஸ் समर्पणத்துக்கு इत्यादि - तदात्मा, हेतुगर्भमिदम् - ...

(सा.स्वा.) ''सर्वोपाधिविनिर्मुक्तम्'' என்கிற श्लोकத்திலே रूपसमर्पणं स्तुतिக்கப்படுகையாலே द्वयத்திலே भरसमर्पणं विवक्षितமாகையாலே द्वयविवक्षितं स्तुतिக்கப்பட்டதென்கிறது கூடுமோ? என்னவருளிச்செய்கிறார். இஶ் श्लोकमिति - भरसमर्पणं तस्मिन् श्लोके तत्प्रतिपाद्य स्वरूप समर्पणेवा अनुप्रविष्टम् - भरगर्भत्वेनैव स्वरूपस्य शेषभूतस्य समर्पणीयत्वात् என்று கருத்து - भरसमर्पणத்திலும் तदनुप्रविष्टமென்கிற पाठமானபோது तच्छ्लोकस्तुत्य स्वरूपसमर्पणं भरसमर्पणेऽन्तर्गतम्। मुमुक्षोस्स्वरूप समर्पणं विना भरसमर्पणाभावात् என்று கருத்து - ஆனாலும் श्वेताश्वतरोपनिषदादिகளிலும், व्यासस्मृत्यादिகளிலும் ''यो ब्रह्माणं विदधातिपूर्वम् - तद्विष्णोः परमं पदम्। वसुरण्यो विभूरसि'' इत्यादि प्रपत्तिकरणमन्त्रங்கள் विधिக்கப்படா நிற்க அதைவிட்டு द्वयத்துக்கே अर्थव्युत्पादन निर्बन्धமுண்டோ? என்னவருளிச் செய்கிறார் - இஸ்समर्पणத்துக்கு इति - तदात्मा तस्यात्माशरीरभूतः, तच्छरीरतया तच्छेषत्वात् - ...

(सा.प्र.) स्वरूपफलनिक्षेपस्त्वधिको मोक्षकाङ्क्षिणाम्।।'' इत्युक्तांशत्रयात्मक भरन्यासैकदेशभूतात्मस्वरूप समर्पणस्यैवंविध प्रभाववत्त्वे भरन्यास प्रभावः कैमुतिकन्यायसिद्ध इत्यभिप्रयन्नाह - இஶ்लोकमित्यादि - ननु द्वयस्येव मन्त्रान्तरस्यापि शरणागतिकरणमन्त्रत्वेन विधानात्तस्या प्यनुष्ठेयार्थप्रकाशकत्वा विशेषे द्वयस्य कथं प्रभावाधिक्यमित्यत्राह - இஸ்समर्पणத்துக்கு इति - ''यो ब्रह्माणम्'' इत्यादि श्वेताश्वतरम् - हविर्गृहीत्वात्मरूपं वसुरण्येति मन्त्रतः। - ...

(सावि.) नन्वत्र स्वरूप समर्पणं प्रशंसितम् - न भरसमर्पणमित्यत्राह - இஶ்लोकमिति - तदनुप्रविष्टं, स्वरूप समर्पणान्तर्गतम् - तत्रापि भरसमर्पणं विवक्षितम् - ''अत्र रक्षा भरन्यासस्समस्सर्वफलार्थिनाम्। स्वरूपफल निक्षेपस्त्वधिको मोक्षकाङ्क्षिणाम्।।'' इत्युक्तांशत्रयात्मक भरन्यासैकदेशभूत स्वरूपसमर्पणानुवादे नैतद्ध्यानं च योगश्चेति मोक्षसाधनभूत भक्तियोग कर्मयोगत्वेन प्रशंसितत्त्वान्मोक्ष साधन भूतस्वरूप समर्पणात्मक भरन्यास एवात्र विवक्षित इति भावः। ध्येयं च योगश्चेति पाठे - ध्येयं, ब्रह्म। योगः, भक्तिभोग इत्यर्थः। ननु प्रपत्तिकरणमन्त्रान्तराणामपि विद्यमानत्वात्कथमस्यैवातिशय इत्यत्र शरण्य शरणागति तत्फलप्रकाशन पूर्त्यभावान्नातिशय इत्याह - இஸ்समर्पणத்துக்கு इति - ...

(सा.सं.) स्वरूपन्यसनपरमिदं कथं भरसमर्पण स्तावक मित्यत्राह - இஶ்लोकमिति - निवृत्तिधर्मभूते भरसमर्पणे अनुप्रविष्टात्म समर्पण स्तुतिरियं भरार्पण स्तुति रेवेति भावः - अनुष्ठेयार्थविशद प्रकाशकत्व कृतं करणत्वे प्राधान्यमस्त्येवेत्याह - இஸ்समर्पणத்துக்கு इति। - ...

मूलं। तदात्मा तन्मनाश्शान्तस्तद्विष्णोरिति मन्त्रतः ।।''

என்று व्यासस्मृत्यादिகளிலும் श्वेताश्वरादिகளிலும் சொன்ன मन्त्रान्तरங்களிப்படி शरण्यशरणागति तत्फलங்களை विशदமாக प्रकाशिப்பியாது - திருमन्त्रத்திலும் இ(வை)ம்மூன்றும் सङ्क्षिप्तங்கள் - ஆகையாலே प्राप्यप्रापकविशेषங்களை संपूर्णமாகப் प्रकाशिப்பிக்கிற இத்द्वयமே प्रपत्तिमन्त्रान्तरங்களெல்லா வற்றிலும் प्रधानम् - ...

(सा.दी.) तच्छरीरत्व तच्छेषत्वात् என்றபடி - तस्मिन्प्राप्यत्वेन्यस्तमनाः । शान्तः, प्रयोजनान्तरानपेक्षः - ननु ஆனாலிது திருमन्त्रத்திலில்லையோ? என்னில் அருளிச்செய்கிறார் - திருमन्त्रத்திலும் इत्यादि - இவைமூன்றும், शरण्य शरणागति तत्फलங்கள் மூன்றும். प्रपत्तिमन्त्रान्तरेभ्यः இதின் परिपूर्णार्थत्वத்தை उपसंहरिக்கிறார் - ஆகையாலென்று. प्राप्यविशेषं पर ब्रह्मम् - प्रापक विशेषமும் அவனே - ...

(सा.स्वा.) तन्मनाः, तस्मिन्प्राप्ये आसक्तः । शान्तः, प्रयोजनान्तरसङ्गरहितः - शेषं स्पष्टम् । ஆனாலும் रहस्यत्रयान्तर्गतமான திருमन्त्रமும் प्रपत्तिकरणमन्त्रமாக चोदितமாய் सिद्धसाध्योपायोपेयங்களை प्रकाशिக்க வத்தாயிருக்க அது தானேயமையாதோ? என்னவருளிச்செய்கிறார் - திருमन्त्रத்திலும் इति - திருमन्त्रத்தில் போலே द्वयத்திலும் सङ्क्षिप्तங்களன்றோ? என்னद्वयத்திலே संपूर्णமாக प्रकाशिக்கிறதென்று संहरिக்கிறார் - ஆகையால் इति - मन्त्रान्तराणामविशद प्रकाशकत्वान्मूलमन्त्रस्य सङ्क्षिप्त प्रकाशकत्वात् என்கை. प्राप्येति। श्रीमत्वादिविशेष युक्ततया प्रतिपादकत्वात् என்கை - ஆனாலும் नित्य श्रीवैकुण्ठगद्यादिகளிலே ''मूलमन्त्रेण स्वात्मानं भगवते निवेद्या श्रीमता मूलमन्त्रेण मामैकान्तिकात्यन्तिक परिचर्याकरणाय परिगृह्णीष्वेति याचमानः प्रणम्य स्वात्मानं भगवते निवेदयेत्'' என்றும் मूलमन्त्रத்தை श्रीभाष्यकारर् आत्मसमर्पणத்தில் विनियोगकथनमुखेन व्याख्यानंபண்ணினாப் போலேயும், चरमश्लोकத்திலே श्रीमद्गीताभाष्यத்திலே व्याख्यानंபண்ணினாப் போலேயும், द्वयविवरणंபண்ணாமையாலும், श्रुतिस्मृत्यादिகளிலே मूलमन्त्रத்துக்கு पदशः व्याख्यानंபோலே द्वयத்துக்கு व्याख्यानं பண்ணாமையாலும், सत्संप्रदायமன்றிக்கே द्वयத்துக்கு विवरणं பண்ணப்போமோ? என்னவருளிச்செய்கிறார் - ...

(सा.प्र .) जुहुयात् प्रणवेनाग्नावच्युताख्ये सनातन'' इत्युपबृंह्मितावसुरण्येत्यादि तैत्तिरीयोपनिषदादि शब्दार्थः - ननु मूल मन्त्रस्य पूर्णभरन्यास गर्भत्वस्य पूर्वाधिकारोक्तेः कथं द्वयस्यासाधारणमिदं माहात्म्यमित्यत्राह - திருमन्त्रத்திலும் इति - एवं द्वयमाहात्म्यमुक्त्वा तदर्थं विस्तरेण वक्ष्यन् ''इष्टं हि विदुषां लोके समासव्यास धारणम्'' इत्युक्तरीत्या तत्तदधिकारार्थानां सङ्ग्रह विस्तर प्रदर्शन वदेतदधिकारार्थ द्वयस्य गद्येन - ...

(सा.वि.) स्मृत्यादीत्यादि शब्देन ''हविर्गृहीत्वात्मरूपं वसुरण्येति मन्त्रतः । जुहुयात्प्रणवेनाग्नावच्युताख्ये सनातन'' इत्यादि विवक्षितम् - तदात्मेति हेतुगर्भ विशेषणम् - तच्छरीरत्वातच्छेषत्वात्तस्मिन्निवेदयीतेत्यर्थः - तन्मनाः, तस्मिन्प्रापकत्वेन न्यस्तमनाः - शान्तः, प्रयोजनान्तरानपेक्षः प्रकाशिப்பியாது, न प्रकाशयन्ति - ननु मूलमन्त्रस्य शरण्यशरणागति फलपरत्वस्य पूर्वाधिकारोक्तेः कथमेतस्यैवासाधारण्ये नातिशय इत्यत्राह - திருमन्त्रத்திலும் इति - ...

मूलं। இதின் அர்த்தை श्रुतिस्मृतीतिहासपुराण भगवच्छास्त्रादिகளில் प्रसिद्धமானபடியே सदाचार्य सम्प्रदाय क्रमத்தாலே गद्यத்திலே विवरित्தருளினார் - எங்ஙனே யென்னில்? ''भगवन्नारायणाभिमतानुरूप स्वरूपरूप'' என்று துடங்கி श्रीमच्छब्दाभिप्रेतार्थத்தை அருளிச்செய்தார் - ''अखिल हेय प्रत्यनीक'' इत्यादिயாலே स्वरूपगुणविभूतिகளைப்பரக்க அருளிச் செய்கையாலே नारायणशब्दार्थं व्याख्यातமாயிற்று. - ...

(सा.दी.) இம்मन्त्रार्थத்தை गद्यத்திலே श्रीभाष्यकारர் பரக்கவருளிச்செய்தாரென்கிறார். இதின் अर्थத்தை इत्यादिயால், प्रथमचूर्णिकैயில் श्रीमच्छब्दाभिप्रेतार्थத்தை வெளியிட்டாரென்கிறார் - भगवन्नारायणेत्यादि - अखिल हेयेत्यादि स्पष्टम् - नारायणशब्दव्याख्यानத்தில் மீண்டும் பிராட்டியையெடுத்தது - ...

(सा.स्वा.) இதின் அர்த்தை इत्यादिना - श्रुतिः, ''मुमुक्षुर्वैशरणमहं प्रपद्ये'' इत्यादिका। स्मृतिः, ''वाचः परं प्रार्थयिता प्रपद्येन्नियत श्श्रियम्'' इत्यादिः - पुराणम्। ''शरणं त्वां प्रपन्नाय'' इत्यादिकम् - भगवच्छास्त्रं श्रीलक्ष्मीतन्त्रादौ प्रसिद्धम्। आदिशब्देन भरतमुनि प्रणीतलक्षणवाक्यादिकं गृह्यते - गद्यத்திலே विवरित्தருளினாரென்கிறது उपपन्नமோ? द्वयத்திலில்லாத श्रीशरणागतिயை प्रथमं சொல்லுகிறதுவும், भगवच्छरणागति प्रार्थनமும், लक्ष्मीप्रत्युक्तिயும், द्वयத்தில் स्पष्टமாகத் தோற்றாத स्वरूपगुणविभूषणायुधादिकथनமும், मध्ये असङ्गतமாக अत्र द्वयமென்று कथनமும், जितान्तादि स्तोत्र कथनமும், கடைசியிலேயிருக்கிற नमस्ஸின் अर्थத்தை पूर्वசொல்லுகையும், शरण्यனுடைய प्रत्युक्ति विशेषनिबन्धनமும் व्याख्यान शैली विरुद्धமன்றோ? என்கிற अभिप्रायத்தாலே शङ्कित्து उत्तरமருளிச்செய்கிறார் - எங்ஙனே யென்னில் इत्यादिना - श्री शरणागति कथनமும், तत्फल भगवच्छरणागति प्रार्थनமும், - ...

(सा.प्र.) व्याख्यातत्वख्यापन व्याजेन सङ्ग्रहेणाह - இதில் इत्यादिना। ''यो ब्रह्माणम्'' इत्यादयश्श्रुतयः - ''श्रीमत्त्वात्पादकमले प्रपद्ये शरणं विभो। नारायणाय नाथाय हरये श्रीमते नमः ।। स भ्रातुश्चरणौ गाढम् - भवांस्तु सह वैदेह्या - उपेयस्य तव प्राप्त्यै त्वामुपायतया वृणे। श्रीमन्नारायण स्वामिन्'' इत्याद्या श्रुतिस्मृतीतिहासपुराणभगवच्छास्त्रादित्वेन विवक्षिताः - मोक्षार्थ भगवद्भरन्यासात्प्राक्पुरुषकारत्वेन वरणीयतया ''प्रायश्चित्त प्रसङ्गे तु सर्व पाप समुद्भवे। मामेकां देवदेवस्य महिषीं शरणं श्रयेत्'' इत्यादिभिरुक्तं श्रीप्रपदनं - ...

(सा.वि.) एवं मन्त्रप्रभावं प्रतिपाद्य विस्तरेण व्याचिख्यासुः - प्रथमं स्वव्याख्येयार्थेषु शरणागतेर्गद्य संमतिमभिप्रयन् गद्यस्य द्वयव्याख्यान रूपत्वं दर्शयति। भगवन्नारायणेत्यादिना - ...

(सा.सं.) इत्थं व्याख्येयतयास्यैवादरणीयत्वं यतिवरैर्व्याख्यातत्वप्रदर्शनमुखेन वक्तुमारभते। இதின் அர்த்தை इति - गद्यस्य द्वयविवरणरूपत्वं प्रदर्शयति - எங்ஙனேயென்னில் इत्यादिना - भगवन्नारायणेत्यादि सम्पत्स्यत इत्यन्तं श्रीमच्छब्दाभि प्रेतप्रदर्शनम्। पुरुषकार प्रपत्ति प्रदर्शनञ्च। पुरुषकारं विना तदाश्रयणायोगात् - अखिलेति - अखिलेत्यादिकमशरण्य शरण्येत्यन्तं नारायण शब्दार्थविवरणमित्यर्थः - तन्मध्य एव पुनरपि ''स्वाभिमत नित्य निरवद्यानुरूप स्वरूप रूपगुणविभवैश्वर्य शीलाद्यनवधिकातिशया संख्येय कल्याणगुण श्रीवल्लभा'' इत्यस्य किं प्रयोजनमित्यत्राह - ...

मूलं। முற்படவே பிராட்டியைச் சொல்லச் செய்தே पुरुषकारत्व निर्वाहार्थமாக विभूतिमध्यத்தில் நிலை தோற்றுகைக்காக மீண்டும் नारायणशब्दத்தின் व्याख्यानத்திலும் அருளிச்செய்தார் - अनन्तरं ''श्रीमन्नारायण'' என்று फलोपायवाक्यங்களில் प्रयुक्तமான व्याख्येय शब्दத்தையும் उपादानंபண்ணியருளினார். - ...

(सा.दी.) पुरुषकारत्व निर्वाहकமான विभूतिमध्ये स्थितिதோற்றுகைக் காகவென்கிறார் - முற்படவே इत्यादिயால் - हेतुவெது என்னில் प्रपत्तव्यतत्वान्तर्गतैயான பிராட்டிக்கு पुरुषकारत्वமெங்ஙனேயென்ன - विभूत्यन्तर्गतैயா கையால் पुरुषकारत्वंகூடுமென்றுகருத்து. अथ चरणौ शरणं प्रपद्ये என்றத்தைக் காட்டினாரென்கிறார் - ...

(सा.स्वा.) श्रीमच्छब्दाभिप्रेतार्थकथनமானபடியாலே विरुद्धமன்று - स्वरूपरूप गुणविभूषणायुधादिकथनமும் नारायणशब्दार्थकथनत्वाद्विरुद्धமன்று - ஆனாலடியிலே भगवन्नारायणेत्यादिना श्रीमच्छब्दार्थ व्याख्यात மாயிருக்க पुनश्च मध्ये श्रीवल्लभेति कथनं व्यर्थமன்றோ? என்னவருளிச்செய்கிறார் - முற்படவே इत्यादिना - पुरुषकारत्व निर्वाहार्थமாக विभूति मध्यத்தில் इति-प्रपत्तव्यतत्त्वान्तर्गतैயான பிராட்டிக்கு पुरुषकारत्वं कथमिति शङ्कायां विभूतिमध्यान्तर्गतत्वस्यापि सत्वात्पुरुषकारत्वमुपपन्नமென்று திருவுள்ளம் - स्वरूपरूपादि कथनादेव श्रीमन्नारायणशब्दार्थस्य कीर्तितत्वात्पुनश्च श्रीमन्नारायण என்று कथनं व्यर्थமன்றோ? என்னவருளிச்செய்கிறார் - अनन्तरमिति - व्याख्येयपदोपादानम् பண்ணில் पदान्तरங்களையும் उपादानंபண்ணவேண்டாவோ? என்னவருளிச்செய்கிறார் - फलोपायेति - उभयत्र विद्यमानत्वेन व्याख्येये प्रधानत्वादस्योपादान மென்று கருத்து ...

(सा.प्र.) भगवन्नारायणेत्यादिनोक्तम् - एवं भगवदित्यादिनैव श्रीमच्छब्दार्थ उक्तश्चेन्नारशब्दार्थत्वेन स्वाभिमत नित्यनिरवद्येत्यादिना श्रियः पुनः कीर्तनं व्यर्थं स्यादित्यत्राह - முற்படவே इत्यादि, पूर्वमेवेत्यर्थः। ''निचदेवीं मातरं श्रियं वासय मे कुले - विश्वप्रिये विष्णुमनोऽनुकूले'' इत्याद्युक्त पुरुषकारत्वोपयुक्त, सकल जगन्मातृत्व, सर्व विषय प्रीतिविशेष वत्त्वादि ज्ञापनार्थं तथा निर्देश इति भावः - अथ श्रीमन्नारायणेत्युभयथा संबोधनेनोपायत्वोपेयत्वे शाब्दे इति द्योतित इत्यभिप्रायेणाह। अनन्तरमित्यादिना। अथ चरणशब्दस्य शरण शब्दोपश्लिष्टक्रियापदस्य च व्याख्यातत्वं - ...

(सा.वि.) முற்படவே, प्रथममेव - சொல்லச்செய்தே, उक्तत्वेऽपि - நிலை, स्थितेः - தோற்றுகைக்காக, स्फुरणार्थम् - மீண்டும், पुनः - नारायण शब्दव्याख्यानத்திலும் इति। ''स्वाभिमत नित्य निरवद्यानुरूपस्वरूप रूप गुणविभवैश्वर्य शीलाद्यनवधिकातिशयासङ्ख्येय कल्याणगुण श्रीवल्लभा'' इत्यनेनेत्यर्थः। लक्ष्म्याः प्रपत्तव्यतत्वान्तर्गतत्वात्कथं पुरुषकारत्वमित्यत्र विभूत्यन्तर्गतत्वस्यापि सत्वेन पुरुषकारत्वं युक्तमिति तात्पर्यम्। फलोपायवाक्यங்களில் इति - द्वयपूर्वोत्तरखण्डस्थ श्रीमन्नारायणशब्दोपादानं - ...

(सा.सं.) முற்படவே इति। स्वसजातीयत्वं पुरुषकारत्व निर्वाहकम् - तच्च विभूति मध्यानु प्रविष्टत्वेनेति तत्सूचनात्तत्प्रयोजनवदिति भावः। एतन्मध्य एव श्रीमन्नारायणेति द्विःपठनस्य प्रयोजनमुपायोपेयवाक्ययोस्सिद्धरूप प्रधानांशव्यञ्जनमित्याह - अनन्तरमिति। - ...

मूलं। प्रपद्ये என்கிற पद(விட)த்தில் उत्तमனாலே विवक्षितமான अधिकारिविशेषम् ''अनन्यशरणोऽहम्'' என்று विवृतமாயிற்று - ''त्वत्पादारविन्दयुगलं शरणम् (अहं) प्रपद्ये'' என்கையாலே. ''चरणौ'' என்கிற शब्दமும், शरण शब्दமும், क्रियापदமும், प्रदर्शित மாயிற்று - ...

(सा.दी.) त्वत्पादारविन्देति - अथ खण्डद्वयத்தையும் गद्यव्याख्ये यत्व - ...

(सा.स्वा.) अनन्यशरणोऽह மென்கிறதெந்த पदव्याख्यानम्? என்னவருளிச்செய்கிறார் - प्रपद्ये என்கிற इति - ''त्वत्पादारविन्दयुगलं शरणमहं प्रपद्य'' என்கிறதெந்த पदविवरणम्? என்னவருளிச்செய்கிறார். त्वत्पादेति-स्पष्टार्थक மானபடியாலே व्याख्यातं என்று சொல்லாதே प्रदर्शित மென்று சொல்லிற்று - ...

(सा.प्र.) प्रदर्शयन्नुत्तरखण्डस्यापि व्याख्यातत्वं च द्योत्यत इत्याह - प्रपद्ये என்கிற इत्यादिना - गद्यैकदेशेन व्याख्यातत्वं कथमिति शङ्कामनूद्य तदुपपादयति - ...

(सा.वि.) स्थलद्वये श्रीमन्नारायणेत्यनेन कृतवन्त इत्यर्थः - तदेतद्विवृतं गद्य भाष्ये - उत्तरखण्डापेक्षया पूर्वं श्रीमन्नित्याद्युक्तम् - इह तु पूर्वखण्डापेक्षयेति ''श्रीमन्नारायणाशरण्य शरण्यानन्यशरणश्शरणमहं प्रपद्ये'' इत्यत्रोक्तम्। तत्र पूर्वमिति - परब्रह्म भूतपुरुषोत्तम महा विभूते श्रीमन्नारायणेत्यर्थः - महाविभूते, विभूतिरिह विभवनम् - नियमनमित्यर्थः। तस्य महत्त्वमपरिच्छिन्नत्वम्। संश्रितात् संसारकारागृहान्निर्गमय्य तदर्थतया सर्वं नियच्छसीति भावः। श्रीमन्, श्रिया नित्ययुक्तस्त्वं तदभिमतमाश्रितकृत्यन्निर्वहसीति व्याख्यातम्। आश्रितकृत्यं सर्वदेश, सर्वकाल, सर्वावस्थोचित सर्वविधकैङ्कर्यमित्युत्तरखण्डस्थ श्रीमच्छब्दाभिप्रेतं विवृतम् - अत एव नारायण श्रीवैकुण्ठनाथेत्यस्य स्वार्थं स्वयं स्वात्मानं प्रापयितासि - दिव्य पर्यङ्क सुखासिकायां निजपादमूलं दातुमवस्थितोऽसीति व्याख्यातम्। उपायानुष्ठान वाक्य सन्निध्यनुसंहितस्य श्रीमन्नारायण अशरण्यशरण्येत्यत्र तस्य श्रीमच्छब्दस्य तु अथ तत्र समानाभिप्रायतया नित्ययुक्तामखिलजगन्मातरं पुरस्कुर्वतोऽखिलापराधाः क्षन्तव्या इत्याह - श्रीमन्निति - व्याख्यातम्। फल प्राप्त्यर्थमुपायस्यानुष्ठेयत्वेन शब्दक्रममुल्लङ्घ्यार्थक्रमवशात् - ''अग्निहोत्रं जुहोति। यवागूं पचति'' इत्येतन्न्यायेन उत्तरखण्डार्थस्य प्रथममनुसन्धेयत्वात्। पूर्वं श्रीमच्छब्दस्योत्तरखण्डस्थ श्रीमच्छब्दार्थाभिप्रायकत्वमित्यभिसन्धिः - श्रीमच्छब्दं नारायणशब्दं प्रत्येकं प्रत्येकं व्याख्यायानन्तरं श्रीमन्नारायणायेति निर्देशात् श्रीमन्नारायण इति पदद्वयार्थ एतावता ग्रन्थेन प्रतिपादित इति सूचितमिति भावः - एतेन पूर्वखण्डे श्रिय उपलक्षणत्वमुत्तरखण्डे विशेषणत्वमिति वैषम्यं गद्येनोक्तमिति तद्विरोध इति सूचितम्। अयमत्र उत्तरत्रोपायत्व प्राप्यत्वंங்கள் इति वाक्येन स्पष्टीकरिष्यते एवं द्वयं व्याख्यातमित्यभिप्रायेणानन्तरं द्वयमुक्तमित्याह। अनन्तरमिति। नन्वादौ वा, अन्ते वा, द्वयं व्याख्यास्यत इति वा, - ...

(सा.सं.) अनन्यशरणोऽहमिति च उत्तमपुरुषाभिप्रेताधिकारि विशेषोक्तिरित्याह - प्रपद्य इति। प्रदर्शित மாயிற்று इति, अर्थतश्शब्दतश्च पदत्रयमपि ज्ञापितमित्यर्थः।। ...

मूलं। अनन्तरं ''द्वयम्'' என்று வ்யாக்யேயத்தைப் பூர்ணமாக நிர்தேசித்தார் - அடியிலேயாதல், முடிவிலேயாதல், த்வயமென்று நிர்தேசியாதே இவ்வளவிலே சொல்லவேண்டுவானேன்? என்னில் உபாய (த்வ) ப்ராப்ய(த்வ)ங்களில் இங்கு ப்ரதானபூதன் ஸ்ரீமந்நாராயணனாகையாலே இரண்டிடத்திலும் கிடக்கிற ஸவிசேஷணநாராயண சப்தம் வ்யாக்யாதமாய் நின்ற வளவிலே இம்மந்த்ரத்துக்கு ப்ரதிபாத்யமான ஸாத்யோபாயத்தோடேகூட ப்ரதானோபாயமும், ப்ரதானப்ராப்யமும், வ்யாக்யாதமென்று தேற்றுகைக்காக இங்கே த்வய மென்று அருளிச்செய்தார் – ...

(सा.दी.) सूचनाय द्वयமென்று निर्देशित्தாரென்கிறார் - अनन्तरमिति - அடியிலே इत्यादियால் पूर्वोत्तरखण्डத்தில் प्रधान प्राप्य प्रापक परनारायणशब्दமுமிம் मन्त्रத்துக்கு प्रकाश्यமான उपायமும் व्याख्यातமாகையாலே मन्त्र प्रतिपाद्यமெல்லாம் व्याख्यात प्रायமென்று கருத்தென்கை - ...

(सा.स्वा.) ஆனால் अत्र द्वयமென்கிறது व्यर्थமன்றோ? என்கிற शङ्कैயைப்परिहरिக்கிறார். अनन्तर मिति - पूर्वं श्रीमन्नारायण என்று व्याख्येयनिर्देशं பண்ணியிருக்க पुनरपि व्याख्येयनिर्देशं व्यर्थமன்றோ? என்று शङ्कियாமைக்காக पूर्णமாக इति - व्याख्येमनिर्देशமானால் आदिயிலே निर्देशिக்கவேணும், अन्तத்திலேயாகிலும் निर्देशित्து व्याख्यातமென்று சொல்லவேணும், मध्यैயிலே निर्देशित्தது असङ्गत மன்றோ? என்று शङ्कित्து उत्तरமருளிச்செய்கிறார் - அடியிலேயாதல் इत्यादिना। प्रधानांशस्य व्याख्यातत्वाद्व्याख्यातप्रायமென்றுद्योतनार्थं द्वयग्रहणமென்று கருத்து. गद्ये अत्र द्वयं व्याख्यातप्रायमिति शेषः। ...

(सा.प्र.) அடியிலே इत्यादिना - अथोत्तम पुरुषोक्ताधिकारिणो विशेषणान्तरमनन्तापराधयुक्ते स्वस्मिन् भगवदाभिमुख्य निदानभूत सर्वविधबन्धुत्वं च सप्रमाणं ज्ञाप्यत इत्याह - ...

(सा.वि.) व्याख्यातमिति वा वक्तव्यम्। तद्विहाय मध्ये कथं द्वयमित्युक्तिः सङ्गच्छत इत्याशङ्क्य तथोक्तेस्तात्पर्यमाह - அடியிலேயாதல் इति - उपायप्राप्यங்களில், उपायमध्ये प्राप्यमध्ये च। प्रधानभूतன் श्रीमन्नारायणன், प्रधानभूत श्रीविशिष्टो नारायणः - प्रधानोपायः, प्रधानप्राप्यश्च श्रीसहित नारायण एव - ஆகையாலே, तस्मात् कारणादेव। இரண்டிடத்திலும் उपायोपेयपरवाक्ययोः पूर्वोत्तर खण्डयोः। கிடக்கிற, स्थितः - सविशेषणनारायणशब्दं, श्रीमन्नारायण इत्ययं शब्दः, व्याख्यातமாய் நின்றவளவிலே, व्याख्यात स्थित इति रीत्या। प्रधानोपायமும் प्रधानप्राप्यமும் व्याख्यातं, विशेषत उक्तम्। என்று, इति - சொல்லுகைக்காக, व्यञ्जनाय - இங்கே, अनन्तरमेव - द्वय மென்றருளிச்செய்தார், द्वयमित्युक्त वन्तः - मन्त्र प्रतिपाद्यस्साध्योपायेन सह द्वय पदप्रवृत्तिनिमित्त भूत प्रधानोपायः। प्रधान प्राप्यश्चेत्तद्द्वयं खण्डद्वयंस्थित श्रीमन्नारायणपदव्याख्यात मासीत्। ...

(सा.सं.) अनन्तरमिति - खण्डद्वयस्थ नारायणपदव्याख्यानानन्तरमित्यर्थः। प्रागेकदेशनिर्देशः - इह तु द्वयमिति समाख्यया अखण्डनिर्देश इति पूर्णமாக इत्युक्तिः - मध्ये पूर्णनिर्देशस्य किं प्रयोजनमित्यत्राह - उपायत्वेत्यादिना - एवं प्रधानतमेन सिद्धोपायेन सिद्ध प्राप्येन च सह महावाक्य पर्यवसानभूमितया शाब्द प्राधान्यवान् साध्योपायो दर्शितः साध्य प्राप्यमपि ''पारमार्थिक'' इत्यादिना सङ्क्षिप्तमिति ज्ञापनाय मध्ये द्वयमिति निर्देशः - द्वयमर्थेन सहैवमनुसंहितमिति द्वयमित्याशयश्चेति भावः - ...

मूलं। अनन्तरं ''पितरं मातरम्'' என்று துடங்கி जितन्ता (विशेष भगवद्गीतादि स्थितமான) विशेषादि पदமான संवादकवाक्यमुखத்தாலே अनन्यप्रयोजनனாய் अनन्योपायனாய்க்கொண்டு उपायपरिग्रहं பண்ணினபடியையும், शरण्यस्वभावानुसन्धानपूर्वकமாக अपराधक्ष्मा(क्षा)पणंபண்ணுகிறபடியையும், द्वयத்துக்கு समुदितार्थமாக அருளிச்செய்தார் - ...

(सा.दी.) संवादवाक्यमुखத்தாலே अनन्योपायोपेयस्याधिकारिणः उपायपरिग्रहं शरण्य स्वभावानु - सन्धानपूर्वकमपराधक्षापणं च द्वयத்துக்கு समुदितार्थமாகவருளிச்செய்தாரென்கிறார் - पितरं मातरमित्यादियால் जितन्ता विशेषः प्रसिद्धः - आदि शब्देन गीतादिर्गृह्यते - இனி द्वयத்துக்கு अर्थமாகாமலே - ...

(सा.स्वा.) पितरं मातर मित्यादि कथनमसङ्गत மன்றோ? என்ன அது व्याख्यात पूर्वखण्डार्थ साधिकार साध्योपायपरिग्रहத்துக்கும் व्याख्यास्यमानोत्तरखण्डार्थापराधक्षापणरूपानिष्टनिवृत्तिக்கும் उपबृह्मणसिद्धत्व ज्ञापनार्थமென்றருளிச் செய்கிறார் - अनन्तरमित्यादिना - द्वयத்துக்கு समुदितार्थமாக इति - अस्यायमर्थ इति विशिष्याभिधानाभावेऽपि उपबृह्मणे द्वयसमुदितार्थ कथने योग्यतावशात्तत्तत्पदार्थोप बृह्मणत्वं सिद्ध्यति என்று கருத்து - ''मनोवाक्कायैः'' इत्यादिना முற்பட चरम श्रुतनमस्ஸின் अर्थத்தைச்சொல்லுகிறது கூடுமோ? अनिष्टनिवृत्ति पूर्वकत्वादिष्ट प्राप्तेरुपपन्नமென்னிலானாலும் उपायान्तर रहितனாயிருக்கிற अकिञ्चनன் परभक्त्यादिகளை ...

(सा.प्र.) अनन्तरं पितरमित्यादिना- ''अग्निहोत्रं जुहोति - यवागुं पचति'' इत्यत्र होमस्य पाक साध्यत्ववत्प्रथम श्रुतस्यापि कैङ्कर्यस्य प्राप्तिरनिष्टनिवृत्ति साध्येति ''मनो वाक्कायैः'' इत्यादिना प्रथममनिष्ट निवृत्तिं प्रदर्श्य ''तेषां ज्ञानी'' ...

(सा.वि.) तेन द्वयार्थः कृत्स्नोऽपि व्याख्यात इति भावः। अथ संवादवाक्यमुखेन अनन्योपायोपेय स्याधिकारिणः उपायपरिग्रह प्रकारः निग्रह कारित्वलक्षणशरण्यस्वभावानुसन्धानप्रकारश्च द्वयस्य समुदितार्थ इत्यभिप्रायेणोक्तवन्त इत्याह - अनन्तरं पितर मित्यादिना - जितन्ता विशेषादीति- ''जितं ते पुण्डरीकाक्ष'' इत्युपक्रम कस्तुतीनां जितन्ता स्तुतय इति संज्ञा - अतो न नाम्नि विप्रतिपत्तिः। आदि शब्देन भगवद्गीतोच्यते। तत्परமான संवाद वाक्य मुखத்தாலே, जितन्ता विशेषा एव पदानि यस्य तादृग्भूतसंवाद वाक्यमुखेन। ''पितरं मातरम्'' इत्यादि समानानुपूर्वीकवाक्यानां जितन्तादिषु दृष्टत्वेन तत्समानानुपूर्वीक वाक्यरचनंतत्संवादार्थमिति भावः - ''सर्वधर्मांश्च सन्त्यज्य'' इति गीतावचन समानानुपूर्वीकं सखीन् गुरूनित्यत्र गुरवः - ''एकाक्षर प्रदातारं यो गुरुं नाभिमन्यते'' इत्युक्त ब्रह्मविद्यातिरिक्तोपदेष्टारो विवक्षिताः - तेषां त्यागो नामापेक्षित फलोपायत्वेन त्यागः - नतु विषय पूजादि परित्यागः - ''एकाक्षर प्रदातारम्'' इत्यादि विरोधात् - सर्वकामशब्देन स्वर्गादिकाम्य फलान्युच्यन्ते - ...

(सा.सं.) एवं द्वयविवरणानन्तरमपि पितरमित्यादिना ''मनो वाक्कायैः'' इत्यादिभिश्च किं प्रयोजनमित्यत्राह - अनन्तरमिति - संवादकेति - ...

मूलं। மேல் अर्थक्रमத்தாலே முற்பட नमस्ஸாலே प्रार्थिக்கிற अनिष्ट निवृत्तिயை व्याख्यानंபண்ணிப் பின்பு இங்குள்ள परभक्त्यादि पुरुषार्थपूर्वकமாக चतुर्थ्यन्तपदங்களில் विभक्त्यभिप्रेतமான परम पुरुषार्थलाभத்தை வெளியிட்டருளினார் - இப்படி अनुष्ठितोपायனான अधिकारि विषयத்தில் இங்குமங்குமுள்ள सिद्धिயைப்பற்ற चरमश्लोकத்தில் उत्तरार्धத்தில் படியே स्वाभाविकदयार्द्रமான भगवदभिप्रायமிருக்கும்படியை तद्व्यञ्जक भगवद्वाक्य प्रक्रियैயாலே அருளிச்செய்துகாட்டினார் -

(सा.दी.) प्रमाणान्तरसिद्धமான प्रपन्नविषयத்தில் ऐहिकामुष्मिकसकलफल प्रदानोद्युक्त भगवदभिप्रायத்தை तद्वाक्य प्रक्रियैயாலே காட்டினாரென்கிறார் - இப்படி अनुष्ठितेत्यादियால் - ...

(सा.स्वा.) अपेक्षितக்கிறது विरुद्धமன்றோ? என்னவருளிச்செய்கிறார் மேல் अर्थक्रमத்தாலே इत्यादिना - "परमभक्तियुक्तं मां कुरुष्व" इत्यादिना - प्रार्थ्यமான परभक्त्यादिकं फलरूपமாகையாலே विरोधமில்லை யென்று கருத்து - एवम्भूत मत्कैङ्कर्येत्यादिना भगवद्वाक्यतया सन्निवेश ग्रथनमसङ्गत மன்றோ? என்கிற शङ्कैயைப்परिहरिக்கிறார் - இப்படி इति- "शरीर पातसमयेतु" इत्ये तावत्पर्यन्त மிங்குள்ள सिद्धि - ततः परम् அங்குள்ள सिद्धि - चरम श्लोकத்தில் "मा शुचः" इति भगवद्वाक्य மிருக்கிறாற்போலே - ...

(सा.प्र.) इत्यादिना चतुर्थ्यर्थोऽप्युक्त इत्याह। மேல் अर्थक्रमेत्यादिना। अथ "एवं भूत मत्कैङ्कर्य" इत्यादिना अनुष्ठितोपायविषय भगवत्सङ्कल्प स्थिति प्रकार उक्त इति वदन् गद्यस्य द्वयविवरणत्वं निगमयति - இப்படி अनुष्ठितेत्यादिना। ननु गद्ये द्वयस्य प्रतीकतयानुपादानेऽपि भवद्भिः - ...

(सा.वि.) अक्षरशब्देन कैवल्यमुच्यते। ननु चतुर्थ्यर्थकैङ्कर्य प्रार्थनां विहाय पश्चात्तन नमश्शब्दार्थ भूत विरोधिनिवृत्ति प्रार्थना "मनो वाक्कायैः" इति चूर्णिकया कथं कृतेत्याशङ्क्येष्टप्राप्तेरनिष्ट निवृत्तिपूर्वकत्वात्प्रथममनिष्टनिवृत्तिः पश्चाच्चतुर्थीद्वितीयाभिप्रेत पुरुषार्थ प्राप्तिश्च प्रकाशितेत्याहமேல் अर्थक्रमத்தாலே इति - चरमश्लोकोत्तरार्धे "இங்குगति विशेषத்துக்கு முன்பு शास्त्रத்தாலே ब्रह्मस्वरूपத்தை அறிகிறபோது, इत्यत्र प्रकाशं सुकृताधीनமாய் कारणायत्तமுமாய் வருகிறதாகையாலே परिमितமுமாய் विच्छेदवत्तதாயிருக்கும்" इति - वक्ष्यमाण रीत्यात्रत्य परभक्ति पर ज्ञान परम भक्तिः परमपदानुभाव्य परभक्ति परज्ञान परम भक्त्यादिकांश्च प्रार्थितान् फलविशेषान् प्रतिदयार्द्रहृदय भगवदभिप्रायमुन्नीय भगवदीय प्रत्युत्तर वाक्यत्वेन "एवंभूत मत्कैङ्कर्य प्राप्त्युपायतया" इत्यादीनि वाक्यानि बद्धानि अतो गद्योक्तं सर्वं द्वयार्थ इति निगमयति - இப்படி अनुष्ठितोपायेत्यादिना - இங்குள்ள सिद्धिயைப்பற்ற "श्लोकत्रयोदित ज्ञानिनं मां कुरुष्व - स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व" इति प्रार्थित विशद ज्ञानभक्ति सिद्धि मित्यर्थः - அங்குமுள்ள सिद्धिயைப்பற்ற, - ...

(सा.सं.) उपबृह्मण ग्रन्थेनेत्यर्थः - மேல், सर्वं क्षमस्वेत्युक्त्यनन्तरम् - अर्थक्रमத்தாலே, इष्टप्राप्तेरनिष्टनिवृत्ति पूर्वकत्व रूपार्थक्रमेण - निवृत्तिயை, प्रार्थना पदाध्यहारवन्नमश्शब्द विवक्षितानिष्ट निवृत्ति प्रार्थनामित्यर्थः - लाभத்தை, लाभप्रार्थनाम् - प्रतिवचनवाक्यैः किं व्यवृणुतेत्यत्राह - இப்படி इति - तैः प्रकृताधिकारिणो निर्भरत्वाय स्वीकृत भरस्य शरण्यस्य ...

मूलं। ஆகையால் गद्यத்திலருளிச்செய்ததெல்லாம் द्वयத்திலே विवक्षि तम् - इது "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" என்கிற பாசுரத்தாலும் सूचितम् - ...

(सा.दी.) ஆகையால் इत्यादि स्पष्टम् - गद्यं द्वयविवरण மென்றது "द्वयमर्थानुसन्धानेन" என்கிற वाक्यத்தாலும் सूचितமென்கிறார். इது द्वयमिति - गद्यத்தில் சொன்ன "परभक्ति परज्ञान परमभक्ति" विषयமான शङ्कैகளை ...

(सा.स्वा.) द्वयத்தில் भगवत्प्रत्युक्ति व्यञ्जकवाक्यமில்லாதேயிருக்க भगवत्प्रत्युक्तिरूपமாகவிங்கு द्वयार्थकथनंகூடுமோ? என்கிற शङ्कैயில் माशुचः इत्यादिवद्वरन्यासोत्तरकालं निर्भरत्वाद्यनुसन्धान सिद्ध्यर्थं द्वयेऽपि फलप्रतिपादकवाक्य एव विवक्षितत्वाद्भगवदभिप्रायव्यञ्जक प्रत्युक्तिवाक्यस्येत्यभिप्रायेणो पसंहरिக்கிறார் - ஆகையால் इति - ஆனாலும் व्याख्येयपदங்களையெடுத்து व्याख्यानं பண்ணுகிறது? व्याख्यान शैलीயில்லாத गद्यத்தை द्वयव्याख्यान रूपமென்கிறது क्लिष्ट மன்றோ? इது द्वयव्याख्यानமென்கைக்கு अनन्यथासिद्धलिङ्गந்தான் गद्यத்திலேயுண்டோ? என்னவருளிச் செய்கிறார். इது इति - एवं, पूर्वोक्त प्रकारेण - अर्थानुसन्धानेन सह सदा द्वयंवक्ता என்று சொல்லுகையாலே भगवन्नारायणेत्यादि पूर्वोक्तங்களெல்லாம் द्वयार्थकथनமென்று स्पष्टமிறே - ...

(सा.प्र.) तद्व्याख्यानतया वर्णनं पक्षपाद कृतसित्यत्राह - इது द्वयमित्यादि - अर्थानुसन्धानविशेषणभूतेनैवं शब्देनोक्त प्रकार परामर्शिना द्वयविवरणत्वं सूच्यत इत्यर्थः - ...

(सा.वि.) परभक्ति पर ज्ञानेत्यादिना प्रार्थितां सिद्धिं प्रति - ननु प्रतीकग्रहणेन व्याख्यानाभावादद्वयव्याख्यानं गद्यमित्यभिमानमात्रमित्यत आह - इது. द्वयमिति इது व्याख्यानरूपमित्येतत् - एवमर्थानुसन्धानेन सह सदाद्वयं वक्तेत्यन्वयः - एवमर्थेत्यनेन - पूर्वोक्तार्थस्सर्वो द्वयार्थ इति विवृतम् - ननु "परभक्ति परज्ञान परमभक्तिकृत परिपूर्णानवरतनित्य विशदतमानन्य प्रयोजनानवधिकातिशय भगवदनुभव जनितानवधिकाति- शयप्रीतिकारिताशेषावस्थोचिताशेष शेषतैकरतिरूपनित्यकिङ्करो भवानि" इति परभक्त्यादिमूलकः परिपूर्णानि वरतनित्य विशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवः तन्मूलकैङ्कर्यं च प्रार्थितम्। तत्किमपवर्गदशाभाव्यम्? उत यावज्जीवदशाभाव्यम्? नाद्यः, अपवर्गदशाभाव्यस्यानुभवस्य नित्यस्यैक रूपस्य परभक्ति कृतत्वासिद्धेः। परभक्तित्वाद्यवस्थाभेदाभावाच्च न द्वितीयः - नित्यविशदतमानन्य प्रयोजनानवधिकातिशयप्रियभगवदनुभवस्याकिञ्चनाधिकारिण इदानीं प्रत्यक्षविरुद्धत्वात्। परभक्त्यादेरसंभवाच्च - परभक्तिः - उत्तरोत्तरसाक्षात्कारेच्छात्मिकाधीः - पर ज्ञानं, उत्तरोत्तर साक्षात्कारः। परमभक्तिः, साक्षात्कृते निरन्तरानुबुभूषातथा चैतादृशाधिकारोऽकिञ्चनस्य नास्ति।

(सा.सं.) स्वाभाविकदयार्द्रमुत्तरार्धोत्तरखण्डाभ्यामुक्तं परमफलाङ्कुर कल्पमभिप्रायं व्यवृणुतेत्यर्थः - ஆகையாலே, उक्तविधया गद्यस्यद्वयविवरण रूपत्वात्। इது. गद्यस्य द्वयविवरणरूपत्वम्। एवं गद्यमिदं कृत्स्नं द्वयविवरणरूपमिति साधीयान् संप्रदाय इति भावः। गद्ये फलप्रार्थनावसरे "परभक्ति पर ज्ञान" इत्यादिना "किङ्करो भवानि" इत्यन्तेनेदानीन्तनकैङ्कर्यस्य परभक्त्यादि मूलकत्वमवगम्यते। - ...

मूलं। ''परभक्त्यादि मूलत्वं कैङ्कर्यस्य यदुच्यते।
गद्यादिषु तदप्याहुरपवर्गदशाश्रयम्।।
उत्तरोत्तरयोस्स्वामी साक्षात्करणभोगयोः।

(सा.दी.) कारि कैகளாலே परिहरिக்கிறார் - परभक्त्यादीति - कैङ्कर्यस्य पर भक्त्यादि मूलत्वं गद्यादिषु यदुच्यते तदप्यपवर्गदशाश्रयमिति प्राहुः। अत्र दृष्टानां तादृशपरिपाकासंभवादपवर्गदशायां कैङ्कर्यस्य परभक्त्यादि मूलत्वसम्भवं दर्शयति - उत्तरोत्तरयोरिति - उत्तरोत्तर भाविनोस्स्वामी विषयसाक्षात्कार तत्पूर्वकैङ्कर्ययोः पूर्वपूर्वक्षणे - ...

(सा.स्वा.) ஆனாலும் ''परभक्ति पर ज्ञान परमभक्तिकृता'' इत्यादिना पर भक्त्यादिकृतமாக कैङ्कर्यத்தைச் சொல்லக்கூடுமோ? प्रपन्नனுக்கு उपायமாக परभक्त्यादिकளில்லையே? என்னவருளிச்செய்கிறார். परभक्त्यादीति - कैङ्कर्यस्य परभक्त्यादि मूलत्वं गद्यादिषु यदुच्यते तदप्यपवर्गदशाश्रयमिति प्राहुः। प्रपन्नस्य संसारदशायां परभक्त्याद्यभावेऽपि मुक्तिदशायां संभवात्तत्कालीन कैङ्कर्यं परभक्त्यादिमूल மென்று சொல்லக்குறையில்லையென்று கருத்து. ஆனாலும் नित्यमुक्तர்களுடைய अनुभवं नित्यमेकरूपமாக இருக்க இதுக்கு परभक्तित्वादनेकाकारं கூடாமையாலே परभक्त्यादि कृतमनुभवम्। अनुभवजनितं प्रीतिरूपभोगम् - तत्कारितं कैङ्कर्यமென்று साक्षात्कारात्मकानुभवप्रीतिरूप भोगங்களுக்கே परभक्त्यादि मूलत्वமில்லாமையாலே तद्द्वारा मुक्तिदशैயிலே कैङ्कर्यத்துக்கு परभक्त्यादिमूलत्वமெங்ஙனே? என்னவருளிச்செய்கிறார் - उत्तरोत्तरयोरिति - स्वामि साक्षात्करणम्, अनुकूलत्व प्रकारक सविभूतिक - ...

(सा.प्र.) नन्वनुष्ठितोपाय विषयभगवत्सङ्कल्प प्रकाशकवाक्ये प्रपन्नानां परभक्त्यादि कृत कैङ्कर्य प्राप्तिरुच्यते, तच्च प्रत्यक्षविरुद्धमित्यत्राह - परभक्त्यादीति - ननु नित्यमुक्तानुभवस्य ऐकरूप्येण नित्यत्वात्तत्र परभक्त्याद्यवस्थानुपपत्तेः कैङ्कर्यस्य तन्मूलत्व मयुक्तमित्यत्रेतः परमप्ययमनुभवो मे स्यादित्येवं रूपपूर्वदृष्टविषय प्रत्यक्षाभिनिवेशत्वस्य पूर्वदृष्ट साक्षात्कारस्य तद्विश्लेष भीतिरूपत्वस्य चैकरूपसाक्षात्कार एव रागिणा मिवोत्तरक्षणावच्छेदेन प्रतिक्षणं सम्भवात्तत्साध्यत्व व्यपदेश इत्याह - उत्तरोत्तरयोरित्यादिना - ''भगवदनुभवजनितस्य निरतिशयानुकूलविषयोमयानु भूतः'' इत्येवं रूप स्वकार्तार्थ्यानुसन्धानस्य - ...

(सा.वि.) सत्येव भक्त्येव मोक्षसिद्धौ प्रपत्तिवैयर्थ्यं स्यात्? इत्याशङ्कायां तत्परिहारं कारिकाभिर्निबध्नाति। परेति - गद्यादिषु कैङ्कर्यस्य परभक्त्यादिमूलत्वं यदुच्यते तदप्यपवर्गदशाश्रयम्। अपवर्गदशा विषयमाहुः - एवं च द्वितीयकोट्यवलम्बनेनोक्त दो षो निरवकाश इति ध्येयम् - अपवर्गदशाभाव्यनुबन्धिदोषं परिहरति - उत्तरोत्तर योरिति - उत्तरोत्तरयोः, उत्तरोत्तरक्षणावच्छिन्नयोः - स्वामिसाक्षात्कारक्षणभोगयोः। भगवत्साक्षात्कारः। - ...

(सा.सं.) तच्चाकिञ्चन्यविरुद्धम् - प्रत्यक्षबाधितं चेत्यतोन गद्यस्य स्वतन्त्रप्रपत्तिपरत्वमित्यत्राह - परभक्त्यादीति। अपवर्गदशाभावि कैङ्कर्यस्यैव तन्मूलकत्व परं तदिति भावः - ननु तद्दशानुभवस्यैक रूप्यात्पर - भक्त्याद्यवस्थानुपपत्तेस्तदापि कैङ्कर्यस्य न तन्मूलकत्वं युक्तमित्यत्राह - उत्तरोत्तरयोरिति - उत्तरोत्तरसाक्षात्कारेच्छात्मिका धीः परभक्तिः। - ...

**मूलं।** पूर्व पूर्वक्षणेष्टत्वात्तन्मूलत्वमुदीरितम् ।।

(सा.दी.) अत्यन्तेष्टत्वात्कैङ्कर्यस्य तदिच्छा प्रयोजकपर विषयनिरतिशय प्रीतिरूप परभक्त्यादिमूलत्वं सम्भवतीत्युदीरितम् - ...

(सा.स्वा.) भगवत्साक्षात्कार रूपानुभवः। भोगो नाम उक्तानुभवजनिता निरतिशयानुकूलोऽयं विषयो मयानुभूयते इति स्वयमपि निरतिशयानुकूल्यवती कृतार्थता बुद्धिः - अत्र गद्यभाष्यम्। "अत्र परभक्तिरुत्तरोत्तर साक्षात्कारेच्छात्मिका धीः" सा च "या प्रीतिः" इत्यादिष्विव विषय स्वभावजा नत्विष्टसाधनत्वबुद्धिजा - परज्ञानं, उत्तरोत्तरसाक्षात्कारः। साक्षात्कृते निरन्तरानुबुभूषा, परमभक्तिः, - अनुभवस्त्विह अनुकूलतमत्वेन साक्षात्कार एव - नित्यानां मुक्तानां च नित्यानुवृत्तैक रूपानुभवः। क्षणभेदेन परभक्तित्वाद्याकार भेदैश्च विकल्प्यते - पूर्व पूर्वक्षणेषूत्तरोत्तर क्षणावच्छिन्नरूपस्य इष्टत्व मभिप्रेत्य कृतत्वव्यपदेशः। मुख्यत्वं तु योगविशेषजन्यानुभव इति तत्रैव किञ्चिदुपरि अनुभवजनितप्रीति र्नाम। निरतिशयानुकूलोऽयं विषयो मयानुभूयते इति स्वयमपि निरतिशयानुकूल्यवती कृतार्थता बुद्धिः - प्रीतेश्च स्वरूपतोऽनुवृत्तत्वेऽपि पूर्ववदनुभवस्यैव प्रयोज्य प्रयोजकाकार विभागेन जन्यजनकत्ववाचोयुक्तिः - अस्याश्च प्रीतेरनवधिकातिशयत्वं प्रीत्यन्तरातिशयापेक्षया निकृष्टत्व विरहात्। ईश्वरस्य नित्यानामपि हि न मुक्तेभ्योऽप्यतिशयिता प्रीतिः - "श्रोत्रियस्य चाकामहतस्य। ...

(सा.प्र.) निरतिशयप्रीति रूपस्य भोग्यत्वात्तेन सहोक्तिः - ननु नित्यमुक्तज्ञानानां नित्यत्वेनैव स्वकार्तार्थ्यानुसन्धानावस्थाया असिद्धेः द्विवचनमनुपपन्नमिति चेन्न। समूहालम्बने घटविषयत्व पट विषयत्वादिरूपानेकाकारवत्सर्वविषये अनुभवे स्वकार्तार्थ्यानुभवस्यापि विद्यमानत्वादनेकक्षणा वच्छेदसम्भवाच्च द्विवचन मुपपद्यते इति भावः - ...

(सा.वि.) तज्जनित एतादृशोऽत्यन्तानुकूलविषयो मया दृष्ट इति स्वात्मनि कृतार्थत्वानुसन्धान रूपानुभवो भोगशब्देन विवक्षितः - तस्यापि निरतिशय प्रीतिरूपत्वाद्भगवत्साक्षात्कार रूपानुभवेन सहोक्तिः - पूर्वपूर्वक्षणेष्टत्वादितः परमप्येवं विधानुभवो मे भूयादित्येवं रूपपूर्वदृष्ट विषयकप्रत्यक्षाभिनिवेशत्वस्य पर भक्तित्वस्य, पूर्ववृत्तसाक्षात्कारत्वस्य परज्ञानत्वस्य, तद्विश्लेषभीति रूपत्वस्य परमभक्तित्वस्य चैकरूपानु भवेऽपि पूर्व पूर्वक्षणावच्छेदेनेष्टत्वात्तन्मूलत्वं परभक्त्यादि मूलत्वं साक्षात्कार भोगयो रुदीरितम् - यद्यपि सर्वविषय भगवदनुभव एक एव कार्तार्थ्यविषयोऽपि भगवद्भोगरूपतामश्नुत इति द्विवचनानुपपत्तिः। ...

(सा.सं.) उत्तरोत्तर साक्षात्कारः पर ज्ञानम् - साक्षात्कृते निरन्तरानुबुभूषा परमभक्तिः। एवं च उत्तरोत्तर साक्षात्कारस्य पूर्व पूर्वक्षणे उत्तरोत्तर साक्षात्कारेच्छा निरन्तरानुबुभूषा चास्तीति साक्षात्करण तत्फलकैङ्कर्य योः परभक्त्यादि मूलकत्वम् - भोगो नाम? आनन्द निष्पत्त्यात्मिका साक्षात्करण फल क्रिय माण स्वायत्त कैङ्कर्यादिषु अत्यन्तानुकूलत्व प्रकारकधीः। ...

(सा.स्वा.) भोग मात्र साम्यलिङ्गाच्च'' इति समान भोगत्वस्थापनादिति। तथा चैकरूपस्यापि मुक्तानुभवस्य सांसारिक ज्ञान सङ्कोच दुःखद्वेषाद्यवस्थाभावेऽपि उत्तरोत्तरक्षणावच्छिन्न केवल सर्वविशिष्ट भगवत्साक्षात्कारेच्छात्मक परभक्त्यवस्थायास्तादृश साक्षात्कार रूप परज्ञानावस्थाया उत्तर क्षणावच्छिन्नानुकूलतमत्व प्रकार सर्वविशिष्ट भगवदनुभवेच्छा रूप परम भक्त्यवस्थायास्तादृशानुभवावस्थायाः पूर्वोक्त कृतार्थता बुद्ध्यात्मक प्रीतिरूप भोगावस्थायाश्च प्रतिक्षणं सम्भवेनोत्तर क्षणावच्छिन्नानुकूल तमत्व प्रकारक सर्वविशिष्ट स्वाम्यनुभवरूप स्वामिसाक्षात्करणस्योत्तर क्षणावच्छिन्न पूर्वोक्त प्रीतिरूप भोगस्य च पूर्व पूर्व क्षणेष्टत्वाद्य दनन्तरक्षणे यद्दीप्यते तत्तत्कृतमिति व्यपदेष्टं शक्यत्वात्पूर्वक्षणे च परभक्तित्वाद्याकारस्यापि सत्वात् स्वामि साक्षात्करण भोगयोस्तन्मूलत्वव्यपदेशः - तद्द्वारा कैङ्कर्य स्यापि तन्मूलत्व व्यपदेशः। न चात्र परभक्त्यादीनां वा साक्षात्करणभोगकृतत्वव्यपदेशः कुतो नेति वाच्यम् - परभक्ति परम भक्त्योरिच्छात्मकत्वेनेच्छाया ईप्स्य मानत्वा भावात् परज्ञानस्य ईप्स्य मानत्वेऽप्यनुकूलतमत्व प्रकारक सर्व विशिष्टस्वामिसाक्षात्करणापेक्षया तदप्रकारकसाक्षात्कारकस्याप्रकृष्टत्वेन अप्रकृष्टाकारस्य प्रकृष्टाकार कृतत्वव्यपदेशस्यात्यन्तानुचितत्वाद्योगदशायां परभक्त्यादि मूलोऽनुभवः - अनुभवमूलो भोगः - भोगकारितं कैङ्कर्यमिति मुख्यतया प्रयोज्य प्रयोजका कारस्य दर्शनेन मुक्तिदशायामपि तथैव पर भक्त्यादिषु कैङ्कर्य पर्यन्तेषु प्रयोज्य प्रयोजकाकारस्य व्यपदेष्टुमुचितत्वात् என்று கருத்து अत्र भोगशब्देन पूर्वोक्त प्रीतिरेवाभिधीयते। गद्यभाष्ये ''अनवधिकातिशयप्रीति कारित'' इत्येतद्व्याख्याने तादृशप्रीतेरेवेश्वर नित्यमुक्तानान्तरतमभाव राहित्येन समतया भोगमात्र साम्यस्य प्रतिपादितत्वादुत्तरोत्तरक्षणावच्छिन्न स्वामि साक्षात्करण भोगयोः पूर्वपूर्वक्षणेष्टत्वात्पूर्व क्षणावच्छिन्न पर भक्त्यादि मूलत्वमुदीरितमिति कारिकार्थः - अस्मत्प्रपितामह चरणकृतकारिका दर्पणे शेषं विस्तरेणानुसन्धेयम् - संसार दशै யிலே தானே, - ...

---

(सा.प्र.) ननु प्रपन्नानां शरीरवत्त्व तद्राहित्य दशाविशेषानादरेण परभक्त्यादि मत्त्वावगमेऽपि निर्निमित्तैव तस्यापवर्गदशा भावित्वोक्तिरित्यत्र ''धूत्वा शरीरं यावन्न विमोक्ष्येऽथ संपत्स्य इत्यादि ...

---

(सा.वि.) तथापि घटपटविषयक समूहालम्बने घटविषयक ज्ञानं पटविषयक ज्ञानमिति घटपट विषयकत्वादिना भेदवत्कार्तार्थ्य विषयकत्वाद्याकारभेदसम्भवादनेकक्षणावच्छेदसम्भवाच्च न द्विवचनानुपपत्तिरित्याहुः - साक्षात्कारो नाम ? परभक्तित्वादेस्साक्षात्कारः - भोगोऽत्र प्रीतिपरिवाह जनितपादसन्नाहनादि परिचर्याविशेषः - तयो रत्यन्तभिन्नत्वान्न द्विवचनानुपपत्तिः। तयोरुत्तरोत्तरयोस्सतोः पूर्वपूर्वक्षणे परभक्त्याव्यवस्थानामिष्टत्वान्मोक्षदशायां भगवदनुभवस्यैकस्वभावत्वेऽपि ...

---

(सा.सं.) सतु साक्षात्करणद्वारा परभक्त्यादि मूलकः - एवं च मुक्ति कालीने नित्यानुवृत्ते एक रूपेऽप्यनुभवे क्षणभेदेन परभक्तित्वाद्याकार भेदस्तत्तद्विशिष्टतया साक्षात्कृतिविषय तत्कैङ्कर्ययोरुत्तरोत्तरमिष्टत्व कृतोऽस्तीति मुक्तकैङ्कर्यस्य परभक्त्यादि मूलकत्वोदीरणं युक्तमेवेत्यर्थः - एवमपवर्गदशाश्रयानुभवस्य परभक्त्याद्यवस्थातरितत्त्वेऽपि तादृशप्रवाह सन्ताननैरन्तर्यस्य अनुभवैक रूप्यनिर्वाहकतेति भावः। - ...

मूलं। शरीरपातकालेच हार्दस्यानुग्रहस्स्वयम्।
परिपाकं प्रपन्नानां प्रयच्छति तथा विधम्।।
अङ्कोलतैलसिक्तानां बीजानामचिराद्यथा।

(सा.दी.) दृप्तानामपि प्रपन्नानां परभक्त्यादिरूपं परिपाकं सानुग्रहो हार्दस्स्वयमेव शरीर पातकाले जनयतीति च। इतः पूर्वमपरिचितस्यापि तदानीमुद्भवे दृष्टान्तमाह। अङ्कोलेति। अङ्कोल तैलेन सिक्तानांयेषां केषाञ्चिद्बीजानामचिरादेव फलपर्यन्तो विपाको यथा दृश्यते दोहलेषु ...

(सा.स्वा.) "शरीर पातसमये तु केवलं मदीयैव दययातिप्रबुद्धो मामेवावलोकयन्" इति गद्यத்திலே साक्षात्कारமுள்ளதாகச் சொல்லுகிறது கூடுமோ? संसारदशैயிலே साक्षात्कारं भक्ति योगंसाध्यமன்றோ? प्रपन्नனுக்கு भक्तियोगமில்லையே? என்னவருளிச்செய்கிறார் - शरीरपातकालेत्विति - शरीरपातकाले उपायान्तरस्थानापन्नो भगवानेव हार्द रूपस्स्वानुग्रहेण स्वयमेव भक्तियोग साध्यं मुक्ति दशासदृशं भगवत्साक्षात्कार रूप परिपाकं प्रपन्नानां प्रयच्छति என்கை - उपासनेन चिरपरिचितविषये साक्षात्कारो भवेत् - तथाविधसामग्र्यभावे भगवदवलोकनं கூடுமோ? என்ன लौकिकवैदिक दृष्टान्तங்களாலே समर्थिக்கிறார் - अङ्कोलेत्यादिना। बहुसंवत्सर जलसेकादि वर्धिताम्रादिवृक्षोद्भव फलस्य भूम्यामङ्कोलतैल सिक्तबीजनिक्षेपे द्वित्रि घटिकामात्रेणाङ्कुर पल्लवकोरकादि निष्पत्ति मुखेन प्रादुर्भावस्तथा हार्दानुग्रहेण प्रपन्नस्य ...

(सा.प्र.) प्रमाणाच्छरीर पातात्पूर्वं तदभावावगमात्तथोक्तिरित्यभिप्रयन्नाह शरीरपातेत्यादि - ननु भक्तानां प्रारब्धानुभावावधिविलम्ब्य फलप्रदस्यैव भगवतः प्रपन्नेभ्यश्शीघ्रफल प्रदत्वमयुक्तमित्यत्रे दानीमपि कालान्तरे फलजनकानां सहकारि विशेष समवधाने शीघ्रफल प्रदत्वप्रदर्शनान्नायुक्तिरित्याह - अङ्कोलेत्यादिना - न केवलं फलान्तरसाधन एव शीघ्र फल प्रदत्वम् - किन्तु भक्तियोगाराधितस्यैव भगवतश्शात वर्षिकव्रत ...

(सा.वि.) "स यदि पितृलोक कामो भवति - सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ते। जक्षत्क्रीडन् रममाण" इत्यादिषु अवस्थाविशेषाणामनुभवाभ्युपगमे बाधकाभावात्। अत एव गद्यभाष्ये "सांसारिकविकाराणां धर्मभूत ज्ञाने स्वतो विकसिते दुर्वचत्वादेकस्वभावोक्तिः - नतु तात्त्विकावस्था विशेष राहित्यात्" इत्याचार्यैरेव कण्ठोक्तत्वात्तत्पूर्वक्षणेषु मध्ये मध्ये परभक्त्याद्यवस्थान्तरितत्वेऽपि तादृशप्रवाह सन्ताननैरन्तर्यस्य न कापि क्षतिरिति कारिका दर्पणकृतः - अकिञ्चनानामपि प्रपन्नानां परभक्त्यादिरूपं परिपाकं सानुग्रहे हार्दस्स्वयमेव शरीरपातकाले ददातीत्याह - शरिरेति - पूर्वमनभ्यस्तस्यापि परभक्त्यादेरिदानीं सम्भवे दृष्टान्तमाह - अङ्कोलेति - अङ्कोलतैल सिक्तानां, येषां केषाञ्चिद्बीजानाम् - अचिरादेव, ...

(सा.सं.) ननु तदानीमेव मत्प्रसादलब्धेत्यादिकम् - तर्ह्यकिञ्चन प्रपन्नविषये निरर्थकं स्यात्। "अनेकजन्मसंसिद्धा" इत्यादिविरोधादित्यत्राह। शरीरेति - अनुग्रहः, कृपाविशेषः। प्रपन्नानां न्यस्तभराणां तथाविधं परिपाकं साक्षात्कार फलक परभक्त्यादि दशाविशेषं बहूनामित्यादिकं चोपासकविषयमिति भावः - एतस्यासम्भाविततां दृष्टान्तेन समाधत्ते - अङ्कोलेति। बीजानां फलाय विलम्बित विपाक स्वभावानामचिराद्विपाकः पञ्चषड्घटिकामात्रेण अङ्कुरपल्लवकोरकादिरूप फलपर्यन्त परिणाम परम्परा विशेषः यथा तथा हार्दानुग्रहात्तत्क्षण एव ...

मूलं। विपाकः फलपर्यन्तस्तथाऽत्रेतिनिदर्शितम् ।।
दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कल्मषैर्वृतम् ।
तदन्तकाले संशुद्धिं याति नारायणालये ।।
इति व्रतविशेषे यत्सात्वतादिषु शिष्यते ।
तद्वदत्रोपपद्येत गद्योक्तान्त्यदशागमः ।।

---

(सा.दी.) तथात्रापि परभक्त्यादि तत्क्षण एव भगवत्प्रसादात्सिद्ध्यतीति पूर्वैर्निदर्शितम् - उदाहरणान्तरमाह - दुष्टेति - नृणां यच्चित्तं दुष्टेन्द्रिय वशाच्चिरं कल्मषैर्वृतं तदपि नारायणालये दिव्यदेशेऽन्तकालस्संभवति चेज्झटिति संशुद्धिं प्रयति। भगवन्तं साक्षात्करोतीत्यर्थः। इतीति - इति, एवं - भगवच्छास्त्रेषु शिष्यते - व्रतविशेष उपदिश्यत इति यावत् - तद्वदेवात्र प्रपन्नेष्वन्तिमदशायां गद्योक्तोऽन्तिमदशागमः परभक्त्यादि सम्भव उपपद्यते च - केषुचित् तादृशभाग्यवत्स्वधिकारिषु भगवदनुग्रहविशेषेण गद्योक्तान्तिमदशागमः - शरीर पातात्प्रागपि दृष्टमित्याह - ...

---

(सा.स्वा.) अन्त्यकाले द्वित्रिचतुर्क्षणे चिरकाल साध्योऽपि परभक्ति परज्ञान परमभक्ति साक्षात्कार पर्यन्तोऽपि विपाको मोक्षप्रद मोक्ष्यमाणपुरुषमात्र साक्षिको निष्पद्यते - दुष्टेति। पञ्चरात्र संहिताविशेषेषु मोक्षार्थतया विहित व्रतविशेषे तदङ्गतया विहित भगवत्क्षेत्रवासा दन्तकाले दुष्टेन्द्रियवशेन कलुषितमपि मनस्साक्षात्कार रूप संसिद्धिं यातीतियत् शिष्यते, उपदिश्यते। तद्वदत्र प्रपन्ने गद्योक्तान्त्यदशागमः என்கை - இப்படி प्रपन्न विषयத்தில் अन्तकालத்திலே தானே परिपाकविशेषम् - ...

---

(सा.प्र.) विशेषादि साहित्ये शीघ्रफलप्रदत्वदर्शनाच्च प्रपन्नविषये शीघ्रफलप्रदत्वं युक्तमेवेत्यभिप्रयन्नाह - दुष्टेन्द्रियेत्यादिना। ननु शठकोपो नाथमुनिः குருகைக் காவலப்பன் इत्येतेषां शरीर वत्त्वेऽपि परभक्त्यादि मत्त्वस्य सांप्रदायिकत्वात्तदपवर्गदशाभावित्वोक्तिरयुक्तेत्यत्र संप्रदायतोऽपि व्यक्ति विशेषनियत तयैव तस्यावगमात् तादृगनुग्रहाविषयेषु अपवर्गदशा - ...

---

(सा.वि.) फलपर्यन्तो विपाको यथा दृश्यते दोहलेषु तथात्रापि परभक्त्यादिकं तत्क्षण एव भगवत्प्रसादात्सिद्ध्यतीति पूर्वैर्निदर्शितम्। उदाहरणान्तरमाह - दुष्टेति - इतीति - व्रतविशेषे। मोक्षार्थव्रतविशेषे - व्रतादिषु, सापञ्चरात्रादितन्त्रेषु - तदङ्गतया विहित नारायणालयनित्य वासादन्तकाले क्षणादेव परभक्त्यादि मूल कैङ्कर्य पर्यन्त परिपाक सिद्धिस्तद्वदिह गद्योक्तान्त्य दशागमः परभक्ति परिणाम इति - ननुनाथमुनि पराङ्कुशादीनां संसार एव तादृशपरिपाकः प्रसिद्धः ?

---

(सा.सं.) साक्षात्कार फलक परभक्त्यादि रूप विपाकोऽपीति शरीरपातसमये प्रयच्छतीति निदर्शितमित्यर्थः। दृष्टान्तान्तरमाह। दुष्टेति - इदं सात्वतसंहितावच नम् - यथा कलुषितान्तः करणानामपि कालुष्य शामनेन शरीर वियोगकाल एव ज्ञान विशेष हेतुत्वं नारायणालयस्य तथात्राप्यकिञ्चन प्रपन्न विषयेऽप्यन्त्य दशायां मुक्ति विपाकागम उपपद्येतेत्यर्थः - ननु नाथादेस्संसार एव तादृश परिपाकोदृश्यते - तत्कथमित्यत्राह - ...

मूलं। अनुग्रहविशेषेण केनचित्परमात्मनः ।
कुरुकाधीशनाथाद्याः प्रागप्यन्वभवन्प्रभुम्

**(இ) द्वयத்தினர்த த்தை நம்மாழ்வாரும்**
**"திரு நாரணன் தாள் காலம் பெறச்சிந்தித்துய்ம்மினோ" ...**

(सा.दी.) अनुग्रहेति - कुरुकाधीशः, शठकोपमुनिः - नाथः, नाथमुनिः आदिशब्दத்தால் குருகைக்காவலப்பன், திருக்கச்சி நம்பி, எம்பெருமானார் முதலானார் ग्रहिக்கப்படுகிறார்கள் - शरीर विश्लेषात्प्रागपि प्रभुमन्वभवन् - काञ्चीमुनिर्वरदराजमर्चा समाधि मतिक्रान्तमन्वभूत् - यतिराजोऽपि तादृशं श्रीरङ्गराजं गद्य प्रणयनकाले समन्वभूदिति जगत्प्रसिद्धिः - वेदान्ताचार्या अपि हयग्रीवं साक्षात्कृत्यान्वभवन्निति सार्वजनीनमेतत् - अथ द्वयार्थस्समुदितशशठकोपसूरिणा सप्रत्यभिज्ञं तादृश शब्दसन्दर्भक्रमं प्रयुञ्जानेनानुसंहित इत्याह - இத் द्वयத்தில் इत्यादिता - திருநாரணன் தாளென்று श्रीमन्नारायणचरणौ என்கிற पदार्थத்தையும், சிந்தித்தென்று शरणं प्रपद्ये என்றதின் अर्थத்தையும் -

(सा.स्वा.) உண்டாகில் श्रीपराङ्कुशनाथमुनि प्रभृतीनां प्रपन्नजनकूटस्थानां शरीर पातकालात्पूर्वमेव साक्षात्कार पर्यन्त परिपाकं வரக்கூடுமோ? என்னவருளிச்செய்கிறார் - अनुग्रहविशेषेणेति - आदि पदात् குருகைக்காவலப்பன், எம்பெருமானார், திருக்கச்சி நம்பி முதலானார்கள் विवक्षितர்கள். श्रीकाञ्चीमुनिर्वरदराजमर्चासमाधिमतिक्रम्यान्वभूत् - श्रीभाष्यकारोऽपि श्रीरङ्गराजं गद्यप्रणयनकाले समन्वभूदिति जगत्प्रसिद्धिः - निगमान्तदेशिका अपि हयग्रीवं साक्षात्कृत्यान्वभवन्निति सार्व जनीनमेतत् - ஆனாலும் सदाचार्य संप्रदायक्रमத்தாலே गद्यத்திலே विवरिத்தருளினாரென்கிறது கூடுமோ? संप्रदायक्रमத்தாலே संप्रदायத்துக்கு प्रथम प्रवर्तकரான நம்மாழ்வார் द्वयத்துக்கோரிடத்திலும் विवरणं - பண்ணவில்லையே? என்னவருளிச்செய்கிறார் - நம்மாழ்வாரும் इति - திருநாரணன்தாள் - श्रीमन्नारायण चरणौ - कालंபெற "स्थिते मनसि" इत्यादि प्रकारेण झटितिயாக - சிந்தித்து, उपायமாக अध्यवसिத்து - अनेन पूर्व - ...

(सा.प्र.) भावित्वोक्तेर्नायुक्तिरित्याह अनुग्रहविशेषेणेत्यादिना - एवं द्वयस्य भाष्यकारव्याख्या तत्त्वमुक्त्वा श्रीशठारिभिरपि बहुशो व्याख्याततत्वमाह - द्वयத்தில் इत्यादिना - திரு நாரணன் इत्यादि। श्रीमन्नारायणचरणौ "स्थिते मनसि" इत्युक्त - ...

(सा.वि.) तत्कथम्? इत्यत्राह। अनुग्रहविशेषेणेति। अथद्वयार्थश्शठकोप सूरिणापि तादृश शब्द सन्दर्भक्रमं प्रयुञ्जानेनानुसंहित इति प्रत्यभि ज्ञाबलात्सिद्ध्यतीत्यभिप्रायेणाह - இத்द्वयத்தில் इति। திருநாரணன்தாள் காலம் பெறச்சிந்தித்துய்ம்மினோ - திரு நாரணன், श्रीमन्नारायणस्य - தாள், श्रीपादौ - காலம் பெற, - ...

(सा.सं.) अनुग्रहेति - कुरुकाधीशः, पराङ्कुशनामक सहस्राष्ट संख्यक भाष्यकाराभिधयोगी - प्रागपि, शरीर वियोगात्प्रागपि - इत्थं मूलमन्त्र सङ्गृहीतापेक्षितयावदर्थ प्रकाशकत्वाद्द्वय विवृतत्वाच्चा स्यैवादरणीयत्वमुक्तम्। तदेव शठजिन्मुनिविवृतत्वादपि दृढयति - द्वयத்தில் इति। காலம்பெற इत्यनेन "महता पुण्य पण्येन" इति श्लोकार्थ उक्तः - ...

मूलं। என்றும் ''முகில் வண்ணனடியையடைந்தருள் சூடியுய்ந்தவன்'' என்றும் ''அகலகில்லேன்'' முதலான प्रदेशங்களிலுமருளிச்செய்தார் - இதில் முற்பட - ...

(सा.दी.) உய்மினோ என்று सङ्ग्रहेणोत्तरखण्डार्थத்தையும் अनुसन्धिத்தார் - முகில் வண்ணனென்று श्रीमन्नारायण शब्दार्थத்தையும், அடியை என்று चरणशब्दार्थத்தையும், அடைந்தென்று शरणं प्रपद्ये இதின் अर्थத்தையும், அருள் சூடியுய்ந்தவனென்று उत्तर खण्डार्थத்தையும் अनुसन्धिத்தார் - அகலகில்லேன் இறையுமென்றலர் மேல் மங்கையுறைமார்பா என்கிற பாட்டிலும் ''ஒண்டொடியாள் திரு மகளும்'' इत्यादि प्रदेशங்களிலு மருளிச் செய்தார் - இனி இதின் पदப்பொருளருளிச்செய்ய उपक्रमिக்கிறார் - இதில் முற்படவென்று துடங்கி. श्रीमन्नारायण पदार्थத்தைக் காட்டுகிறார் - ...

(सा.स्वा.) खण्डार्थ उक्तः। உய்ம்மினோ, उज्जीविயுங்கோள் - अनेन उत्तरखण्डार्थ उक्तः - முகில் வண்ணனடியை, मेघश्यामलனான श्रीमन्नारायणன் திருவடிகளை - அடைந்து, शरणமாகப்பற்றி - அருள்சூடி, कृपैயை அடைந்து, உய்ந்தவன், उज्जीविத்தவன் - इत्यनेनापि द्वयार्थो विवृतः - அகலகில்லேனென்கிற பாட்டில் पूर्वखण्डार्थமும், ஒண்டொடியாள் திருமகளும் इत्यादावुत्तरखण्डार्थமும் அருளிச்செய்தாரென்றபடி. तथा च द्वयस्य करण मन्त्रत्वादत्यन्त प्रभाववत्वात् संपूर्ण प्रपत्ति प्रकाशकत्वात्सांप्रदायिकत्वाच्चवश्यं रहस्यत्रयेऽन्तर्भाव्यपद वाक्ययोजनै பண்ணுகிறது उपपन्न மென்றதாயிற்று. இப்படி द्वयத்துக்கு पदवाक्ययोजनै आवश्यकैயானாலும் करणमन्त्रतया उपायानुष्ठान प्रधानமானபடியாலே प्रपद्येயென்கிற क्रियापदं द्वयத்திலே முன்னேயிராமல் श्रीमन्नारायण शब्दமிருப்பானேன்? என்ன வருளிச்செய்கிறார். இதில் முற்பட इति। - ...

(सा.प्र.) प्रकारेणाविलम्बेन शरणत्वेनानुसन्धायोज्जीवतेत्यर्थः - முகில்வண்ணன் इत्यादि - कालमेघश्यामल भगवच्चरणावेवोपायत्वेनाधिगम्यतत्कृपया तत्कैङ्कर्यं प्राप्य लब्धस्व रूप इत्यर्थः - அகலகில்லேன் முதலான इति। அகலகில்லேன் इत्याद्याः प्राप्य प्रापकतया भगवत्पादारविन्दबोधकाः - ''ஆறெனக்கு நின்பாதமே சரணாக'' इत्याद्या आदिशब्दापरपर्याय முதலான शब्दार्थः - एवं द्वयार्थस्य सांप्रदायिकत्व मुक्त्वा प्रतिपदं विस्तरेणार्थमाह - இதில் முற்பட इत्यादिना - तत्र - ...

(सा.वि.) शीघ्रं - சிந்தித்து, आश्रित्य - உய்ம்மினோ, उज्जीवत। कैङ्कर्यैक धना भवतेत्यर्थः। சிந்தித்து इत्यनेन पूर्वखण्डार्थोऽनुसंहितः - உய்ம்மினோ इत्युत्तर खण्डार्थः - முகில்வண்ணனடியை யடைந்தருள் சூடியுய்ந்தவன் - முகில் வண்ணன், नीलमेघश्यामस्य - அடியை, श्रीपादौ। அடைந்து, आश्रित्य - अयं पूर्वखण्डार्थः - அருள், कृपाम्। சூடி, धृत्वा। कृपाविषयो भूत्वा - உய்ந்தவன், उज्जीवितवान्। अयमुत्तरखण्डार्थः - அகலகில்லேன் इति। அகலகில்லேனிறையும் ஒழிவில் காலம் முதலான प्रदेशங்களிலும், इत्यादि गाथास्वित्यर्थः - अथ विस्तरेण व्याचष्टे। இதில் इत्यादिना - परतत्व स्यैवाश्रयणीयत्वात् श्रीमन्नारायण शब्दाभ्यां परतत्त्वमुच्यत इत्याह - முற்பட - ...

(सा.सं.) உய்கை, उज्जीवनम्। अथ मन्त्रं व्याख्यातुं प्रथमं शरण्यस्य विशेषणान्तरेषु शरण्योपस्थापक नामान्तरेषु च सत्पृस्यैव नाम्नोऽस्यैव विशेषणस्योपादानं शरण्य विशेष निर्धारकत्व कृतमित्याह। இதில் इति। ...

मू - ...... - - - - - - அடிமையெல்லாம்
கோதிலுணர்த்தியுடன் கொள்ளுமாறு குறித்தனமே. ।। ३५ ।।
नवेदान्ताच्छास्त्रं.... - - .... - - - ...

(सा.दी) அடிமையெல்லாம், அங்கு பண்ணும் कैङ्कर्यங்களையெல்லாம். கோதிலுணர்த்தியுடன், स्वार्थकर्तृत्वभोक्तृत्वभ्रमरहितமான परिपूर्णब्रह्मानुभवத்தோட கூட - கொள்ளுமாறு, பண்ணும் प्रकारத்தை. குறித்தனம், द्वयத்தில் पदங்களிலடைவே सावधानமாக अनुसन्धिக்கப் பெற்றோமென்கை ।।३५।।

अथ द्वयोच्चारणத்தைப் பற்ற अधिकமான हितமில்லையென்னுமத்தை பலदृष्टान्तங்களாலே उपपादिக்கிறார் - न वेदान्तादिति - वेदान्तादधिकं शास्त्रं यथा नास्ति - "वेदाच्छास्त्रं परं नास्ति" इत्युक्तेः -

(सा.स्वा) அடிமையெல்லாம் - பண்ணும் कैङ्कर्यங்களையெல்லாம் - கோதில், दोषமில்லாத. स्वार्थकर्तृत्व भोक्तृत्व भ्रान्तिरूपदोषरहितமான. உணர்த்தி, निश्चयத்தோடு - परिपूर्ण ब्रह्मानुभवத்தோடே கூட - கொள்ளுமாறு, பண்ணும் प्रकारத்தை - குறித்தனம், द्वयத்தில் पदங்களிலே அடைவாக अनुसन्धिக்கப் பெற்றோமென்றபடி. இங்கு पूर्वोक्त प्रकारமன்றிக்கே फलप्रधानமாக वाक्यार्थं சொல்லுகையாலே पुरुषार्थமாக द्वयानुसन्धानकालத்திலே अर्थानु सन्धानமிப்படியும் பண்ணலாமென்று கருத்து ।। ३५ ।।

இனி द्वयं போலே "सकृज्ज्ञप्तेन मन्त्रेण" என்று प्रपत्तिकरणमन्त्रங்கள் अनेकமிருக்க द्वयத்தையே रहस्यत्रयान्तर्भावं பண்ணி अर्थविचारं பண்ணவேணுமோ? "अहो द्वयस्य माहात्म्यम्। किन्तु तस्य च मन्त्रस्य" इत्यादिகளிலே द्वयमधिकमाहात्म्यवत् என்னிலது अर्थवादरूपமன்றோ? என்ன अनेकदृष्टान्तங்களாலே द्वयमाहात्म्यத்தை समर्थिக்கிறார். न वेदान्तादिति। वेदान्तात्, अधिकम् -

(सा.प्र) அடிமையெல்லாம், सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविधकैङ्कर्यस्य கோதிலுணர்த்தியுடன், स्वाधीन स्वार्थकर्तृत्व, स्वाधीन स्वार्थभोक्तृत्वरूप विरोधिशून्यबुद्ध्या सह - கொள்ளுமாறு குறித்தனமே, स्वीकरण प्रकारं निरणैस्म ।। ३५ ।।

यथा "वेदशास्त्रात्परं नास्ति नदैवं केशवात्परम्। न वासुदेवात्परमस्ति किञ्चित्" इत्यादि -

(सा.वि) அடிமையெல்லாம், सर्वदेश, सर्वकाल, सर्वावस्थोचित सर्वविधकैङ्कर्यस्य। கோதிலுணர்த்தி யுடன் - கோது, ऋजीषम्। असारम् - स्वार्थकर्तृत्वादि। இல், रहितम् - உணர்த்தி, ज्ञानम् - உடன், सह - असारभूत स्वाधीनकर्तृत्व स्वार्थकर्तृत्व स्वाधीनभोक्तृत्व, स्वार्थभोक्तृत्व, ज्ञानरहितज्ञानेन सहेत्यर्थः। கொள்ளுமாறு, स्वीकार प्रकारम् - குறித்தனமே, अवगच्छामः ।। ३५ ।।

न वेदान्तादिति। -

(सा.सं) நம் பங்கயத்தாள் நாதனை, लक्ष्म्या सह तया सार्थमस्मन्मातरमित्युक्त श्रियः पतिम्। நண்ணி, प्राप्य - அடிமையெல்லாம், कैङ्कर्यं सर्वम्। கோதில், स्वाधीनत्वादि भ्रमविधुरं यथा तथा - உணர்த்தியுடன், अखण्डब्रह्मानुभवेन सह - கொள்ளுமாறு, स्वीकरणप्रकारम् - குறித்தனமே, अवगतवन्त एव ।।३५।।

आकर्णित इति श्लोकेन मन्त्रान्तरेभ्योऽस्यैवोत्कृष्टत्व प्रयोजकमुक्तम्। अथ "निवेदयीत स्वात्मानं विष्णावमलतेजसि। तदात्मा तन्मनाश्शान्तस्तद्विष्णोरिति मन्त्रतः" इत्युक्तमन्त्रान्तरेभ्यः शरण्यशरणागति तत्फलानां विशदप्रकाशकत्वेनास्यमुख्यत्वादेतदधिकरक्षकं नास्तीत्युक्तप्रयोजकफलितमुत्कृष्टत्वं सदृष्टान्तमाह - न वेदान्तादिति - अधिकमिति पदं सर्वत्रान्वेति । यथा वेदान्ता -

**मू - ...नमधुमथनात्तत्त्वमधिकं,**
**न तद्भक्तात्तीर्थं नतदभिमतात्सात्विकपदम्।**
**न सत्त्वादारोग्यं.....**

(सा.दी) मधुमथनात्। मधुसूदनाच्छ्रियः पतेः अधिकं तत्त्वं यथा च नास्ति। ''न दैवं केशवात्परम्'' इति वचनात् - तद्भक्तात्, विष्णुभक्तादित्यर्थः - अधिकं तीर्थम् आत्मशोधकं यथा वास्ति ''तीर्थी कुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता'' इत्यादेः - तदभिमतात् श्रीवैष्णवाभिमतात् - अभिमानविषयीकृतात्स्थानादधिकं सात्त्विकं पदम्। सात्त्विकानां वासस्थानं यथा नास्ति। ''यत्राष्टक्षरसंसिद्धः - यत्र भागवता नित्यं वसन्ति विमलाशयाः'' इत्यादेः। सत्त्वात् यस्सत्त्वगुणो मोक्षहेतुर्भवति तादृशात्सत्त्वगुणादधिकमारोग्यं यथा नास्ति संसाररोगराहित्यमेव ह्यारोग्यम्। -

(सा.स्वा) उत्कृष्टं शास्त्रं यथा नास्ति। अधिकमित्यस्य सर्वत्रान्वयः - मधुमथनादधिकं तत्त्वं यथा नास्ति ''वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्'' इत्युक्तेः - तद्भक्तात् भगवद्भक्तात् - अधिकं तीर्थम्, पावनं नास्ति। ''ते पुनन्त्युरुकालेन दर्शनादेव साधवः'' इत्युक्तेः - ''पुनन्तु मां ब्राह्मणपादपांसवः'' इति भगवतैवोक्तेश्च - तदभिमतात्, भागवताभिमतस्थलात् - अधिकं सात्त्विकं स्थानं वासस्थानं नास्ति। यत्राष्टाक्षरसंसिद्धः - यो वैकुण्ठकथा सुधारसभुजां रोचेतनो चेतसः'' इत्यादिकं द्रष्टव्यम् - सत्त्वादारोग्यं अधिकं नास्ति - आरोग्यं,आरोग्यजनकम्। सात्त्विकाहारादधिकं आरोग्यजनकं नास्ति। ''आयुस्सत्वबलारोग्यः'' इत्यादिकमत्र द्रष्टव्यम्। यद्वा, आरोग्यं, आरोगता साधनम् - मोक्षसाधनम्। -

(सा.प्र) प्रमाणाद्वेदादधिकं शास्त्रं वासुदेवादधिको देवो नास्तीत्यवगम्यते, यथा ''न ह्यंमयानि तीर्थानि न देवा मृच्छिलामयाः। ते पुनन्त्युरुकालेन दर्शनादेव साधवः। तप्तचक्रेण विधिना बाहुमूले तु लाञ्छितः। पुनाति सकलं लोकं नारायण इवाघभिद्'' इत्यादिभिर्भागवतेभ्योऽधिकं पावनं नास्तीत्यवगम्यते यथा वा ''सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गमम्। सद्भिर्विवादं मैत्रीं च नासद्भिः न किञ्चिदाचरेत्। निगृहीतेन्द्रिय - ग्रामो यत्र यत्र वसेन्नरः। तत्र तत्र कुरुक्षेत्रं पुष्कराणि'' इत्यादिभिर्भागवताभिमताद्वैष्णव प्राप्यभूमिर्नास्तीत्यवगम्यते, यथा वा ''तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम्। सुखसङ्गेन बध्नाति - सत्वं सुखे सञ्जयति'' इत्यादिभिस्सत्वगुणादधिकं सुखजनकं नास्तीत्यवगम्यते, यथा वा ''ज्ञानाङ्कुरं तत्परिवर्धयन्ति यो शास्त्रसत्सङ्गतितोयसेकैः। सत्सङ्गतेराशुहरौ पुंसां भक्तिः प्रजायते। हरिभक्तौ -

(सा.वि) तीर्थम्, पावनम्। तदभिमतात्, भागवताभिमतात् - ''निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः। तत्र तत्र कुरुक्षेत्रं नैमिशं पुष्करं (विदुः) तथा'' इत्युक्तेः - न सत्त्वादारोग्यमिति - ''सत्वात्सञ्जायते ज्ञानम् - सत्त्वं सुखे सञ्जयति'' इत्यादिभिः। रागादिदोषनिवर्तनेन सुखहेतुत्वोक्तेस्तदेव आरोग्यम्, ''यत्तु शारीरमारोग्यं न तदारोग्यमिष्यति। यदात्मनि समारोग्यं -

(सा.सं) यथा वेदान्तादिभ्यश्शास्त्रादिकं नाधिकम् -

**मू - .....न बुधभजनाद्बोधजनकं,**
**न मुक्तेस्सौख्यं न द्वयवचनतः ----- .....**

(सा.दी) बुधभजनात्। सदाचार्योपसदनादित्यर्थः। अधिकं बोधजनकं, ज्ञानोत्पादकं यथा नास्ति - "सदा सन्तोऽभिगन्तव्याः" इत्यादेः - मुक्तेः, मौक्षसौख्यान्निरतिशयानन्दादित्यर्थः। अधिकं सौख्यान्तरं यथा नास्ति - "मुक्ति र्मोक्षो महानन्दः - निरस्तातिशयाह्लाद सुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिः" इत्यादेः। तथा द्वयोच्चारणात्। द्वयेन शरणागतौ किमु वक्तव्यमिति भावः।

(सा.स्वा) "ऊर्ध्वं गच्छन्ति सत्त्वस्थाः" इत्युक्तेः - बुधभजनात्, सदाचार्यसमाश्रयणात् - अधिकं बोधजनकं तत्त्वज्ञानजनकं नास्ति - "सदा सन्तोऽभिगन्तव्याः" इत्याद्युक्तेः - मुक्तेः, मोक्षात् - अधिकसौख्यं यथा नास्ति। "निरस्तातिशयाह्लाद सुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकीमता" इत्याद्युक्तेः। द्वयवचनतः, तथा द्वयोच्चारणात् - अधिकं क्षेमकरणम्, मोक्षकरणम् - साधकतमं नास्तीत्यर्थः। तथा चोक्तस्थलेषु दृष्टान्तेषु यथार्थवादता नास्ति, तथा प्रकृतेऽपि " सकृदुच्चारस्संसारविमोचनं भवति। अहो द्वयस्य माहात्म्यम्" इत्यादि श्रुतिस्मृत्युक्तेः - अर्चावतारेऽपि भगवन्तं श्रीभाष्यकारं प्रति "येन केनापि प्रकारेण द्वयवक्ता" इति श्रीरङ्गनाथोक्तेश्च नात्रार्थवादता शङ्कनीयेति तात्पर्यम्। "इदं रहस्यं परमं लक्ष्मीनारायणं द्वयम्। राजन् तवापि वक्ष्यामि प्रपत्तिं शरणागतिम्।। द्वयात्परतरं मन्त्रं नास्ति नारायणात्परः।।"

(सा.प्र) प्रजातायामुदेति ज्ञानमुत्तमम्" इत्यादिभिस्सत्सङ्गत्यधिकं बोधजनकं नास्तीत्यवगम्यते। यथा वा "यत्र नान्यत्पश्यति, नान्यच्छ्रुणोति, नान्यद्विजानाति। येनाहन्नामृतास्यां किमहंतेन कुर्याम्" इत्यादिभिः मोक्षादधिकसुखं नास्तीत्यवगम्यते - तथा " द्वयात्परतरो मन्त्रो नास्ति वेदेष्वशेषतः। द्वयात्परतरो मन्त्रो नास्ति सत्यं ब्रवीमि ते।। सर्वेषामेव मन्त्राणां मन्त्ररत्नं शुभावहम्। सकृत्स्मरणमात्रेण ददाति परमं पदम्।। द्वयात्परतरो मन्त्रो नास्ति सर्वप्रदो नृणाम्। यस्योच्चारणमात्रेण परमां सिद्धिमाप्नुयात्।।" इत्यादि प्रमाणात् -

(सा.वि) तदारोग्यमितीर्यते" इति ज्ञानसुखादिकमेवारोग्यं तद्धेतुत्वात्तत्त्वेन व्यपदेशः। बोधजनकं, ज्ञानप्रदम् - "अनुगन्तव्यास्सन्तो यद्यपि कुर्वन्ति नैकमुपदेशम्। यस्तेषां स्वैरकथास्तास्ता एव भवन्ति शास्त्रार्थाः।। ज्ञानाङ्कुरं तत्परिवर्धयन्ति ये शास्त्रसत्सङ्गतितोयसेकैः। सत्सङ्गश्च विवेकश्च निश्चितं नयनद्वयम्।। एकेन हीनः काणस्स्याद्द्वाभ्यामन्धः प्रकीर्तितः।।" इत्याद्युक्तेर्महत्सेवातः अधिकं ज्ञानजनकं नास्तीत्यर्थः - द्वयवचनतः, द्वयोच्चारणात् - अधिकं क्षेमकरणम् कुशलसाधनं नास्ति मुक्तेरधिकं सौख्यं नास्ति - तत्साधनं द्वयोच्चाणादधिकं नास्तीत्यर्थः। -

(सा.सं) तथा द्वयाधिकं क्षेमकरणं नास्तीत्यर्थः - "द्वयात्परतरो मन्त्रो नास्ति सर्वप्रदो नृणाम्। यस्योच्चारणमात्रेण परमां सिद्धिमाप्नुयात्।।" इत्यादिकमिह प्रमाणम्।। -

मू - .................क्षेमकरणम् ।। ६७।।

।। इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य

वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे द्वयाधिकारोऽष्टाविंशः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

---

(सा.दी) अधिकं - क्षेमस्य,मोक्षस्य। करणं, साधकतमं नास्तीत्यर्थः ।। ६७।।

।। इति श्रीसारदीपिकायां द्वयाधिकारोऽष्टाविंशः ।।

---

(सा.स्वा) इत्यादिकं पाद्म, वसिष्ठ, दिलीपसंवादादौ द्रष्टव्यम्।। ६७ ।।

।। इति श्रीमदुत्तरसारास्वादिन्यां द्वयाधिकारोऽष्टाविंशः ।।

---

(सा.प्र) हिततमेषु द्वयतुल्यं नास्तीत्याह - न वेदान्तादित्यादिना ।। ६८।।

।। इति श्री सारप्रकाशिकायां द्वयाधिकारोऽष्टाविंशः ।।

---

(सा.वि) इह न वेदान्तादित्यादि वाक्यानां दृष्टान्ततया अन्वय इति ध्येयम् ।। ६७।।

।। इति श्री सारविवरिण्यां द्वयाधिकारोऽष्टाविंशः ।।

---

(सा.सं) तीर्थम्, पावनम् - आराधनीयं वा। ''आराधनानां सर्वेषाम्'' इत्युक्तेः ।। ६७।।

।। इति श्री सारप्रकाशिकासङ्ग्रहे द्वयाधिकारोऽष्टाविंशः ।।

।। श्रीमते निगमान्तमहादेशिकाय नमः ।।

|| श्रियै नमः ||
|| श्रीमते रामानुजाय नमः ||
|| श्रीमते निगमान्तमहादेशिकाय नमः ||

# || चरमश्लोकाधिकारः ||

**मू - य उपनिषदामन्ते.......... ---- ...**

(सा.दी) இப்படி द्वयाधिकारं व्याख्यातமாயிற்று. இனி चरमश्लोकाधिकांर व्याख्यातமாகிறது. அதில் முந்துர चरमश्लोकத்துக்கு प्रवर्तकனுமாய்,

(सा.स्वा) இப்படி திருमन्त्रமும் द्वयமும் मन्त्रமாகையாலே अषडक्षीणतयोपदेश्यமாகையாலே रहस्यமானாலும் ''श्रावयेच्चतुरोवर्णान्'' என்கிறபடியே सर्वருக்கும் श्राव्यமான चरमश्लोकं रहस्यமல்லாமை யாலே இத்தை रहस्य त्रयान्तर्गतமாக்கி இதுக்கு पदवाक्ययोजनै பண்ணுகிறோமென்று मूलमन्त्राधि-कारादिயிலே प्रतिज्ञै பண்ணினது கூடுமோ? இது शब्दतस्सर्व श्राव्यமானாலும் अर्थतो रहस्यतमार्थ-कतया रहस्यत्रयान्तर्गतமென்னில் இந்த श्लोकத்தை अर्थतः रहस्यமென்று சொல்லக்கூடுமோ? युद्धभूमिயிலே क्षत्रियனான अर्जुनனுக்கு अपकर्ष தோற்றும்படி सारथ्यं பண்ணுகிற गोपजातीयனான पुरुषன் சொல்லுகிற श्लोकத்துக்கு प्रामाण्यமே शङ्कितமாகையால் रहस्यतमार्थकत्वं சொல்லக்கூடுமோ? सर्वेश्वरனான श्रियः पति தானே गोपवेषனாக अवतरिத்து उपदेशिக்கையாலே श्लोकं रहस्यமாகலா மென்னிலானாலும் भगवदवतार बुद्धाद्युपदेशं போலே अनुपादेयत्वं प्रसङ्गिயாதோ? बुद्धावतारं दुष्कृद्वं चनार्थமாக असच्छास्त्रप्रवचनार्थமாகையாலே तदुपदेशमनुपादेयமானாலும் कृष्णावतारं केवलं धर्मसंस्थापनार्थावतारமாகையாலே तदुपदिष्टश्लोकं रहस्यமாகலாமென்னிலானாலும் सर्वेश्वरனாய் उपदेष्टाவுமான श्रीकृष्णன் अपकर्षावहसारथ्यादिகளை பண்ணக் கூடுமோ? सौशील्यसौलभ्यादि गुणத்தாலே सारथ्यदूत्यादिवहनं கூடுமென்னில் அப்போது सर्वविषयத்திலும் सारथ्यादिवहनं प्रसङ्गिயாதோ? ''द्रौपद्या सहितास्सर्वे नमश्चक्रु र्जनार्दनम्'' என்கிறபடியே व्याजविशेषமிருக்கையாலே तद्वहनं கூடுமென்னிலானாலும் प्रणिपातादिशिष्यलक्षणமில்லாதேயிருக்க முறை தப்பியவனுக்கு उपदेशिக்கக் கூடுமோ? ''कार्पण्यदोषोपहतस्वभावः'' इत्यादिகளாலே प्रणिपातादि शिष्यलक्षणமுமிங்கு श्रुतமென்னிலானாலும் युद्धभूमिயிலே प्रश्नप्रतिवचनमसङ्गतமன்றோ? सङ्गतமானாலும் रहस्यतमोपायமே उपदेश्यமாகையால் कर्मयोगाद्युपदेशமும் असङ्गतமன்றோ? -

(सा.प्र) एवं द्वयस्य पदपदार्थवाक्यार्थानुक्त्वा तत्प्रतिपाद्योपायोपेयाधिकारिणां विशिष्य प्रतिपादकस्य चरमश्लोकस्य पदवाक्ययोजनां वक्तुं वक्ष्यमाणमधिकारार्थं सङ्गृह्याह -

(सा.वि) द्वयं व्याख्याय द्वयानुष्ठेय भरन्यासविधायकचरमश्लोकं व्याचिख्यासुः प्रथमं सुग्रहत्वायाधिकारार्थं स्वानुसन्धानमुखेन श्लोकेन सङ्गृह्णाति।

(सा.सं) अथ चरमश्लोकस्य पदवाक्ययोजनां कर्तुमस्यावश्यापेक्षिततां समर्थयितुं वक्ष्यमाणाधिकारार्थ-सङ्ग्राहकं श्लोकद्वयमाह।

मू - .................यस्मादनन्तदयाम्बुधेः,

(सा.दी) सनातनधर्मமான परमदेवतैயை अनुसन्धिக்கக்கோலி, இங்கு प्रपत्त्यनुष्ठानं प्रपत्ति विधानमूलமாய், प्रपत्तिविधि तानुपायान्तरदौष्कर्यदर्शनजनितशोकनिवृत्त्यर्थतयாயிருக்கையால், அதிலவன் विधिத்த प्रपत्त्यनुष्ठानத்தால் தம்முடைய नैर्भर्यத்தை प्रदर्शिயா நின்றுகொண்டு कृष्णனை अनुसन्धिக்கிறார். य उपनिषदाम् என்று. எவனொருவன் उपनिषத்துக்களுடைய. अन्ते, समीपे - प्रतिपाद्यत्वेन वर्तिயா நின்றான். யாதொரு परमकारुणिकன் பக்கல் अनुसन्धाताக்களுடைய शोकத்தைப் -

(सा.स्वा) किञ्च अर्जुनனைக் குறித்து पदिष्टतया அவனுக்கு उपादेयமாகையாலே अस्मदादिகளுக்கு अनुपदिष्टமாகையாலே अस्मदाद्युपेयत्वமெங்ஙனே? இந்த उपायத்துக்கு भक्तियोगाद्यपेक्षया रहस्यतमत्वं தானெங்ஙனே? किञ्च இந்த रहस्यतमोपायं முதலான सर्वार्थமும் मूलमन्त्रத்திலே सिद्धिக்கையாலே एतद्व्युत्पादनमन्यथासिद्धமுமன்றோ? इत्यादिशङ्कैகளைப் परिहरिத்துக்கொண்டு चरमश्लोकव्युत्पादनத்தை "एष नारायण:" என்று துடங்கி महावाक्यத்தாலே विस्तरेण समर्थिக்கக் கடவராய்க் கொண்டு आद्यश्लोकத்தாலே अधिकारार्थத்தையும் शङ्कापरिहारங்களையும் सङ्ग्रहिக்கிறார் - य इति - यः, श्रीकृष्णः । उपनिषदामन्ते, सर्वोपनिषदां समीपे । गौणवृत्त्यादिक्लेशमन्त रेण ऐककण्ठ्येन सर्वोपनिषदां स्वरसतः प्रतिपाद्य इति समीपवाचकान्तशब्देन उपनिषदामिति बहुवचनेन च व्यज्यते "ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः" इत्यपि विशिष्य प्रतिपाद्यत इत्यपि व्यज्यते ।अनेन सर्वोपनिषत्प्रतिपाद्यपरब्रह्मैव कृष्णरूपेणावतीर्णमिति तात्पर्यम् । - अनन्तदयाम्बुधेः, प्रसिद्धाम्बुधिस्तु परिच्छिन्न इति व्यतिरेकस्सूच्यते । यस्मात्, कृष्णात् । -

(सा.प्र) य उपनिषदामित्यादिना - सर्ववेदान्तवेद्यान्निरवधिकया विवशतया स्वाभीष्टसाधनासामर्थ्येन शोचतां शोकनिवर्तनप्रवृत्त्याद्यस्माच्छ्रीमन्नारायणात् भरन्यासविधिरूप श्लोकः प्रवृत्तः । -

(सा.वि) य इति । यः, परमपुरुषः - उपनिषदामन्ते । मध्ये वनान्त इत्यादावन्तशब्दस्य मध्यवाचकत्वात् । वर्तत इति शेषः । मध्यस्थ वाक्यानामुपक्रमोपसंहारबलेन परमपुरुष प्रतिपादनतात्पर्यनिर्णयादन्त इत्युक्तम् । वेदान्त प्रतिपाद्य इति भावः - यस्मात्,परमपुरुषात् । -

(सा.सं) य इति दुर्विज्ञानैरिति च । तत्रादौ परमकारुणिकेन सर्वशक्तेन सर्वेश्वरेण अकिञ्चन मुमुक्षुजनतागत-सकलविधशोकनिवृत्तये चरमश्लोकेन स्वतन्त्रप्रपत्तिविधानात्स्वीयानामपि नैर्भर्यावधिकप्रपत्त्य-नुष्ठानौपयिकमहाविश्वाससिद्ध्ये स्वस्य प्रपत्त्यनुष्ठानेन सिद्धं नैर्भर्यं प्रदर्शयन् हर्षविशेषेण कृष्णमनुसन्दधाति - य इति कृष्णस्य प्रतारकत्वशङ्कयाव्याख्येयस्याप्रमाणत्वशङ्का सारथित्वेनावस्थायाचार्यककरणप्रदर्शनेन वारयितुमखिलोपनिषदुद्घुषितमुभयलिङ्गत्वं साधुपरित्राणोन्मुखत्वं च सूचयति । य इति सारथ्यपर्यन्त-निकृष्टव्यापार प्रवृत्ततया प्रसिद्ध इत्यर्थः । उपनिषदामन्ते, समीपे मुख्यवृत्त्याऽपर्यवसानवृत्त्या च उपनिषदां प्रतिपाद्यत्वेनावस्थित इत्यर्थः । ततः किमित्यत्राह - यस्मादित्यादिना - यस्मात्, औपनिषदात् - "एष नारायणश्श्रीमान्" इत्यादिना प्रथितविभवात्परमपुरुषात् । -

**मू - त्रुटितजनताशोकश्लोकस्स्वयं समजायत।**
**तमिह विधिना कृष्णं धर्मं प्रपद्य सनातनं,**
**शमितदुरिताः ... ---- ... ---- ... ---- ...**

(सा.दी) போக்குமதான चरमश्लोकं स्वयमुदभूत् - कृष्णன் स्वयमेव அருளிச் செய்கையே श्लोकத்துக்கும் स्वयमुद्भवम् - तं सनातनं धर्मं कृष्णम् - इह, जन्मनि। चरमश्लोकोक्तविधिप्रेरितராய் प्रपत्त्या वशीकरித்து शमितसंसारतापராய் -

(सा.स्वा) - त्रुटितजनताशोकस्सन्, प्रशमितसर्वजनशोकस्सन् - स्वयंसमजायत,दयाम्बुधेस्स्वयं समजायतेत्यनेन दयैव श्लोकरूपेणोदीर्णेति व्यज्यते। अनेनार्जुनं व्याजीकृत्य सर्वलोकसंरक्षणार्थं दयापरवशस्सन् रहस्यतमोपाय मुपदिष्टवानिति प्रतीत्यार्जुनमात्रविषयत्वं वा बुद्धाद्युपदेशवदनुपादेयत्वं वा नास्तीति तात्पर्यम् - तं कृष्णं, अनेन वेदान्तवेद्य एव श्रियः पतिश्श्रीकृष्णरूपेणावतीर्ण इति व्यज्यते सनातनं धर्मं, सिद्धोपायम् - '' येच वेदविदो विप्रा येचाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्।।'' इति प्रकारेण सिद्धधर्मभूतं कृष्णम्। विधिना,चरमश्लोकाद्युक्तप्रकारेण - विधिना,भाग्यवशेन वा - इह जन्मनि - प्रपद्य, शरणतया वृत्त्वा -

(सा.प्र) तं सर्वेषां सर्वविधफलसाधनभूतं भगवन्तं तदुक्तशास्त्रप्रकारेणाश्रित्य परमपुरुषार्थसिद्धौ निर्विशङ्का वयं तत्कैङ्कर्यरूपतत्तत्प्रबन्ध निर्माणेन सुखिता भवेमेत्यर्थः। -

(सा.वि) त्रुटितः, छिन्नः। जनतायाः जनसमूहस्य - शोकः, दुष्करोपायान्तरासामर्थ्यप्रयुक्तः खेदः येन स तथोक्तः - श्लोकः, चरमश्लोकः - स्वयं समजायत,समभूत् - एतादृशमुपायं विधेहीति प्रार्थनां विनैव करुणावशादाविर्भूत इति भावः - अत्र यस्मात्परमपुरुषाच्छोकस्स्वयं समजायतेत्यनेन चरमश्लोको भगवन्मुखारविन्दादुद्धतो न व्यासग्रथित इति सूचितम् - सनातनं धर्मम्, अलौकिकश्रेयस्साधनभूतम् - कृष्णं धर्मं सनातनमिति स्मारितम् - विधिना, भाग्येन। इह, अस्मिञ्जन्मनि - एतादृशं भाग्यं प्राग्जन्मसु नाभूदिति भावः। यद्वा, अस्मिन्, चरमश्लोके। विधिना, चरमश्लोकस्थशरणागति विधिनेत्यर्थः। प्रपद्य, उपायत्वेनाश्रित्य - शमितदुरिताः, विनष्टाश्लिष्टपापास्सन्तः। -

(सा.सं) अनन्तदयाम्बुधेः, मातापितेत्यादिना कार्यमुखेनोक्तदययैव पाण्डुतनययुद्धप्रोत्साहव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तविहित सकिञ्चनाकिञ्चन साधन स्वरूपाधिकान् यथावदुपदिशतः - नन्वर्जुनमात्रोद्देशेन प्रवृत्तस्यास्य कथं सर्वविषयत्वं येनास्य सर्वोपजीव्यतमतास्यादित्यत्राह। त्रुटितेति। त्रुटितः, छिन्नः - जनतायाः, जनसमूहस्य - शोको येन स तथोक्तः - श्लोकः, चरमश्लोकः - स्वयं, तदर्थ विषयप्रश्नमन्तरेणैव। समजायत, उदभूत्। ''यच्छ्रेयस्स्यात्'' इत्यपि प्रश्नः अनिर्धारितविशेष एवेति स्वयमित्युक्तिः - अर्जुनव्याजेन सर्वोद्देशेनैव अयं प्रवृत्त इत त्रुटितजनताशोक इत्युक्तिः। तं, चरमश्लोकोपदेष्टारम् - परमकारुणिकं सनातनं धर्मम्। विधिना, विधिरूपेण चरमश्लोकेन प्रेरितास्सन्तः। केनापि सुकृत विशेषात्मकभगवत्कटाक्षेण लक्ष्मीतन्त्राहिर्बुध्न्याद्युपदिष्टविधया। प्रपद्य, शरणं यथा भवति तथा भरं समर्प्य निर्भरास्सन्तः शमितदुरिताः, नष्टाश्लिष्टपूर्वोत्तराघाः। -

मू - ......शङ्कातङ्कत्यजस्सुखमास्महे ।। ६८ ।।

(सा.दी) शोकरूपातङ्कத்தைவிட்டு நாமிந்த दिव्यदेशத்திலே सुखेनवर्तिயாநின்றோமென்கை ।।68।।

अनन्तरं நமக்காகவன்றோ उपायान्तरदौष्कर्यदर्शनजनितशोकनिवृत्त्यर्थं चरमश्लोकத்தில் प्रपत्तिविधानமென்று

(सा.स्वा) शमितदुरिताश्शङ्कातङ्कत्यजस्सुखमास्महे, अत्र विधिनेत्यनेनाकिञ्चन्यपुरस्क्रियोक्त्या प्रथमपादः, तं प्रपद्येत्यनेन द्वितीयपादः, शमितदुरिता इत्यनेन तृतीयपादः शङ्कातङ्कत्यज इत्यनेन तुरीयपादश्च विवृतः ।। ६८ ।।

இப்படி शङ्कातङ्कत्यजस्सुखमास्महे என்று कृतकृत्यत्वानुसन्धानं சொன்னது கூடுமோ? இந்த श्लोकம் अङ्गप्रपत्तिपरமன்றோ? साक्षादुपायपरமன்றே? என்னவருளிச்செய்கிறார்.

(सा.प्र) एवं च "देवता या गुरोश्चैव मन्त्रस्यापि प्रकीर्तनात्। ऐहिकामुष्मिकीसिद्धिर्द्विजस्यास्ति न शंशयः ।।" इत्युक्तमन्त्रतद्देवतागुरुकीर्तनरूपवस्तुनिर्देशात्मकं मङ्गलं चार्थात्कृतमिति ज्ञेयम् - बहुवचने स्वप्रबन्धपरिशीलनवन्तस्स्वकीया अप्येवम्भूता भवन्तीति विवक्षितम् ।। ६९ ।।

ननु मुमुक्षायां सत्यां मोक्षसाधनभक्तेस्तत्साधनकर्मयोगादेः तद्धेतुभूतानामनुसङ्कीर्तनादेर्वा अनुष्ठानसन्भवाच्छोक एव कस्यापि न सम्भवतीति चरमश्लोकस्त्रुटिजनताशोकत्वं न सम्भवतीत्यत्र शोकं बहुधोपपादयति ।

(सा.वि) शङ्का, फलविषयसन्देहः - आतङ्कः, पापेभ्योऽधीयन्तौत्यजन्तीति त्यजः - त्यजतेःक्विप् - तादृशास्सन्तः । सुखमास्महे सुखं तिष्ठामः - भ्रमविप्रलंभादिदोषरहितवाक्य प्रामाण्यनिश्चयान्निश्शङ्कत्वं सर्वशक्तिमत्त्वादि ज्ञानान्निश्संशयत्वं चेति द्रष्टव्यम् - "निस्संशयस्सुखमास्वेति" स्फोरितम् - यो वेदान्त प्रतिपाद्यः पुरुषस्स एव कृष्णरूपेणावतीर्य अर्जुनं व्याजीकृत्य सर्वलोकहितार्थं शरणागतिरूप सुलभोपायमुपदिश्य गत्यभावखिन्नानां शोकापनोदनं प्रतिजज्ञे । तदुक्त प्रकारेण वयं कृतकृत्याः कृतार्थाश्च स्म इति भावः ।। ६८ ।।

दुष्करोपायालाभेन दुःख्यतां स्वयमेवापारकारुण्येनाकिञ्चनाधिकारानुगुणं मार्गं दर्शितवानित्यादरेण श्लोकान्तरेण तदुपकारमनुसन्धत्ते । -

(सा.सं) शङ्कातङ्कत्यजः "द्यौः पतेत्। अनृतं नोक्तपूर्वं मे" इत्याद्यमोघप्रतिज्ञावता समर्थकारुणिकेन "अहं त्वा" इति फलप्रदानसङ्कल्पकरणात् फलसिद्धौ निस्संशया इति शङ्कात्यजः - तत एवागामि नरकाद्यनुभवरहिता इत्यान्तङ्क त्यजः। इह, युगस्वभावाहारदोषहैतुकसंसर्गादि कार्य प्रत्यनीकात्यासन्न भोग्यतम भगवत्सेवानुगुणे श्रीनिवासक्षेत्रे। सुखमास्महे,विषमधुकल्पवैषयिक रसवैमुख्यहेतुद्वयार्थानु सन्धानेन सन्तोषैक फलकवेदान्तद्वयव्याख्यया च सहाज्ञानुज्ञादिपरमभोग्यतया कुर्वन् फले निस्ससंशयत्वनैर्भर्याभ्यां हर्षप्रकर्षेणवर्तमित्यर्थः ।। ६७ ।।

अथ दहराद्यनेक विद्यानां मोक्षोपायतया प्रसिद्धानां सत्त्वान्माशुच इत्यपनोद्यतया प्रतिपन्ननियोज्य-विशेषणशोकस्यासम्भत्वमाङ्क्यतं बहुधोपपादयन् दहरादिविद्यानां विधातृविधेययोश्च स्वभावकथन पूर्वकम् विधिरूपं व्याख्येयमवतारयति ।

**मू - दुर्विज्ञानैर्नियमगहनैर्दूरविश्रान्तिदेशैः,**
**बालानर्हैर्बहुभिरयनैश्शोचतां नस्सुपन्था: ।**

(सा.दी) சொல்லிக்கொண்டு அந்த कृष्णனையே अनुसन्धिக்கிறார், दुर्विज्ञानैरिति - ज्ञातुमशक्यங்களாய் नियमतोऽपि दुरवगाहங்களாய், चिरकालसाध्यफलங்களாய், अत एवाशक्तர்க்கு अनर्हங்களாயிருக்கிற कर्मयोगाद्युपायान्तरங்களால் शोकिயா நின்றுள்ள நமக்கு -

(सा.स्वा) दुर्विज्ञानैरिति - दुर्विज्ञानैः, ज्ञातुमशक्यैः - नियमगहनैः, नियमविशिष्टतयाऽनुष्ठातुमशक्यैः - दूरविश्रान्तिदेशैः, दूरं विश्रान्तिदेशं फलदशा येषां तैः। अतिविलम्बितफलैः - बालानर्हैः, बालानां अकिञ्चनानामनर्हैः । बहुभिरयनैः, कर्मयोगज्ञानयोगभक्तियोगाख्यैरुपायैः शोचतां नः, उपायान्तरदौष्कर्यनिमित्तशोकाविष्टचेतसामस्माकम् । -

(सा.प्र) दुर्विज्ञानैरित्यादिना - शोचतां न इत्यन्तं तथा पाठ एवान्वयः सुपन्थाः स्वभूम्ना निष्प्रत्यूहं निजपदं नेतुकामस्सर्वनेता सारथिः कमपि सत्पाथेयं विदध इति शेषस्यान्वयः दुर्विज्ञानैः, ज्ञातुमशक्यैः - एतेनोपायान्तरज्ञानाभावश्शोकहेतुरुक्तः नियमगहनैः, नियमैः। कृच्छ्रचान्द्रायणादिनियमैः गहनैः, नियमभूयिष्ठतया दुरनुष्ठेयैरित्यर्थः - एतेनाशक्तिरूपश्शोकहेतुरुक्तः। दूरेति दूरे विश्रान्तिदेशो येषां तैः चिरकालसाध्यैरित्यर्थः - एतेन विलम्बाक्षमत्वरूपश्शोकहेतुरुक्तः। अत एव बालानर्हैः उपायान्तरानुष्ठानो-पयुक्तज्ञानाशक्त्यादिरहिता बालाः। इदं शोकनिमित्तभूतस्योपायान्तरारम्भोपयुक्तजन्मा भावस्याप्युपलक्षणम् - नन्वेकस्या विद्यायाः उक्ताकारयोगेन शोकहेतुत्वेऽपि विद्यान्तरमनुष्ठेयम्। न शोचितव्यमित्यत्र सर्वासां विद्यानामुक्ताकारयोगाविशेषाच्छोकहेतुत्वमेवेत्यभिप्रेत्याह -

(सा.वि) दुर्विज्ञानैरिति। दुःखेन ज्ञातुमशक्यैः ईषद्दुस्सुष्विति खल् प्रकरणे अतोयुजेति युच् युवोरनाकाविति युचो नादेशः - ज्ञातुमशक्यैरिति भावः। नियमैः, कृच्छ्रचान्द्रायणादि नियमैः - गहनैः, अनुष्ठातुमशक्यैः। नियमेन नियतं गहनै; महारण्यवशाद्दुष्प्रापैश्च दूरं विलम्बितं विप्रकृष्टश्च विश्रान्तिदेशः फलं प्राप्य स्थानं च येषां तानि तैः तथोक्तैः - बालानर्हैः, भक्त्याद्यनुष्ठानयोग्यशास्त्रार्थज्ञानरहितानाम् - प्रथमवयसाञ्च - अनर्हैः, अयोग्यैः। बुहुभिरयनैः, कर्मयोगादिभिरूपायैः। नानामुखैर्मार्गैश्च - शोचतां, ''उपाया नैव सिद्ध्यन्ति ह्युपाया बहुलास्तथा'' इति दुः ख्यतामनेकमार्गेषु केन मार्गेण गन्तव्यम् -

(सा.सं) दुर्विज्ञानैरिति। बोद्धुमशक्यैरित्यर्थः। नियमा इह यमनियमादिषु देशतः कालतो विवेकविमोकादि-मुखेन शमदमादिमुखेन च सम्पतन्तो विवक्षिताः। तैर्गहनैः, अनुष्ठातुमशक्यैः। दूरः, कालविप्रकृष्टः। विश्रान्तिदेशः, विरामदेशो येषां तैः। विलम्बितफलकैरिति यावत्। ततः फलितमाह। बालानर्हैरिति। भक्त्यादौ शक्त्यभावादिमतामधिकर्तुमयोग्यैः बहुभिः अवान्तरभिदानन्त्यव द्भिः - अयनैः, कर्मयोगादिरूप सद्वारकाद्वारकमोक्षमार्गैः। शोचतां, अनुवृत्तातिशयित पूर्वापरमध्यदशासम्भावितशोकानाम्। -

**मू - निष्प्रत्यूहं निजपदमसौ नेतुकामस्स्वभूम्ना,**
**सत्पाथेयं किमपि विदधे......**

(सा.दी) शोभनोपायभूतனான सर्वनेता सारथि:, மாயப்போர் தேர்பாகனான कृष्णன். தன்னுடைய परमपदத்தேரைக் கொண்டு போவனாய் विलक्षणமானதொரு सत्पाथेयத்தை स्वचरणारविन्द-शरणागतिயை என்றபடி - चरमश्लोकத்தால் विधिத்தருளினாரென்கை ।। ६९ ।।

(सा.स्वा) सुपन्था, शोभनोपाय: । सर्वनेता, सर्वस्वामी । सर्वफलप्रद इति वा - सारथि:, पार्थसारथि: । निष्प्रत्यूहं, यथा भवति तथा - स्वभूम्ना, स्वमाहात्म्येन । निजपदं नेतुकामस्सन् - किमपि, विलक्षणम् - सत्पाथेयम्, सदुपायम् - प्रपत्तिरूपमुपायम् । पाथेयत्व निरूपणेन संसाराध्वगतागत श्रान्तसर्वजनास्वाद्यत्वं पाकाद्यायासराहित्येन क्षुन्निवर्तकत्वं च व्यज्यते । विदधे विहितवान् । उपायान्तरदौष्कर्यनिमित्त शोकापनोदनार्थं विलक्षणोपायस्य विहिततयाङ्ग प्रपत्तिपरत्वे तदनुपपत्त्या स्वतन्त्रोपायविधिपरोऽयं श्लोक: என்று கருத்து. இங்கு सारथि என்று சொல்லுகையாலே இவன் सारथ्यं वहिத்ததுவும் तद्व्याजेनार्जुनனுக்கு -

(सा.प्र) सुपन्था इति भगवत: पूर्वोक्ताकारवैपरीत्यं द्योतितम् - निष्प्रत्यूहमिति क्रियाविशेषणम् - ''साध्यभक्तिस्तु साहन्त्री प्रारब्धस्यापि भूयसि'' इत्याद्युक्त: फलप्रतिबन्धाभावो यथा भवेत्तथेत्यर्थ: - स्वभूम्ना, स्वमाहात्म्यात् - सत्पाथेयमिति भरन्यास उच्यते । सच्छब्देन सर्वाधिकारत्व, सर्वानिष्टनिवर्तनक्षमत्व, सर्वेष्टसाधनत्व सुकरत्व, सत्कर्तव्यत्व,आशुकारित्व, प्रतिबन्धानर्हत्व, उपायान्तर प्रयोगासहत्वाद्याकारवैशिष्ट्यं विवक्ष्यते । - किमपीति ।

(सा.वि) पाषाणकण्टकादिबहुलव्याघ्रादि भयास्पदाति दूरमार्गे कथं बालैरस्माभि: गन्तव्यमिति शोकवताश्च - न:, अस्माकं - सुपन्था:, शोभनोपायभूतस्सन् । न पूजनादित्यनेन ''ऋक्पूरब्धू:'' इति प्राप्तसमासान्ताभाव: - स्वयमेवोपायान्तरस्थाननिविष्ट इत्यर्थ; । - सुपन्था: इत्यनेनानायासेनाविलम्बेनातारतम्येन च फलप्रापकत्वं व्यञ्चितम् । पथस्सङ्ख्याव्ययादेति नपुंसकत्वं तु न भवति । तत्र पथ इति कृत समासांन्तग्रहणात् । सर्वनेता सारथि: । स्वभूम्ना, स्वकीयाघटितघटनशक्त्या - निष्प्रत्यूहं, निर्विलम्बं नेतुकाम: । अत्र सर्वनेता सारथिरिति पदद्वयेन रक्षणोपयुक्तं परत्वं सौलभ्यं च व्यञ्चितम् - अर्थान्तरे शोभन: पन्था: कण्टकादिदोषरहितो मार्गो यस्य स तथोक्त: - अत्रापि पूर्ववत् समासान्ताभाव: - समीचीनमार्गाभिज्ञ इत्यर्थ: - सर्वनेता, तेन मार्गेण सर्वेषां प्रापक: स्वभूम्ना,बहुलान् स्कन्धदेशेआरोप्यस्वशक्त्यैव प्राप्यस्थानं नेतुकाम: किमप्यत्यन्तसुलभं तत् निस्सीमताभ्यर्हितं पथि साधुपाथेयं अर्चिरादिमार्गयोग्यं शरणागतिरूपं प्रसादनम् । -

(सा.सं) पूर्वापरमध्यदशा सम्भावितशोकानाम् । न:, प्राप्यरुचिप्रापकाध्यवसायाकिञ्चन्यादिना सर्वप्रकार-शोकनिवृत्त्यनुगुण भगवदनुग्रहविषयतार्हाणामस्माकम् । सुपन्था:, सर्वयोग्यत्व, अनायासत्व, अप्रमादत्व, अनूपमत्व, सर्वानिष्टनिवर्तकत्व, सर्वेष्टसाधनत्वादिभिर्बालपण्डितसुगमोऽनादिसिद्धोमहामार्ग: - ''सुदुष्करेण'' इत्युक्तविधया उपायान्तरस्थाननिविष्टतासु इत्युपसर्गेण सूचिता - परमकारुणिकत्वात्सर्व-शक्तित्वात् स्वतन्त्रत्वाच्च सङ्कल्पघातकं न सम्भवतीति निष्प्रत्यूहमित्युक्तम् । निर्विघ्नं यथा भवति तथेति क्रियाविशेषणम् - नेतुकाम इत्यत्रास्मानित्यध्याहार्यम् । स्वभूम्ना, स्वनिरुपाधिक सर्वज्ञ सर्वशक्तित्वादि-रूपमहिम्ना - नेतुकाम:, ''एष ह्येवानन्दयाति'' इति श्रुते: । -

मू - ... --- ... --- ... --- सारथिस्सर्वनेता ।। ६९ ।।

(सा.दी) अनन्तरமொரு பாட்டால் இச்चरमश्लोकावतरणक्रमத்தை सङ्ग्रहेण सूचिப்பியா நின்று கொண்டு நம்மைக் குறித்து चरमश्लोकமருளிச்செய்தவன் தானே நமக்கு அந்த उपायத்தையுமுண்டாக்கி सर्वपापங்களையும் -

(सा.स्वा) तत्त्वहितपुरुषार्थங்களை उपदेशिத்து लोकोज्जीवनार्थமாகையால் सारथ्यं निकर्षावह மன்றென்றும், இந்த उपदेशं अस्मदादिसाधारणமென்றும் सूचितम् ।। ६९ ।।

இப்படி सत्पाथेयं किमपि विदधे என்று சொன்னது கூடுமோ? இந்த उपायं संसारनाशक மாகையாலே स्वस्यलीलारसनाशकமாகையால் स्वपुरुषार्थहानि வரும்படி उपदेशिக்கக் கூடுமோ? श्रया(द्वया)दिकरणमन्त्रங்களிலே श्रीविशिष्टனுக்கே उपायत्वप्राप्यत्वங்கள் சொல்லுகையாலே तद्विरुद्धமாக मामेकं शरणं व्रजेति स्वस्यैकस्यैवोपायत्वं சொல்லுகிறதுதான் கூடுமோ? इत्यादि शङ्कैயைப் परिहरि -

(सा.प्र) ''सत्कर्मनिरताश्शुद्धास्सांख्ययोगविदस्तथा। नार्हन्ति शरणस्थस्य कलां कोटितमीमपि।।'' इत्याद्युक्तपरिच्छिन्नवैभवत्वमुच्यते। एवं च भरन्यासस्य ''तेन तेनाप्यते तत्तन्न्यासेनैव महामुने'' इत्याद्युक्तमाहात्म्ययोगित्वात्सर्वशोकनिवर्तकत्वमुपपद्यत इति भावः ।। ७० ।।

ननु शरणवरणमात्राद्भगवतस्सर्वपापनिवर्तकत्वमसंभावितम् - निरपेक्षरक्षकत्व प्रार्थनात्मक तया तस्यातिलघुत्वेनातिगुरुफलसाधनत्वायोगादित्यत्रापेक्षामन्तरेणापि द्वारकावासिभ्यस्स्वानुभवदा-तुरपेक्षामात्रेणातिनीचकृत्यस्य सारथ्यस्य कर्तुश्श्रीपतेरपेक्षायां सर्वपाप निवर्तकत्वमप्युपपद्यत एवेति दर्शयन् वक्ष्यमाण चरमश्लोकार्थं स्त्रीशूद्रादिबुद्धिसमाधानाय -

(सा.वि) अन्यत्र रुचिरोपदंशादियुक्तं दध्योदनादिकं च - विदधे। विहितवान्। मार्गाः, आरण्यकमृग-चोरव्याघ्रादिमिश्रतया दुर्गमा बहुविधाश्च प्राप्यस्थानं रूपं स्वयञ्चासमर्था इति शोचतां बालानां कश्चिदाप्तबन्धुरागत्य स्वयमेव नेतुकामस्सन् यथा सत्पाथेयं करोति तथा सुलभोपायं विहितवानिति भावः। अत्र प्रपदने पाथेयत्वाध्यवसानेन स्वस्य श्रमाभावः एकदिनमात्र प्राप्य स्वाभिमत्तदेश प्राप्तिसाधनत्वेन पाथेयस्य विलम्बाभावश्च व्यज्यते ।। ६९ ।।

(सा.सं) किमपि, कर्मयोगादि विलक्षणम् - सर्वतपोभ्योऽप्यतिशयित तपस्त्वेन प्रमाणसिद्धम् - सर्वनेता अनालोचितविशेषाशेषलोकशरण्यतया सर्वफलप्रदः - सर्वानपि स्वपदं प्रापयितुकामः। यत्न विशेषनिरपेक्षत्वसर्वतोमुखसुखावहत्वानिष्टाननुबन्धित्वादिमुरवैर्धर्मैः प्रपत्तेस्सत्पाथेयसाम्यमभिप्रेत्य सत्पाथेयमित्युक्तम् - विदधे, विहितवान्।। ६९ ।।

मू - ஒண்டொடியாள் திருமகளும் தானுமாகி
ஒரு நினைவாலீன்றவுயிரெல்லாமுய்ய
வண்டுவரைநகர் வாழ, -

(सा.दी) கழிக்க விரகு பார்க்கிறானென்கிறார். ஒண்டொடியாள் इत्यादियால் பிராட்டியும் தானுமாகக் கூடி ऐकरस्यத்தால் सृष्टित्त चेतनवर्गமெல்லாம் उज्जीविக்கும்படியும், द्वारकापुरजनங்கள் विशेषतो வாழும்படியாகவும்.

(सा.स्वा) परिहरिத்துக்கொண்டு चश्मश्लोकावतारक्रमத்தைப் பாட்டாலே सङ्ग्रहिக்கிறார். ஒண்டொடியாள் इति। தண்டுளவமலர் மார்பன், தண், शीतलமான. துளவமலர், திருத்துழாய் पुष्पத்தை, மார்பன், மாரிலே, वक्षस्ஸிலேயுடையவனான शरण्यன் - कर्ता। ஒண்டொடியாள், ஒண், அழகியதாயிருக்கிற, தொடி, हस्ताभरणத்தையுடைய, திருமகளும், பெரியபிராட்டியாரும், தானுமாகி, न केवलं स्वयमेवकिन्तु श्रियासहितो भूत्वेत्यर्थ: - ஒருநினைவாலீன்ற, "बहु स्याम्" என்று एकरूपसङ्कल्पத்தாலே सृष्टित्त - உயிரெல்லாமுய்ய, चेतनரெல்லாரும் उज्जीविக்கும்படி - இதுக்குத் தானே சொன்ன என்கிறத்தோடே अन्वयं வண்டுவரைநகர் வாழ, வண், அழகியதாயிருக்கிற - துவரைநகர், - द्वारकापुरम् - வாழ, வாழும்படி, द्वारकाजनपदं வாழும்படி । -

(सा.प्र) द्रमिडगाथया च सङ्गृह्याह । ஒண்டொடியாள் इत्यादिना - यथापाठ एवान्वय: - हस्ताभरणम् - इदं सर्वस्याभरणवर्गस्योपलक्षणम् । ஒண்டொடியாள், दिव्याभरणभूषितनिरतिशयोज्वलानन्त-दिव्याभरण भूषितेत्यर्थ:। திருமகள், लक्ष्मी: । தானும், स्वयम् - திருமகளுந்தானுமாகி, लक्ष्म्यास्स्वेन चोभाभ्यामित्यर्थ: । நினைவு, ज्ञानम् - ஒருநினைவால் एकरूपेण सङ्कल्पेन "अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम्। यस्या वीक्ष्यमुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्।।" इत्युक्तैकरूप सङ्कल्पेनेत्यर्थ: - உயிரெல்லாம், चेतनास्सर्वेऽपि । உய்ய, यथोज्जीवेयु: तथा - வண்டுவரை इति - வண், औदार्यम् - துவரை, द्वारकानगरीसर्वविधरक्षाप्रवासयोग्य द्वारकानगर्याम् - வாழ்கை, सर्वोत्कर्षेण वर्तमानत्वम् । -

(सा.वि) पुनश्च स्त्रीशूद्रादीनामुक्तोपकारानुसन्धानाय द्रमिडगाथया सङ्गृह्णाति । ஒண்டொடியாள் इति - ஒண்டொடியாள், श्रेष्ठाभरणया । திருமகள், लक्ष्म्या - தானுமாகி, स्वेन च - ஒரு நினைவாலீன்ற, एकसङ्कल्पेन सृष्टा: - உயிரெல்லாம், सर्वे चेतना: - உய்ய, यथोज्जीवेयुस्तथा । வண், श्रेष्ठायाम् । துவரைநகர், द्वारकानगर्याम् । सन्धिवशात्तकारस्य डकार: । வாழ், सर्वोत्कर्षेण वर्तमानस्य । -

(सा.सं) इत्थं श्लोकद्वयेन सङ्क्षिप्तं चरमश्लोकार्थं गाथया च सङ्गृह्णाति। ஒண்டொடியாள் इति। "आनीत वात गँ स्वधया तदेकम्। माया वा एषा नारसिंही सर्वमिदं सृजति, सर्वमिदं रक्षति। सर्वमिदं संहरति, विराडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी। युवान्तु विश्वस्य विभू जगत: कारणं परम् - स्यादैकरस्यात्तथा - यस्या वीक्ष्यमुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्" इत्यादिकमभिप्रेत्य - ஒருநினைவாலீன்ற इत्युक्ति: - ஒண்டொடியாள், अतिश्लाघ्यवलयादिभूषणालङ्कृता । திருமகளும் श्री: - தானுமாகி, स्वयं च । ஒரு நினைவால், एकाकारसङ्कल्पपूर्वकम् - ஈன்ற, सृष्टानाम् । உயிரெல்லாம், सर्वजीवानाम् - உய்ய, उज्जीवनाय । வண்டுவரை நகர்வாழ், श्लाघ्यद्वारकानगरीसमृद्ध्यर्थम् । -

मू - ----- வசுதேவர்க்காய்
மன்னவர்க்குத்தேர்ப் பாகனாகி நின்ற
தண்டுளவமலர் மார்பன் தானே சொன்ன
தனித்தருமந்தானெமக்காய்த் தன்னை யென்றும்
கண்டு களித்தடிசூட ----- -

(सा.दी) वसुदेवர்க்கு குமாரராய் अवतरித்து अनन्तरं पाण्डवர்க்குத் தேர்ப்பாகனாகி நின்ற सर्वेश्वरன் தான் अर्जुनனை व्याजीकृत्यलोकத்தார்க்காக चरमश्लोकத்திலருளிச்செய்த सिद्धोपायभूतமான अद्वितीयधर्मதானேயாய் தன்னைப் परमपदத்தில் கிட்டி सर्वदानुभविத்து आनन्दத்தால் பண்ணும் सर्वविधकैङ्कर्यங்களுக்கு विरोधिயாய் நின்ற -

(सा.स्वा) वसुदेवர்க்காய், वसुदेवनन्दनனாய் अवतरித்து, अनन्तरं மன்னவர்க்கு, राजाக்களுக்கு, पाण्डवர் களுக்கு, தேர்ப்பாகனாகி நின்ற, सौलभ्यसौशील्यादि स्वभावத்தாலே पाण्डवसारथिயாய் நின்ற தண்டுளவமலர் மார்பன், सकलजीवர்களும் उज्जीविக்கும்படி - தானே சொன்ன, स्वयमेव சொன்ன - தான், नतुऋष्यादिमुखेन என்று கருத்து - தனி, अद्वितीयமான। தருமம், ''कृष्णंधर्मं सनातनम्'' என்கிறபடியே सिद्धोपायभूतனான தான். எமக்காய், अस्माकं स्वीकृतभरனாய்க் கொண்டு - उपायभूतனாய், தன்னையென்றும், सर्वदा यावदात्मभाविயாய் - கண்டு, देशविशेषத்திலே கிட்டி साक्षात्करिத்து. களித்து, प्रेमपरवशனாய் - அடிசூட, शिरसा पादवहनोपलक्षितसर्वविधकैङ्कर्यத்துக்கு -

(सा.प्र) வஸுதேவர், वसुदेवः। வாழ்வஸுதேவர்க்காய், सर्वोत्कर्षेण वर्तमानस्य वसुदेवस्य तनयो भूत्वेत्यर्थः। மன்னவர்க்கு, राज्ञां, தேர்ப்பாகனாகி, सारथिर्भूत्वा · நின்ற, स्थितेन। पूजायां बहुवचनम्। भारतयुद्धे अर्जुनसारथितया स्थितेनेत्यर्थः। தண், शीतलं - துளவம், (துளஸி) तुलसी, மலர், पुष्पम्। மார்பன், वक्षः - தண்டுளவமலர் மார்பன், शीतलतुलसीमिश्रितपुष्पमालालङ्कृतोरस्केनेत्यर्थः - यद्वा, துளவமலர், तुलसीपुष्पाणीवेत्यर्थः - தானே, स्वयमेव - சொன்ன, उक्तः। एवं भूतेन कृष्णेन स्वयमेवोक्तः। தனி, अद्वितीयः - தருமம், धर्मः। தான், स्वयमेव - எமக்கு, अस्माकम् - ஆய், भूत्वा - अकिञ्चनानामस्माकमुपायान्तरनिरपेक्षतयाऽद्वितीयसाधनं भूत्वेत्यर्थः। தன்னை, आत्मानम्। என்றும், सदा। கண்டு, दृष्ट्वा। களித்து, सन्तोषविशिष्टो भूत्वेत्यर्थः - அடி, चरणौ - சூட, शिरसाधारयितुम्। -

(सा.वि) வஸுதேவர்க்கு, वसुदेवस्य। ஆய், तनयो भूत्वा। மன்னவர்க்கு, राज्ञां धर्मपुत्रादीनां - தேர்ப்பாகனாகி நின்ற, सारथीभूयस्थितेन தண்டுளவமலர்மார்பன் தானே சொன்ன, शीतलतुलसीपुष्पालङ्कृतोरस्केन भगवता स्वयमेवोक्तः। தனி, अद्वितीयः - தருமம், धर्मः। भक्तियोगरूपம்। தான், स्वयमेव - எனக்கு, अस्माकं - ஆய், भूत्वा - भक्तिस्थाने स्वयमेवस्थित्वेत्यर्थः। தன்னை, आत्मानं भगवन्तं - என்றும், सदा - கண்டு, दृष्ट्वा। களித்து, अतिसन्तुष्टो भूत्वा। அடி, चरणौ - சூட, शिरसाधारयितुम्।

(सा.सं) வஸுதேவர்க்காய், वसुदेवात्मजो भूत्वा - மன்னவர்க்கு, पाण्डवानां - தேர்ப்பாகனாகி நின்ற - सारथ्यादिरूपेण विधेयतयावस्थितः - தண்டுளவமலர்மார்பன், सुखशीतलतुलसीकुसुममाला-लङ्कृतवक्षस्स्थलः, தானே சொன்ன, स्वयमेवोक्तः - தனித்தருமம், निरपेक्षधर्मभूतः। தான், स्वयम्। எமக்காய், स्वीकृतास्मदीयभरस्सन्। ''सदा पश्यन्ति'' इत्युक्तविधया - தன்னையென்றும் கண்டு, नित्यं भगवदनुभवजनितनिरतिशयप्रीत्या। களித்து, आनन्दनिर्भरः - அடிசூட, कदा पुनरित्युक्तविधया चरणारविन्द परिचर्यायाः। -

मू - ------- விலக்காய் நின்ற,

கண்புதையல்விளையாட்டைக் கழிக்கின்றானே -

''एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः ।

नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ।।'' என்கிறபடியே

श्रियः पतिயான सर्वेश्वरன் साधुपरित्राणदुष्कृद्विनाशधर्मसंस्थापनங்களுக்காக -

---

(सा.दी) प्रकृति सं सञ्जनरूपस्वकीयक्रीडैயைக் கழிக்கப் பார்க்கிறானென்கை.

இனி இந்தப்பாட்டின் अर्थத்தை வெளியிடா நின்றுகொண்டு चरमश्लोकमवतरिத்த क्रमத்தை विस्तरेणவருளிச்செய்கிறார். एष नारायणश्श्रीमान् इत्यादि चूर्णिकैயால் -

---

(सा.स्वा) விலக்காய்நின்ற, विरोधिயாய் நின்ற - கண்புதையல் விளையாட்டை, नयनपिधानमयीं क्रीडाम् । तत्त्वहितपुरुषार्थविवेकचक्षुः पिधानात्मक संसारबन्धलीलैயென்றபடி. கழிக்கின்றானே, निवर्तिப்பிக்க விரகு செய்கின்றானே என்கை. இங்கு स्वस्य लीला रसापेक्षयापि स्वपुत्रदासादिभूत समस्तचेतनोज्ञीवनं தனக்கு भोगरसवर्धकமாகையாலே लीलारसोच्छेदनं पुरुषार्थहानिकरமன்றென்றபடி - ஒண்டொடியாள் திருமகளும் தானுமாகி என்றது सृष्ट्युपलक्षितस्थितिसंहारमोक्षप्रदानादिகளிலும் श्रियः कारणत्वद्योतकமாகையாலே मामेकமென்கிறவிடத்திலும் श्रीवैशिष्ट्यத்தில் तात्पर्यமாகையால் द्वयाद्युक्तविशिष्टप्रपत्तव्यत्वविरोधமுமில்லையென்று கருத்து. -

இனி पूर्वोक्तशङ्कैகளைப் प्रमाणोपपत्तिகளாலே विस्तरेण परिहरिக்கிறார். एष इत्यादिயால் । साध्विति । -

---

(सा.प्र) नित्यं भगवन्तमनुभूय तथाविधानुभवजनितनिरतिशयप्रीत्या भगवच्छरणारविन्दपरिचर्यां कर्तुमित्यर्थः - விலக்காய், प्रतिबन्धकतया । நின்று, स्थितम् - கண், चक्षुः । புதையல், पिधानम् । விளையாட்டு, लीला । चक्षुः पिधानपूर्वकलीलामित्यर्थः । ''क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु आसुरीं योनिमापन्नाः मूढाः जन्मनि जन्मनि ।। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।'' इत्युक्तरीत्याऽज्ञत्वा-पादनपूर्वकं संसारक्षेपरूपां लीलामिति भावः - கழிக்கின்றானே, निवर्तयतीत्यर्थः ।।

एवं सङ्ग्रहेण दर्शितं चरमश्लोकार्थं विस्तरेण वक्तुं भगवदवतारस्यैतच्छ्लोकार्थोपदेश एव परमप्रयोजनमिति वदन् श्लोकमवतारयति । एष इति । साधुपरित्राणेत्यादिना । -

---

(सा.वि) விலக்காய் நின்று, प्रतिबन्धकतया स्थिताम् । கண்புதையல் விளையாட்டை, चक्षुः पिधानक्रीडाम् ।। ''क्षिपाम्यजस्रम्'' इत्युक्तासुरत्वापादनपूर्वकसंसारक्षेप लीलाम् । கழிக்கின்றானே, निवर्तयति । -

अयं चरमश्लोकः क्थमुपदिष्ट इत्यत्र पीठिकामारचयति - एष नारायण इति - साधुपरित्राणस्य । -

---

(सा.सं) விலக்காய் நின்ற, विरोधि भूतम् । கண்புதையல் விளையாட்டை, नयनपिधानमयीं क्रीडाम् । अविद्यादि चक्रपरिवर्तन क्रीडामिति भावः। கழிக்கின்றானே, निवर्तयतीत्यर्थः। इत्थं सङ्गृहीतमेव गीतार्थसङ्ग्रहमुखेन चरमश्लोकावतरण क्रममुपोद्घाततया उपपादयन् वृणोति । एष इत्यादिना । धर्मसंस्थापनम्, उपदेशमुखेन स्वानुष्ठानाच्च प्रवृत्तिनिवृत्तिरूपधर्मप्रवर्तनम्,

**मू - வண்டுவராபதிமன்னனாய் வந்து अवतरित्तருளி सर्वसुलभனாய். ''द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनम्'' என்கிறபடியே शरणागतரான पाण्डवர்களுக்கு இன்னார் दूतனென நின்று अर्जुनனை रथिயாக்கி தான் सारथिயாய் அவனுக்கு विधेयனாய் நின்றவளவிலே இவ் अर्जुनன் தன்னை निमित्तमात्रமாகக் கொண்டு सर्वेश्वरன் தன் प्रतिपक्षங்களை निरसिக்கநின்ற நிலையைக் கண்டு बन्धुविनाशं सिद्धமென்று निश्चयिத்து अस्थानस्नेहத்தாலே பிறந்த शोकத்தாலும், अस्थानकृपैயாலும், आचार्यादिகள் युद्धोन्मुखரேயாகிலும், -**

(सा.दी) வண்டுவராபதிமன்னனாய், வண்மையுடைய द्वारकैக்கு राजाவாயென்கை - பெரு நிலத்தாரின்னார் दूतன் आदिமன்னரான पाण्डवர் दूतனென்னும்படி நின்று. தன் प्रतिपक्षங்களை என்றென்று अर्जुनனைக் காட்டுகிறது - अस्थानस्नेहமாவது? अनवसरस्नेहम् - अयोग्यकालத்தில் कृपैயாலும். युद्धकालத்தில் स्नेहமும் कृपैயும் अनवसरदुष्टமிறே - युद्धोन्मुखரானாலும். आचार्यादिகளுடைய वधं पापहेतुவென்கிற भयத்தாலும் -

(सा.स्वा) ''परित्राणाय साधूनां विनाशाय च दुष्कृताम्'' என்கிற वचनमभिप्रेतम् - வண்டுவராபதி மன்னனாய் इति। मधुरै विरोधिपुरமாகையாலே तत्रागमनमात्रम्। अधिराजत्वं द्वारकैயிலே என்று கருத்து. सर्वसुलभனாய் इति - अवतारं सौलभ्यकार्यமென்றபடி - अर्जुनेति - ''निमित्तमात्रं भव सव्यसाचिन्'' इति वचनमभिप्रेतम्।

(सा.प्र) ''परित्राणाय साधूनां विनाशायच दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगेयुगे।। इत्येतत्स्मारितम्। வண்டுவராபதிமன்னனாய், श्लाघ्यद्वारकानाथो भूत्वेत्यर्थः - இன்னார் दूतனென நின்று, पाण्डवदूत इतीदानीमपि यथा सर्वे ब्रूयुस्तथा स्थित्वेत्यर्थः। अस्थानस्नेहத்தாலே इत्यादि - ''अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलम्। पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्''।। इत्येतत्स्मारितम्। अस्थानशब्दोऽनौचित्यपरः - धर्मे अधर्मत्वधीः धर्माधर्मत्वधीः। स्नेहकारुण्य सहितेति मध्यमपदलोपिसमासः - तया आकुलमित्यर्थः - क्षत्रियस्य युद्धोन्मुखे प्रति पक्षे स्नेहकारुण्ययोरनौचित्यम्। गुरुशिष्ययोः परशुरामभीष्मयोर्युद्धप्रापकोपाख्यानादौ सिद्धमिति भावः। -

(सा.वि) प्रथमोपादानेन अवतारस्य चरमश्लोकोपदेश एव मुख्यप्रयोजनमिति भावः। வண்டுவராபதி மன்னனாய் வந்து, श्रेष्ठद्वारकापतिः सन्नागत्य। இன்னார், एतेषाम् - दूतனென்று, दूत इति स्थित्वा। நின்றவளவிலே, विद्यमानदशायाम्। अर्जुनன் தன்னை अर्जुनंनिमित्तமாகக் கொண்டு निमित्तमात्रं कृत्वा - सर्वेश्वरன் प्रतिपक्षங்களை निरसिக்க நின்றநிலையை, सर्वेश्वरस्य प्रतिपक्ष निरसनस्थितिम्। अर्जुनன் கண்டு விண்ணப்பம் செய்ய, अर्जुनेदृष्ट्वा विज्ञापयति सति। अस्थानस्नेहेति। क्षत्रियस्य युद्धकाले स्नेहकारुण्ययोरनुचितत्वादिति भावः। -

(सा.सं) प्रवर्तनं, सर्वेषां स्वसमाश्रयणेन पुरुषार्थलाभाय स्वस्य शास्त्रैकसमधिगम्यमाश्रितपारतन्त्र्यं, सर्वलोकविदितं चकारेत्याह-द्रौपद्या इत्यादिना - विधेयனாய் நின்றவளவிலே इत्यनेन प्रथमाध्याये ''एत्तमुक्त्वा'' इत्यन्तश्लोकानामर्थस्सङ्क्षिप्तः। द्वितीयाध्यायारम्भोक्तमर्थं प्रथमाध्यायशेषार्थेन सह सङ्गृह्णाति। अस्थानेति। द्वितीयाध्यायशेषार्थं सङ्गृह्णाति। -

**मू** - அவர்கள் **वध**த்தாலே **पापं** வருகிறதென்கிற **भय**த்தாலும், கலங்கி எது **हित**மென்று தெளிய வேணுமென்று பார்த்து, ''**यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ।।**'' என்று விண்ணப்பம் செய்ய அவனுடைய **शोक**த்தை **निवर्ति**ப்பிக்கைக்காக **देहादि व्यतिरिक्त**மாய் **परशेषतैकरस**மான **नित्यात्मस्वरूप**த்தையும் இஸ் **स्वरूपं** தெளிந்தவனுக்கு **परमपुरुषार्थलाभ**த்துக்கு **परम्परयाकारण**ங்களான **कर्मयोग ज्ञानयोग**ங்களையும், **साक्षादुपाय**மாக **चोदित**மான **भक्तियोग**த்தையும் **सपरिकर**மாக **उपदेशि**க்க, இப் **परमपुरुषार्थ**த்தைக்கடுகப் பெற வேண்டுமென்கிற **त्वरै**யுண்டேயாகிலும், **सपरिकर**மான இவ் **उपाय**த்தினுடைய **दुष्करतै**யினாலும், இவ் **उपायानुष्ठान**த்துக்கு **अपेक्षितज्ञानशक्ति**யுண்டேயாகிலும் **अनेकावधान**த்தோடே கூட **चिरकालसाध्य**மான **उपायस्वभाव**த்தாலே **अभिमतं** கடுகத் தலைகாட்டாதபடியிருக்கையாலும், **निरतिशयशोकाविष्ट**னான **अर्जुन**னை **व्याज**மாகக் கொண்டு -

---

(सा.दी) वस्तुतः आचार्यராகிலும் युद्धोन्मुखரானவர்களுடைய वधத்தால் पापமில்லையென்று கருத்து. परशेषत्वमेव एकोरसः स्वरूपं यस्य सः - रस शब्देन स्वरूपं लक्ष्यते - अर्जुनனை व्याजமாகக் கொண்டு, सर्वलोकार्थமாக வென்று கருத்து. -

---

(सा.स्वा) இதினாலே युद्धभूमिயிலே शिष्याचार्यकृत्यं प्रसक्तமாயிற்றென்று கருத்து. यच्छ्रेय इति । இதினாலே முறைதப்பாமல் गुरुवरणं பண்ணி கேழ்க்கையாலே रहस्यत्वविरोधமில்லையென்று கருத்து. शोकத்தை इति - இதினாலே तत्त्वहितपुरुषार्थविवेकजनित शोकापनोदनार्थं कर्मयोगाद्युपदेशं सङ्गतமென்று व्यञ्जितम् । अर्जुनனை इति । उपदेश्यமான उपायं सर्वार्थமாக शास्त्रान्तर सिद्धமாகையாலே अर्जुनं व्याजीकृत्य सर्वार्थमुपदेश மென்றபடி । ''चतुर्विधा -

---

(सा.प्र) எது हितमित्यादि,ममेदं हितमिति जानीयामिति निश्चित्येर्थः यच्छ्रेय इत्यादि । यन्मह्यं श्रेय इति । निश्चितं तन्मे ब्रूहि - कुतोहेतोस्तववक्तव्यमित्यत्राह । शिष्यस्तेहमिति - शिष्यत्वात्प्रपन्नत्वाच्च शासनीयोऽहमित्यर्थः । देहादीति । '' न हि प्रपश्यामि ममापनुद्याद्यच्छोकम्'' इत्यारभ्य,'' शाधिमां त्वां प्रपन्नम्'' इत्यन्तेनोक्तशोकाविष्टस्यार्जुनस्य शोक -

---

(सा.वि) எது हितम्, किं हितम् - பெறவேணும், प्राप्तव्यम् । கடுகத் தலைக்கட்டாதபடி. शीघ्रसिद्ध्यभाव -

---

(सा.सं) இவனுடைய इति - परमकारुणिकेन भगवता यच्छ्रेयस्स्यादिति प्रश्नमेवावलम्ब्य देहादिभिन्नतामात्मन उपदिश्य परमनिःश्रेयसपर्यन्तमुपदिशेत्याशयः । कर्मयोगज्ञानयोगங்களையும் इत्यन्तेन प्रथमषट्कार्थ उक्तः । द्वितीयषट्कार्थमाह - साक्षादिति - तृतीयषट्कार्थाभिप्रायेणाह - सपरिकरமாக इति - अस्त्वेवं गीताशास्त्रार्थोपदेशः - तथापिचरमश्लोकेन त्वदभिमतार्थः ? उपक्रमावगतबन्धुवधनिमित्त शोकविलक्षण शोकान्तराप्रतीतेरित्यत्राह - இப் परमपुरुषार्थத்தை इत्यादिना .- त्वरायाज्ञानशक्त्योश्च शोकविरोधित्वाभिप्रायेण உண்டேயாகிலும் इति वाक्यद्वयम् - दुष्करतैயினாலும் தலைக்கட்டாதபடியிருக்கையாலும் इत्युक्त्या शोकहेतुरुपपादितः । व्याजமாக इत्यनेन चरमश्लोकस्य सर्वोज्जीवनोद्देशेन प्रवृत्ततोक्ता ।।

**मू - परमकारुणिकனான गीतोपनिषदाचार्यன் -**
**"भक्त्या परमया वापि प्रपत्त्या वा महामते।**
**प्राप्योऽहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः ।।" என்று தான் विकल्पित्து विधित्त उपायங்களில் "तावदार्तिस्तथावाञ्छा" என்கிறபடியே தன்திருவடிகளைப் பெறுகைக்கும், மற்றும் अभिमतமானவை யெல்லாவற்றுக்கும் பொதுவான साधनமாய், आनुकूल्य सङ्कल्पादि व्यतिरिक्तपरिकरनिरपेक्षமாய், लघुतरமாய், क्षणमात्रसाध्यமான -**

---

(सा.दी) भक्त्या परमयावेति। मम कैङ्कर्यलिप्सुभिर्जनैः परमया भक्त्या, परमभक्त्यवस्थापन्नமான साधन भक्त्याவாதல், प्रपत्तिயாலே யாதல், परमपदवासिயான நான் प्राप्यன் - अन्यथा, उपायान्तरங்களாய் मोक्षத்துக்கு परम्परया उपायभूतங்களான कर्मयोगादिயால் साक्षान्न प्राप्यனென்கை - भक्तिप्रपत्त्योरेव साक्षात्परमपुरुषोपायत्वम् - कर्मयोगादिகளுக்கும், अवताररहस्यज्ञानादिகளுக்கும் परम्परयो पायत्वமேயுள்ளது - मोक्षं प्रति साक्षादुपायत्वமில்லையென்று श्रीभाष्यकारादिகளால் श्रीभाष्यादि- ग्रन्थங்களில் बहुधा प्रतिपादितமாகையாலிங்கு நம்மால் उपपाद्यांशமொன்றுமில்லை. तावदार्तिरिति - भ्रष्टैश्वर्यனான अधिकारिக்கு तद्भ्रंशजनितदुःखமவ்வளவே, तथा वाञ्छा, अपूर्वैश्वर्यार्थिகளுக்கும் तद्वाञ्छै யவ்வளவே - शीघ्रं फलप्राप्तिயுண்டாகையால். तावन्मोहः, कैवल्यार्थिகளுக்கும் कैवल्यத்தைப் பெறுகிறோமில்லையென்னும் दुःखமாதல் - तावदेव, அவ்வளவே - எவ்வளவு सर्वफलप्रदனான தேவரீர் திருவடியை शरणं புகுகிறானில்லை - शरणवरणान्तरमेव दुःखங்களெல்லாம்போம். कीदृशम्? अशेषाघनाशनम्, अशेषदुःखहरम् । भ्रष्टैश्वर्यादिमुमुक्षुपर्यन्तருடைய अशेषदुःखनाशनமென்கை - तावदेवயென்று प्रतिवाक्यं प्रयोगिக்கையால் प्रपत्त्यनन्तरम् -

---

(सा.स्वा) என்று सकलफलसाधनभक्त्यपेक्षया इतरपुरुषार्थ साधनप्रपत्तिக்கு रहस्यतमत्व மெங்ஙனே? என்னவருளிச் செய்கிறார் - तावदार्तिरिति - भ्रष्टैश्वर्यस्यार्तिः, ऐश्वर्यभ्रंशजं दुःखम्। तावदेव, प्रपत्तिपर्यन्तम् - अपूर्वैश्वर्यार्थिनः तद्वाञ्छा तावत्। मोहः, कैवल्यालाभजमोहस्तावत्। तथा असुखं, संसारदुःखं तावदित्यर्थः। अभिमतेति प्रारब्ध पापनाशத்துக்குமென்றபடி. பொதுவான इति।

---

(सा.प्र) निमित्तं भावि बन्धुनाशः। परमपुरुषार्थालाभश्चेत्यवधार्य तन्निवृत्त्यर्थं देहात्मविवेकाद्युपदिदेश। तथापि परमपुरुषार्थलाभनिमित्त शोकानिवृत्तेः परमपुरुषार्थोपायमुपदिदेश। -

---

(सा.वि) प्रकारेण - பெறுகைக்கும், प्राप्तुम् - பொதுவான साधनम्, साधारणसाधनम्। -

---

(सा.सं) भक्त्येत्यादि - प्रपत्तेस्स्वतन्त्रतायां मानम् - प्रपत्तेर्भक्त्यविशिष्टफलत्वे मानं तावदार्तिरिति। ऐश्वर्य भ्रंशजन्यार्तिस्तावदेव - शरणवरणपर्यन्तैवेत्यर्थः - तथा वाञ्छा अपूर्वैश्वर्यवाञ्छापि तावत्। इच्छाहिफले सति निवर्तते। तावन्मोह इति, अचिरेणैव कैवल्यलाभाय शरणवरणे कृते कैवल्यविरोधि प्राकृतवस्तुनि भोग्यताभ्रमरूपो मोहो निवर्तत इत्यर्थः असुखं, मोक्षविरोधिसर्वम्। तथा, शरणवरणपर्यन्तमेवेत्यर्थः - ननु "इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरम्मया" इत्यादिना भक्तियोगस्याति गुह्यतया भूयश्श्रोतव्यमभिधाय - ।

**मू - रहस्यतमोपायत्तै श्रोतव्यशेषमिल्लातपडि उपदेशपर्यवसानमान चरमश्लोकत्ताल् - सकललोकरक्षार्थमाक अरुळिच्चॆय्किऱान् -**

(सा.दी) फलसिद्धियिल् संशयमिल्लैयॆन्ऱु करुत्तु. रहस्यतमोपायत्तै, शरणागतियै ऎन्कै - श्रोतव्यशेषमिल्लातपडि ऎन्कैयाल् भक्त्या परमया वापि ऎन्ऱत्तैक् काट्टिल् वाचि काट्टप्पट्टतु. उपदेशपर्यवसानमान, मोक्षोपायोपदेशपर्यवसानमानवॆन्कै. इनि इतु विधिरूपमानवैक्कु -

(सा.स्वा) त्रैवर्णिकत्वादि नियममन्तरेण सर्वसाधारणमॆन्ऱपडि. श्रोतव्येति। मूलमन्त्रादिकळ् पोलेयन्ऱिक्के अङ्गाङ्गिफलादिकळै विशदमाक बोधिक्कैयाले इतु अत्यन्तोपादेयमॆन्ऱु करुत्तु - उपदेशपर्यवसानमान इति - रहस्यतमार्थकतया एवं कुर्विति प्रकारेण रहस्यतयोपदेशपर्य-वसानमानवॆन्कै. इप्पडि रहस्यतमोपायं विधेयमानाल् मामेकं शरणं व्रजेत् ऎन्ऱु उपदेशिक्क वेण्डियिरुक्क व्रज ऎन्ऱु मध्यमपुरुषनाले विधिक्कक्कूडुमो? ऎन्नवरुळिच्चॆय्किऱार् -

(सा.प्र) तथापि शोकानिवृत्तेरुपायान्तरदौष्कर्यसप्रत्यूहत्वविलम्ब्यकारित्वादिकं शोकनिमित्त-मित्यनन्तरमवधार्य सुकरमत्यल्पकालनिर्वर्त्यं निष्प्रत्यूहमविलम्बकारिणं सर्वविधशोकनिवर्तनक्षममुपायं परीक्षापूर्वकमुपदिदेशेत्यर्थ:। ''सत्कर्म निरताश्शुद्धास्साङ्ख्ययोगविदस्तथा । नार्हन्ति शरणस्थस्य कलां कोटितमीमपि ।।'' इत्यादि प्रमाणाद्भरन्यासस्य सर्वोपायाधिक्यावगमादेतस्मादधिकस्योपदेश्यस्या-भावेनैतदुपदेशश्लोकस्य चरमत्वमिति भाव: - नन्वस्योपायस्य ''न प्रसीदति वै विद्या विना सदुपदेशत:'' इत्यादिभिराचार्यानुज्ञयैव कर्तव्यत्वावगमाद्भगवदुपदिष्टस्य कार्यकरत्वानुपपत्तेश्शोक निवर्तकत्वं नोपपद्यत इत्यत्रैवं रूपार्थोपदेष्टुरेवाचार्यत्वान्नानुपपत्तिरित्याह -

(सा.वि) रहस्यतमोपायत्तै अरुळिच्चॆय्किऱान् इति संबन्ध: - श्रोतव्यशेषमिल्लातपडि, उपदेशपर्यवसानेति - इतश्श्रेष्ठमोक्षार्थसुलभोपायाभावाच्छ्रोतव्यशेषरहितमत्रैवोपदेशपर्यवसानमिति भाव:। अत एवास्य चरमश्लोकत्वमिति तात्पर्यम्। -

(सा.सं) ''मन्मनाभव'' इत्यादिना प्राक्प्रपञ्चित भक्तियोगमुपदिश्य अनन्तरं सर्वधर्मानिति प्रपत्त्युपदेशाद्भक्त्यङ्गभूतैवेयं किं न स्यादिति शङ्कां परिहरति। रहस्यतमोपायत्तै इत्यादिना। भक्तियोगोपदेशे निगमितेऽर्जुनविषादमालोच्याविलम्बितफलकं सुकरमुपायान्तरं ''सर्वगुह्यतमम्'' इत्यादिनोपदिशति। भूयश्शब्दश्च श्रवणादावृत्तिमात्र पर: - ''मन्मनाभव'' इत्यादिना तु वक्ष्यमाण प्रपत्तिनिष्ठस्य मध्यमां वृत्तिमनुतिष्ठतो बुद्धिविशेषमुच्यत इति नोक्तशङ्कावकाश इति - श्रोतव्यशेषमिल्लातपडि इत्युक्त्या मामेकमेव शरणमात्मानं सर्वदेहिनामित्यादि श्लोकादतिशय: प्रकृतार्थिकार्यपेक्षितनैरपेक्ष्य प्रदर्शनायोक्त: अनेनास्यैवादर्तव्यत्वं सूचितम् - इत्थमरुळिच् चॆय्किऱान् इत्यन्तेन अस्य चरमश्लोकस्याकिञ्चन मुमुक्षुं प्रति स्वतन्त्रशरणागतिरूपानुष्ठेयार्थ विधायकत्वेनावश्यापेक्षणीयत्वमुपोद्घात प्रक्रियया समर्थितम् - अथास्य मुखान्तरेणाप्यादरणीयत्वमस्तीत्याह। -

**मू - श्रुतिसिद्धமான இவ் अर्थத்தை शरण्यனான सर्वेश्वरன் தானே उपदेशिக்கஇதுதானே**

**''सन्त्यज्यविधिनानित्यं षड्विधां शरणागतिम्।**

**आचार्यानुज्ञया कुर्याच्छास्त्रदृष्टेन वर्त्मना।।'' என்று**

**श्रीविष्णुतत्त्वादिகளிலே சொன்ன आचार्यानुज्ञैயுமாயிற்று. सर्वधर्मानित्यादि - இந்த श्लोकத்துக்கு शङ्करादिकुदृष्टिகள் சொல்லும் பொருள்களெல்லாம் तात्पर्यचन्द्रिकैயிலும் निक्षेपरक्षैயிலும் பரக்க दूषिத்தோம்.**

(सा.दी) प्रयोजनமருளிச் செய்கிறார். श्रुतिसिद्धமான इति। ''मुमुक्षुर्वैशरणमहं प्रपद्ये ब्रह्मप्रद्य'' इत्यादि श्रुतिसिद्धமான । सन्त्यज्यविधिनेत्यादि। पूर्वोक्तங்களான उपायान्तरங்களை सात्विकत्यागरूपेण விட்டென்றபடி. षड्विधाम्, अङ्गाङ्गिरूपेण षड्विधाமென்கை. இனி चरमश्लोकத்துக்கு பரர் अर्थान्तरं சொல்லியிருக்கையால் प्रपत्तिपरत्वமெங்ஙனே? என்னவருளிச்செய்கிறார். सर्वधर्मानित्यादिயால். ஆனால் நீரிங்கு -

(सा.स्वा) श्रुतिसिद्धமான इति। ''यो ब्रह्माणम्'' इत्यादि श्रुतिயிலே सर्वेश्वरशरणवरणं विहितமாகையாலேயத்தை शरणवरणकर्मभूत शरण्यंதானே उपदेशिக்கும் போது औचित्यान्मां शरणं व्रज என்றே पर्यवसिக்குமென்று கருத்து. सन्त्यज्येति - नित्यं, शरणागत्यनुष्ठान काले सर्वदा - सन्त्यज्य, सर्वधर्मान्, सर्वकामान्, ऐहिकामुष्मिकानपीति पूर्वार्धोक्तान् संत्यज्यविधिना, विधिसिद्धसात्विकत्यागपूर्वक-माचार्यानुज्ञया शास्त्रोक्त मार्गेण अङ्गाङ्गिसमुच्चयेन षड्विधां नित्यम् - षड्विधां,अविनाभूताङ्गकां वा शरणागतिं कुर्यादित्यर्थः - शेषं स्पष्टम् - आचार्येति - मध्यमपुरुषனுக்கு இதுவுமொரு नियामकமென்றபடி - व्याख्येयत्वव्यक्त्यर्थமாக प्रतीकं ग्रहिக்கிறார். सर्वधर्मानित्यादीति - இந்த चरमश्लोकं शङ्करादिகளாலே व्याख्यातமாகையாலே யிங்கு तद्व्याख्यानं व्यर्थமன்றோ? शङ्करादिव्याख्यानं बहुदोषदुष्टமாகையாலே யிங்கு तद्व्याख्यानं सार्थक மென்னிலப்போது तन्निराकरणமிங்கு பண்ணாமல் व्याख्यानं பண்ணக் கூடுமோ? என்னவருளிச்செய்கிறார். இந்த श्लोकத்துக்கு इति। அப்போதங்கே தானே இதுக்கு अर्थं சொல்லுகையாலே இங்கே சொல்ல வேண்டுவதெது? என்னவருளிச் செய்கிறார்.

(सा.प्र) श्रुतिसिद्धமான इत्यादि - सन्त्यज्येत्यादि - अनित्यमल्पास्थिरफलम् - विधिना, विधीयत इति विधिः। साधनम्, तेन सह सन्त्यज्य। ''त्रैवर्गिकांस्त्यजेद्धर्मान्'' इत्युक्तरीत्या त्रिवर्गतत्साधन-निरपेक्षत्वात्तानि सन्त्यज्येत्यर्थः। अथवा इदमशक्तविषये भक्तियोगत्यागस्याप्युपलक्षणम्। यद्वा, नित्यं, नित्यनैमित्तिकाङ्गत्वाद्यावच्छरीरपातं नित्यमनुष्ठेयत्वान्नित्यशब्दवाच्यं भक्तियोगम् - विधिना, भरन्यासनैरपेक्ष्यवैशिष्ट्यसाधनेन सन्त्यज्येत्यर्थः। एवं श्लोकमवतारयित्वा तदर्थतया परोक्तार्थानां प्रेक्षावदनुपादेयत्व प्रदर्शनपूर्वकं वक्ष्यमाणार्थानां तदुपजीव्यत्वमाह। सर्वधर्मानित्यादि, இ௱ श्लोकத்துக்கு इत्यादिना - तत्र प्रथमं श्लोकस्य वाक्यार्थमाह। -

(सा.वि) श्रुतिसिद्धமான इति। ''मुमुक्षुर्वै शरणमहं प्रपद्ये'' इति श्रुति सिद्धमित्यर्थः। अस्या विद्याया ब्रह्मविद्यात्वादाचार्योपदेशमन्तराकथं सिद्धिरित्यत्र भगवत एव आचार्यत्वादाचार्योपदेशोऽपि सिद्ध इत्याह। இது தானே इति। -

(सा.सं) श्रुतिसिद्धமான इति। ''मुमुक्षुर्वै - आत्मानं युञ्जीत'' इत्यादि सिद्धमानेत्यर्थः। -

**मू - இங்கு सारமான अर्थங்களை सत्संप्रदायसिद्धமானபடியே சொல்லுகிறோம். இதில் पूर्वार्धம் उपायविधायकம். उत्तरार्धं फलनिर्देशादिमुखத்தாலே विधिशेषम् । ஆகையால் இஸ் श्लोकं उपायविधान प्रधानम्। धर्मமாவது? शास्त्रं கொண்டறிய வேண்டியிருக்கும் पुरुषार्थसाधनम्। धर्मान् என்கிற बहुवचनத்தாலே अभिमतसाधनமாக शास्त्रचोदितங்களான धर्मங்களுடைய बाहुल्यத்தைச் சொல்லுகிறது -**

(सा.सी) சொல்லுமதென்ன? என்னவருளிச்செய்கிறார். இங்கு सारமான इत्यादिயால் । இஶ் श्लोकத்துக்கு प्रधानार्थத்தைக் காட்டுகிறார். இதில் इत्यादिயால். இனி आदितः आरभ्य पदार्थமருளிச் செய்ய उद्योगिத்து முந்துர सर्वधर्मान् என்கிற पदத்துக்கு अर्थமருளிச்செய்யக்கோலி அந்த पदं सर्वशब्दமும், धर्मशब्दமும், विभक्तिயுமென்று மூன்று अवयवமாகையால் முந்துர विशेष्यமான धर्मशब्दத்துக்கு अर्थமருளிச்செய்கிறார். धर्मமாவது என்று தொடங்கி. शास्त्रं கொண்டென்றவிடத்தில் अवधारणத்தால் प्रत्यक्षादिप्रमाणத்தை व्यवच्छेदिக்கிறது. बहुवचनार्थத்தை யருளிச்செய்கிறார். धर्मान् என்கிற इत्यादिயால் - अभिमत साधनமான शास्त्र -

(सा.स्वा) இங்கு इति - सारतमமான अर्थங்களை इति - बहुवचनத்தாலே निक्षेपरक्षादिகளிலே சொல்லாத सारार्थங்களைச் சொல்லுகிறோமென்று கருத்து. सदिति । सत्संप्रदायसिद्धமானபடியே சொல்கிறோம் - அங்கே केवलयुक्तिमूलமாகச் சொன்னோமென்றபடி - ஆனாலும் ''सत्पाथेयं किमपिविदधे'' என்று இந்த श्लोकं विधायकமென்று சொன்னது கூடுமோ? उत्तरार्धफलपरமாகையாலே कृत्स्नமும் विधिपरமன்றே? என்னவருளிச்செய்கிறார். இதில் इति - धर्मशब्दं धृतिसाधनवाचि யன்றோ? धृतिः, प्रीतिः । तथाच पुरुषेष्ट साधनंधर्मமென்று सिद्धिக்கையால் लौकिकभोजनादिகளும் धर्मமாக प्रसङ्गिயாதோ? என்ன सर्वधर्मानित्यत्र सर्वशब्दधर्मशब्द बहुवचनानां मध्ये प्रथमं प्रधानமான धर्मशब्दार्थமருளிச் செய்கிறார். धर्मமாவது इति - भोजनादिकमपुरुषार्थसाधनतया शास्त्रैकज्ञाप्य மல்லாமையாலே दोषமில்லையென்று கருத்து - ஆனாலும் धर्मानिति बहुवचनं வேணுமோ? ''चोदनालक्षणार्थोधर्मः'' इत्यादिवदेकवचनமமையாதோ? என்ன अन्तरङ्गबहुवचनार्थமருளிச் செய்கிறார். अभिमतेति - அங்கு व्यक्तिबाहुल्यमविवक्षितமாகையாலே -

(सा.प्र) இதில் पूर्वेत्यादिना। फलनिर्देशादिति। माशुच इत्यत्र अधिकारनिर्देश आदिशब्दार्थः। अत्र प्रथमे विशेष्यांशस्य प्राधान्यात्तस्यार्थमाह - धर्मமான इत्यादिना। अलौकिकश्रेयस्साधनमित्यर्थः - ननु प्रकृतस्य भक्तियोगस्यैकत्वात्कथं बहुवचनमित्यत्र दहरान्तरादित्याक्षिविद्यादि बाहुल्यादुपपद्यत इत्यभिप्रयन्नाह - - धर्मान् என்கிற इत्यादिना - एवं तर्हि सर्वशब्दस्य कोऽर्थ इत्यत्राह। -

(सा.वि) प्रथमं वाक्यार्थमाह - இதில் इति। फलनिर्देशादीत्यादिशब्देन माशुच इत्यत्राधिकारिनिर्देशश्च विवक्षितः। धर्मशब्दार्थमाह। धर्मமாவது इति। अलौकिकश्रेयस्साधनत्वं धर्मत्वम्। अलौकिकत्वं च वेदतदुपबृह्मणेतरप्रमाणबोधितेष्टसाधनताकत्वरहितत्वम्। तच्च वेदतदुपजीविप्रमाण बोधितेष्टसाधनताकत्वे पर्यवसन्नम्। तदेवोक्तम् - शास्त्रं கொண்டு इति - बहुवचनार्थमाह - बहुवचनத்தாலே इति। -

(सा.सं) उपायविधानप्रधानमित्युक्त्या अर्जुनस्यैव शोकनिरासे न तात्पर्यम्। किन्तु अकिञ्चनसर्व-मुमुक्षूणामिति सूचितम् - श्लोकं व्याचिख्यासुः धर्मशब्दस्य प्रकृत्यर्थं तावदाह - धर्मமாவது इति।।

**मूः - कस्यचिद्बुद्धिदौर्बल्यं लघुत्यागस्य कारणम् ॥**
**तत्र प्रपत्त्यनर्हाणामन्यदित्यपि युज्यते ।**
**व्यासादिषु तु नैवैषानीतिस्संशयघातिषु ॥''**

(सा.दीः) उपायान्तरेष्वशक्तस्य अथापि तत्र दुराशा दार्ढ्य शालिनः कस्यचित्, मन्दबुद्धेः पुरुषस्य । लघोः, प्रपत्तेस्त्यागे । बुद्धिदौर्बल्यं, ज्ञानविश्वासमान्द्यं कारणं भवति । तत्रेति - प्रपत्त्यनर्हाणां भक्त्यादिषु प्रवृत्तिर्भवतीतीदं तत्र उक्तप्रकारेण बुद्धिदौर्बल्यवति युज्यते - एषा नीतिः, अयं न्यायः । संशयघातिषु, संशयघातित्वात्परिपूर्णज्ञानविश्वासेष्विति भावः ।

(सा.स्वाः) अतिकृच्छ्रेषूपायान्तरेष्वशक्तस्य फले दुराशा दार्ढ्यशालिनः कस्यचित् पुंसः । लघोः, प्रपत्तेः । त्यागस्य बुद्धिदौर्बल्यं विश्वासमान्द्यं कारणम् । இதினாலே वचनத்தில் नरशब्दमशक्तपரமென்று கருத்து - अशक्तன் लघुत्यागं பண்ணினானாகில் विश्वासमान्द्यமங்கும் कारणமென்றபடி. तत्र विश्वासमान्द्ये सतीति शेषः । प्रपत्त्यनर्हाणामन्यत्, उपायान्तरमितीदमपि युज्यते । परेषां संशयघातिषु व्यासादिषु एषा रीतिः, विश्वासमान्द्याल्लघुत्याग इति नीतिः । न्यायः - न युज्यते ।

(सा.प्रः) तत्र प्रपत्त्यनर्हाणामित्यादि - तत्र, उपायान्तरशक्तेषु । विश्वासमान्द्यात्प्रपत्तावप्यनधिकारिणाम् । अन्यत्, परंपरयोपायान्तरोपकारकं नामसङ्कीर्तनादिकमेव युज्यत इत्यर्थः - ''नरस्य बुद्धिदौर्बल्यात्'' इत्यादेर्भरन्यास त्यागिषु त्यागहेतुप्रदर्शनपरत्वेन भक्तियोगे विश्वासमान्द्याधिकारत्वज्ञापन परत्वाभावात्सर्वज्ञतया विश्वासाधिक्यवत्सु व्यासादिषु ।

(सा.विः) दुराशा दार्ढ्यशालिनः, भक्त्यादिनैव मुक्तिं साधयामि नान्यदुपायान्तरमस्तीति बुद्धिर्दुराशा - तस्याः, दार्ढ्यं, आप्तवचनैरनपनेयत्वं तच्छालिनः । कस्यचिन्नरस्य, मन्दबुद्धेः - बुद्धिदौर्बल्यं, विश्वासमान्द्यम्- लघुत्यागस्य, प्रपत्तित्यागस्य कारणं भवति । ''नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते'' इत्यस्यैतदेव तात्पर्यम् - नतु विश्वासमान्द्ये - महाविश्वासरूपाङ्गवैगुण्येन प्रपत्त्यनधिकारिणो भक्तियोगादौ भक्त्युपयोगिनामकीर्तनादौ च प्रवृत्तिर्भवतीति । तथा च विश्वास मान्द्यं प्रपत्तित्यागकारणम् - नतु भक्त्यधिकार इति भावः । इयं नीतिरज्ञेष्वनसर्वज्ञेषु महाविश्वासवत्सु व्यासादिष्वित्याह - तत्र प्रपत्त्यनर्हाणामिति । - तत्र उपायान्तराशक्तेषु - प्रपत्त्यनर्हाणां विश्वासमान्द्यात् प्रपत्त्ययोग्याना-मन्यन्नामकीर्तनादिकं व्यासादिष्विति दुर्बलबुद्धिषु कल्प्यन्यायो व्यासादिष्वनुचितमिति भावः ।

(सा.संः) दुराशा, भक्त्यादिनैव मुक्तिं साधयामीति दुर्निर्वाहनिर्वहणाभिनिवेशः । तस्य दार्ढ्यं, आप्तवचनैरप्यप्रकम्प्यत्वम्-तच्छालिनः, अशक्तस्य कस्यचिन्नरस्य बुद्धिदौर्बल्यं लघूपायविषयकविश्वास मान्द्यं लघूपायत्यागेन गुरूपायपरिग्रहो बीजमित्यर्थः । नरस्येति श्लोकस्य च भरन्यासं त्यक्तवतामा-धुनिकानां त्यागहेतुबुद्धिदौर्बल्यमिति अन्तराप्रासङ्गिकं किञ्चिदाह, तत्रेति - तत्र, उपायान्तराशक्तेषु । बुद्धिदौर्बल्यस्य लघुत्यागं प्रति कारणत्वे सिद्धे सति - प्रपत्त्यनर्हाणां च भक्त्ययोग्यत्वमशक्त्यैव सिद्धम् । बुद्धिदौर्बल्यात्प्रपत्तावप्यनर्हाणाम् । अन्यत्, परम्परया भक्त्यादि कारणं नामकीर्तनादिकमित्यपि युज्यते - तर्हि व्यासादिष्वपि लघुत्यागे तदेव बीजं स्यादित्यत्राह । व्यासादिष्विति - महाविश्वासादि मान्द्यप्रयुक्ता प्रपत्तावप्रवृत्तिरिति नीतिर्नयुक्ता - संशयघातिषु, परेषामपि महाविश्वासोदयप्रतिबन्धक शङ्कापञ्चकनिवर्तकतया स्वात्मनि संशयात्मकबुद्धिदौर्बल्यरहितेष्वित्यर्थः ।

**मूः** - இப்படி **उपासनप्रपदन**ங்களுக்கு **अधिकारं व्यवस्थित**மாகையாலிரண்டு **शास्त्र**மும் **सप्रयोजनम्** । இரண்டு **अधिकारि**களுக்கும் **स्वधर्म**த்தில் **प्रतिपत्तिवैषम्य**மேயுள்ளது- **प्रपन्न**-னுக்குக்கோலின **फल**த்தைப்பற்ற வேறொன்றை **अनुष्ठि**க்கில் **ब्रह्मास्त्रबन्धन्याय**த்தாலே **विरोध**-முண்டானாலும் **स्वयं प्रयोजन**மாகவாதல், **भगवद्भागवतसमृद्ध्यादि फलान्तर**த்தைப் பற்றவாதல் வேறொன்றை **अनुष्ठि**த்தால் **बिरोध**மில்லை-

(सा.दीः) उपासनप्रपदनங்களுக்கு शक्ताशक्तादिभेदेन अधिकारव्यवस्थितत्वத்தை निगमिக்கிறார்- இப்படி इत्यादियाल्- இஃशक्ताधिकारपक्षத்தில் स्वधर्मत्यागं विधिக்கப்படாமையால் त्यागप-क्षोक्तदोषமில்லையென்கிறார்- இரண்டு अधिकारिகளுக்கும் इत्यादियाल्- स्वयंप्रयोजनत्वेनाङ्गत्वेन च प्रपत्ति वैषम्यम् । ननु प्रपन्नனுக்கு வேறொன்றை अनुष्ठिக்கில் ब्रह्मास्त्रन्यायात् प्रच्युतिவாராதோ? என்னவருளிச் செய்கிறார்- प्रपन्नனுக்கென்று துடங்கி अनन्तरमुपायत्वबुद्धित्यागपक्षத்தை उपक्षेपिக்கிறார்-

(सा.स्वाः) कुतः? संशयघातितया विश्वासमान्द्याभावादिति भावः । இப்படி त्यागविधिपक्षத்தில் दूषणप्रसक्तानुप्रसक्त्या भक्तिप्रपत्त्यधिकारिव्यवस्थै பண்ணி युष्मत् पक्षத்திலும் शास्त्रनैरर्थक्यं प्रसङ्गिயாதோ? என்கிற शङ्कैயைப் परिहरिத்துக் கொண்டு उपसंहरिக்கிறார்- இப்படி इति- प्रपन्नविषयத்தில் वर्णाश्रमधर्मभङ्गமல்லாமையாலே शास्त्रवैय्यर्थ्यமில்லையோ? என்னவருளிச் செய்கிறார். இரண்டு इति - त्यागविधिயில்லாமையாலே एकाधिकारिக்கு अङ्गत्वबुद्धिயும், इतराधिकारिக்கு कैङ्कर्यबुद्धिயுமென்றபடி. இப்படி प्रपन्नனுக்கு स्वधर्मानुष्ठानமுண்டாகில் उपायान्तर स्पर्शप्रसक्त्या ब्रह्मास्त्रन्यायं विरोधिயாதோ? नित्यनैमित्तिककर्मम् उपायत्वबुद्धिயன்றிக்கே कैङ्कर्यबुद्ध्यानुष्ठेयமாகையால் विरोधமில்லையென்னிலப்போது काम्यकर्मமும் प्रसङ्गिயாதோ? काम्यकरणத்தில் प्रत्यवायமில்லாமையாலே तत्करणप्रसङ्गமில்லை யென்னிலப்போது भगवद्भागवत समृद्ध्याद्यर्थकर्माकरणமும் प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். प्रपन्नனுக்கு इति - स्वर्गाद्यर्थकाम्यं स्वरूपविरुद्धமாகையாலது प्रसङ्गिயாது.

(सा.प्रः) दुर्बलबुद्धिन्यायकल्पनमनुचितमिति भावः । एवं च भक्तिप्रपत्त्योश्शक्ताशक्ताधिकारत्वेन न कस्यापि शास्त्रस्याप्रामाण्यप्रसङ्ग इति दर्शयन् प्रपन्नानुष्ठानेषु नित्यनैमित्तिकेषु भगवद्भागवतकैङ्कर्यात्मकत्वरूपं भक्तानुष्ठेयार्थश्रैष्ठ्यमप्याह - இப்படி उपासनेत्यादिना - यद्यप्येवं सर्वधर्मत्यागो न विधेयः ।

(सा.विः) प्रतिपत्तिवैषम्यमिति । भक्तानां स्वधर्मेष्वङ्गत्वबुद्धिः प्रपन्नानां स्वयंप्रयोजनत्वबुद्धिरिति वैषम्यमिति भावः । तेदव विशदयति प्रपन्नனுக்கு इति ।

(सा.सं:) इयता भक्त्यादि स्वरूपत्यागविधिपक्षात्त्वत्पक्षस्य कोऽपि विशेष इत्यत्राह - இப்படி इति परपक्षेतु गुरुशास्त्रं निरर्थकमेवेति भावः । अथ स्ववर्णाश्रमाद्यनुगुणशक्यसर्वधर्मत्यागविधिपक्षापेक्षयापि स्वपक्षस्य वैषम्यमाह - இரண்டு इति - उपासकस्य विद्याङ्गत्वेन प्रपन्नस्यतु भोग्यतमस्वाम्याज्ञानु-पालनकैङ्कर्यत्वेनेति प्रतिपत्तिवैषम्यमेव न स्वरूपत्यागतदत्यागकृतमिति भावः । तर्हि कैङ्कर्यत्वेन काम्यमपि कर्मप्रपन्नस्य अनुष्ठेयं स्यात्तर्हि साधनान्तरासहत्वभङ्ग इत्यत्राह - प्रपन्नனுக்கு इति भगवत्समृद्धिः, तद्भोगोपकरणसमृद्धिः - भागवतसमृद्धिस्तु भगवत्कैङ्कर्योपकरणानां ज्ञानभक्त्यादेश्च समृद्धिः ।

**मूः - இப்படி स्वरूपत्यागं கூடாதொழிந்தாலும் उपायत्व बुद्धित्यागं பண்ணுகை परित्यजவுக்குப் பொருளானாலோவென்னில்**

(सा.दीः) இப்படி स्वरूपेत्यादियால். उत्तरமருளிச் செய்கிறார்.

(सा.स्वाः) भगवद्भागवतसमृद्ध्यर्थकर्मம் स्वरूपानुगुणமாகையாலே दोषமில்லையென்று கருத்து. ஆனாலும் स्वरूपत्यागविधि கூடாவிட்டாலும் धर्मेषूपायत्वबुद्धित्यागं परित्यज्य என்கிறதுக்குப் பொருளாகலாகாதோ? सर्वधर्मान्परित्यज्य என்று बुद्धित्यागं தோற்றவில்லையோ? என்னில் उपायतां परित्यज्येत्यादिகளிலே बुद्धित्यागம் अर्थமானாப்போலே இங்கும் बुद्धित्यागपरत्वं கூடாலாமே? என்கிற अभिप्रायத்தாலே शङ्किக்கிறார். இப்படி इति - उपायान्तरपरित्यज्येत्या-दिवैषम्यकथनपूर्वकं उत्तरமருளிச் செய்கிறார்.

(सा.प्रः) तथापि तेषूपायत्वबुद्धित्यागो विधेयोऽस्त्विति शङ्कामनूद्य ''अविप्लवाय धर्माणाम्'' इत्यारभ्य ''उपायत्वग्रहं तत्र वर्जयेन्मनसा सुधीः'' इत्युक्तोत्तरकृत्वेषूपायत्व बुद्धित्यागोऽत्रापि विधियत इति किमुच्यते? उत सर्वेषां धर्माणामुपायत्वबुद्धित्यागो भरन्यासाङ्गतया विधीयत इत्युच्यत इति विकल्प्य प्रथमकल्पस्य श्लोके विवक्षानुपपत्तिं प्रदर्श्य द्वितीयेऽपि किमनुपायेषूपायत्वबुद्धित्यागोऽङ्गतया विधीयते? उत उपायेष्विति विकल्प्य प्रथमे अप्रसक्तप्रतिषेधत्वं द्वितीयेऽप्यशक्यानुष्ठानेषूपायत्व बुद्धियोगस्याप्युक्तदोषग्रस्तत्वादनुष्ठीयमानेषूपायत्व बुद्धित्यागस्याङ्गत्वविधित्वस्यावश्यवक्तव्यत्वात्तस्मिन् पक्षे उपायान्तरस्वरूपाङ्गकत्वस्य भरन्यासे फलितत्वात्कैङ्कर्यरूपोत्तरकृत्यासिद्धिं नैरपेक्ष्यासिद्धि मकिञ्चनाधिकारत्वासिद्धिं स्वोक्तिविरोधं निष्प्रयोजनाङ्गाङ्गिभावव्यपदेशवैपरीत्यं चाह ।

(सा.विः) ननु स्वरूपत्यागस्यायुक्तत्वेऽपि फलसङ्गकर्तृत्वत्यागस्य ''सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः'' इति । ''एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्'' ।। इत्यादिना विहितत्वात्सर्वधर्मेषूपायत्वबुद्धिं परित्यज्येत्यर्थः स्वीक्रियतामिति उपायत्वबुद्धित्यागपक्षं शङ्कते - இப்படி स्वरूपेति । கூடாதொழிந்தால், अयुक्तश्चेत् । उपायत्वबुद्धित्यागं பண்ணுகை, उपायत्वबुद्धित्यागः । பொருளானாலோவென்னில், अर्थःकिं न स्यादिति शङ्कार्थः - उत्तरकृत्येषूपायत्वबुद्धित्यागो युक्तः - तथा हि सति स्वयं प्रयोजनत्वबुद्धेः - नचेदं वाक्यमुत्तरकृत्यगोचरम् । उपायदशायामेव हि पूर्वकालार्थकेन त्वाप्रत्ययेनोपायत्वबुद्धित्यागो विधीयते - तत्रोपायभूतानामेव सर्वधर्माणामनुष्ठेयतया प्राप्तानामुपायत्वबुद्धित्यागः कार्य इति सर्वधर्माणां प्रपत्त्यङ्गत्वेनानुष्ठानस्य आवश्यकता, उत्तरकृत्यविषयकोपायत्व बुद्धित्यागासिद्ध्या चोत्तरकृत्येषु स्वयंप्रयोजनत्वरूपकैङ्कर्योच्छेदः, प्रपत्तेर्नैरपेक्ष्यसिद्धान्तभङ्गः । अकिञ्चनाधिकारभङ्गश्चेत्येतान् दोषानाह ।

(सा.संः) आदिशब्देन स्वस्य भक्तिज्ञानाभिवृद्धिस्सङ्गृह्यते । इत्थं स्वरूपत्यागविधिपक्षो दूषितः । अथोपायत्वबुद्धित्यागविधिपक्षं दूषयितुमारभते । இப்படி इत्यादिना । ''अपायतां परित्यज्य न्यसे द्देवे तु तामभीः'' इत्यादिमध्यमवृत्तिविद्ध्यभिप्रायेण विधिக்கிறவிடம் इत्युक्तम् ।

**मूः - प्रपन्न**னுக்கு **उत्तरकृत्यगोचर**ங்களான **वाक्य**ங்களில் **उपायबुद्धित्यागं विधि**க்கிறவிடம் **उचितम्** । இங்கு **उत्तरकृत्य पर**மன்றிக்கே **उपायविधायक**மாயிருக்கிற இவ்**वाक्य**த்தில் சொல்லுகையாலே இப் **बुद्धित्यागपूर्वक**மான **धर्मस्वरूप**மும் **प्रपत्ति**க்கு **अङ्ग**மாக **अनुष्ठेय**மென்று **फलि**க்கையால் **स्वयंप्रयोजन**மான **केवलकैङ्कर्यं उत्तरकृत्य**மென்கிற **मतं सिद्धि**யாது. இவ் **उपाय**த்துக்குச் சொல்லுகிற **धर्मान्तरनैरपेक्ष्य**மும் கிடையாது. இவ் **उपायम् अकिञ्चनाधिकार**மன்றிக்கேயொழியும். எங்ஙனேயென்னில்? **उपाय**மல்லாதவற்றில் **उपायबुद्धित्यागं** இங்கு **विधि**க்கவேண்டா **उपाय**மானவற்றில் **उपायबुद्धित्यागं** பண்ணி **अनुष्ठि**க்கையாவது? பழைய **उपासनादि**களில் நிலையாம்.

(सा.दीः) प्रपन्नனுக்கு इत्यादियால் - उत्तरकृत्यवाक्यங்களில் उपायबुद्धिயைவிட்டென்றால் फलरूपेणानुष्ठिக்கை सिद्धமாம் -धर्मங்களில் उपायत्वबुद्धिயைத் தவிர்ந்து प्रपत्तिயை अनुष्ठिக்கக்கடவதென்றால் स्वरूपेण धर्मங்கள் प्रपत्त्यङ्गत्वेन फलिக்குமென்றபடி. अनिष्टान्तरங்களும் प्रसङ्गिக்குமென்கிறார்- இவ் उपायத்துக்கு इत्यादिवाक्यद्वयத்தால். இத்தை उपपादिக்கிறார். எங்ஙனேயென்னில் इत्यादियால் - प्रागुक्तोपासनादिகளில் நிலையாமென்றது उपासकனுக்கும் प्रपन्नனுக்கும் अनुष्ठानभेदமில்லையாமென்றபடி. उपासनத்திலும் उपासनமும் अङ्गत्वेन प्रपत्तिயும் अनुष्ठेयम् - प्रपत्तिயிலும் अङ्गत्वेन भक्त्यादिகள் अनुष्ठेयत्वेन प्रसक्तங்களாகையால் शक्ताधिकारமேயாமென்கை- இப் बुद्धित्यागपक्षத்தில் स्वव्याख्यानविरोधமும் வருமென்கிறார்.

(सा.स्वाः) प्रपन्नனுக்கு इति - उत्तरकृत्यங்களிலே उपायत्वबुद्धिயைவிட்டென்றால் फलरूपेणानुष्ठानं फलिக்கும் - धर्मங்களிலே उपायत्वबुद्धिயைவிட்டு प्रपत्तिயை अनुष्ठिக்கக்கடவாயென்றால் धर्माणामङ्गत्वं सिद्धமென்று கருத்து - उपायत्वबुद्धित्यागविशिष्टतात्कालिकधर्मं प्रपत्त्यङ्गமானால் बाधकமில்லையே? என்னவருளிச் செய்கிறார். இவ் उपायத்துக்கு इति । ''प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते'' इत्युक्तनैरपेक्ष्यமுமென்றபடி - அந்த वचनமும் उत्तरकालीनधर्मनैरपेक्ष्यपरமானாலோ? என்னவருளிச் செய்கிறார். இவ் उपायमिति । उपायत्वबुद्धित्यागयुक्ततात्कालिक सन्ध्यादिधर्ममङ्गமானாலும் उपायान्तरराहित्यरूपाकिञ्चन्याधिकारविरोधமில்லையே? என்று शङ्किக்கிறார். எங்ஙனேயென்னில் इति । उत्तरமருளிச் செய்கிறார். उपायमिति பழைய इति - पूर्वोक्तत्यागविधिपक्षத்தில் समर्थனுக்கே त्यागத்தை विधिக்கவேண்டுகையால் आकिञ्चन्याधिकार भङ्गம் போலே

(सा.प्रः) இப்படி स्वरूपत्यागं கூடாதொழிந்தாலும் इत्यादिना ।

(सा.विः) प्रपन्नனுக்கு उत्तरकृत्येत्यादिना - एतदेवोपपादयति-எங்ஙனேயென்னில் इति । उपायமில்லாத इति । उपायबुद्धेरप्राप्तत्वात्त्यागो न विधेय इति भावः । பழைய उपासनादिகளில் நிலையாம், पूर्वोक्तोपासनादिस्थितिरेव स्यात् - उपासनादिधर्मानुष्ठानस्य आवश्यकत्वात्प्रपन्नो अप्युपासक एव भवेदित्यर्थः - तथा चाशक्ताधिकारत्वभङ्ग इति भावः । अस्मिन्पक्षे त्यागानुष्ठानयोर्विषयभेदेन विरोधाभावात्प्रपन्नस्त्यागाधिकारी, इतरो अनुष्ठानाधिकारीत्यधिकारिभेदेन विरोधपरिहारः । परस्परव्याख्यानविरोधश्चेत्याह ।

(सा.संः) उचितमिति । तदा तत्र तस्य सात्विकत्यागरूपत्वादिति भावः । अत्र बुद्धित्यागे विध्यनौचित्यमनेकबाधकप्रदर्शनमुखेनाह - இங்கு इति - उपायविधायकवाक्यस्थत्वमात्रेण धर्माणां कथमङ्गत्वसिद्धिरिति चेदित्थम् । धर्मगोचरबुद्धित्यागस्य प्रपत्त्यङ्गत्वं धर्माणामङ्गत्वं विनाऽनुपपन्नमिति । अत एव फलिக்கையால் इत्युक्तिः । सिद्धिயாது इति । बुद्धित्यागपूर्वकोत्तरकृत्यस्यास्याङ्गत्वापत्तेरिति भावः । अकिञ्चनाधिकारत्वभङ्गरूपं बाधकं विकल्पमुखेन दर्शयति । எங்ஙனே என்னில் इति - இங்கு उपायविधायक इत्यर्थः - न ह्ययमुत्तरकृत्यपर इति भावः । विधिக்கவேண்டா इति बुद्धित्यागविधेरनपेतत्वाद्बुद्धेरप्रसक्ततया अप्रसक्तप्रतिषेधापाताच्चेति भावः । उपायமான इति ।

**मूः - இங்கு उपायत्वबुद्धित्यागं பொருளாகச் சொல்லுகிற पक्षத்தில் त्यागविधिக்கும், अनुष्ठानविधिக்கும், अधिकारिभेदத்தாலே विरोधं परिहरित्தவிடமும் अनपेक्षितवचनम् । இங்கு स्वरूपत्यागं சொல்லும்போதிறே இவ் विरोधप्रसङ्गமுள்ளது. இப்படி बुद्धिविशेषत्यागपूर्वक-कर्मज्ञानभक्तिகளைப் प्रपत्तिக்கு अङ्गமாக இசையும் पक्षத்தில் उपासनप्रपदनங்களுக்கு अङ्गाङ्गिव्यपदेशத்தில் மாறாட்டமேயுள்ளது.**

---

(सा.दीः) இங்கு उपायत्वबुद्धीत्यादिயால். இப்पक्षத்தில் धर्मங்களுக்கு स्वरूपत्यागविधि யில்லாமையால் प्रपन्नன் त्यागाधिकारी, इतरன் अनुष्ठानाधिकारीயென்றது கூடாதென்று கருத்து. இப்पक्षத்தில் भक्ति प्रपत्तिகளுக்கு अङ्गाङ्गिव्यपदेशமாறாட்டமொழிய अनुष्ठानத்தில் भेदமில்லை யென்கிறார். இப்படி बुद्धीत्यादिயால் - व्यपदेशத்தில் மாறாட்டமாவது? उपासनத்தில் उपासनमङ्गि யாய் प्रपत्ति अङ्गமென்னப்படுகை. प्रपत्तिயில்

---

(सा.स्वाः) இந்த पक्षத்திலும் उपायत्वबुद्धित्यागविशिष्टोपासनाद्यङ्गकत्वंफलिக்கையாலே उपासननिष्टै யாகையாலே अकिञ्चनाधिकारभङ्गமென்றபடி- किञ्च वस्तुत उपायங்களிலே उपायत्वबुद्धित्याग-मात्रमङ्गமாக विधेयமோ? उपायत्वबुद्धित्यागविशिष्ट भक्तियोगाद्यङ्गकत्वं विधेयமோ? என்று कल्पिத்து आद्यपक्षத்தில் स्ववचनविरोधமருளிச் செய்கிறார்- இங்கு इति । இங்கு प्रपत्तिविधायकचरमश्लोके என்றபடி. अनपेक्षितवचनत्वத்தை उपपादिக்கிறார். இங்கு इति - प्रपन्नன் त्यागाधिकारि, इतरன் अनुष्ठानाधिकारि என்கிறது கூடாதென்று கருத்து - द्वितीयपक्षத்தை निराकरिக்கிறார். இப்படி इति । भक्तियोगनिष्ठனுக்கு अङ्गितया भक्तिயும் अङ्गतया प्रपत्तिயும் अनुष्ठेयैயானாப்போலே प्रपन्नனுக்கு अङ्गितया प्रपत्तिயும்-

---

(सा.विः) இங்கு इति । अनपेक्षितवचनम्, विरोधाभावात्तादृशविभजनं व्यर्थमित्यर्थः । विरोधः कदास्तीत्यत्राह - இங்கு स्वरूपेति । भक्तिप्रपत्त्योर्मध्ये प्रपत्त्यङ्गत्वे भक्तव्यपदेश्यः । भक्त्यङ्गत्वे प्रपन्नव्यपदेश्यः - इत्येतावन्मात्रमेव भेदो नान्य इत्याह - இப்படி बुद्धिविशेषेतिமாறாட்டம், व्यत्यासः - भक्तेरङ्गत्वे यथाकथञ्चिदनुष्ठान

---

(सा.सं:) बुद्धित्यागस्य धर्मेष्वनुष्ठानार्थत्वात्प्रागुपदिष्टोपासनानुष्ठानशक्तिमान् प्रपत्त्यधिकारीत्युक्तं स्यादित्यर्थः । इह बुद्धित्यागविधौ त्यागानुष्ठानविध्योर्विरोधपरिहारो यस्तदुक्तः सोऽप्यसमञ्जसः स्यादित्याह । இங்கு इति - अनपेक्षितवचनत्वमेवोपपादयति । இங்கு इति - एकविषयत्वे हि विरोधात्तत्परिहाराय अधिकारिभेदकथनमपेक्षितं स्यादिति भावः उपायान्तरेषूपायत्व बुद्धित्यागोऽङ्गमिति च पक्षं प्रतिक्षिपति । இப்படி इत्यादिना । மாறாட்டமே इति - प्रपत्तेरकिञ्चनाधिकारत्वसिद्धा न्तभङ्गप्रसङ्ग इति भावः उभयविधबुद्धित्यागविधिपक्षेऽपि यत्फलं पराभिमतं -

मूः - अङ्गभावத்தில் यथाकथञ्चिदनुष्ठानं அமையுமென்கிற वैषम्यமும் मन्दम् ।
"सकलाङ्गोपसंहारे काम्य कर्म प्रसिद्ध्यति" என்று சொல்லப்பட்டதிறே.
अतस्स्वरूपत्यागोक्तौ कैङ्कर्यस्यापचारता । उपायत्वमतित्यागे तत्स्वरूपाङ्गता भवेत् ।।
सात्विकत्यागयुक्तानां धर्माणामेतदङ्गता । नूनं विस्मृतकाकादिवृत्तान्तैरुपवर्णिता ।।

(सा.दीः) प्रपत्ति अङ्गियாய் भक्ति अङ्गமென்னப்படுகை - இரண்டிடத்திலுமிரண்டும் என்னுமிடத்தில் निवारकரில்லையென்கை - ननु भक्ति अङ्गियானபோது पूर्णानुष्ठानं வேணும் - प्रपत्तिக்கு अङ्गமானபோது यथाकथञ्चिदनुष्ठानं அமையுமென்று वैषम्यமுண்டே? என்னவருளிச் செய்கிறார். अङ्गभावத்தில் इति - सकलाङ्गेति काम्यकर्म, प्रपत्तिरूपकर्मமும் काम्यरूप மாகையால் पूर्णமான अङ्गानुष्ठानத்தாலொழிய यथाकथञ्चिदनुष्ठानத்தால் फलिயாதேபோமென்றபடி - उक्तोपसंहारं பண்ணுகிறார் - अत इति । स्वरूप त्यागपक्षத்தில் क्रियमाणமான कर्मத்துக்கு अपचारत्वं प्रसङ्गिக்கும் उपायत्वबुद्धित्यागपक्षத்தில் तत्स्वरूपाङ्गता भवेत् । बुद्धित्यागसंस्कृतधर्म स्वरूपத்துக்கு प्रपत्त्यङ्गत्वं प्रसङ्गिக்குமென்றபடி - बुद्धित्यागपक्षத்தில் दूषणान्तरமருளிச் செய்கிறார் - सात्त्विकेति - बुद्धित्यागपक्षத்தில் सात्त्विक त्यागसंस्कृतानां धर्माणां प्रपत्त्यङ्गत्वमुक्तமாம் - இது विस्मृत काकादिवृत्तान्तரால் वर्णिக்கப்பட்டதாக வேணும்-

(सा.स्वाः) अङ्गतया भक्तिயும் अनुष्ठेयैயாகையாலிருவர்க்கும் अनुष्ठानवैषम्यமில்லையென்றபடி - भक्ति अङ्गियாம்போது पूर्णानुष्ठानமும், अङ्गமாம் போது यथाकथञ्चिदनुष्ठानமும் वैषम्यமு மில்லையோ? என்னவருளிச் செய்கிறார் - अङ्गभावத்தில் इति - प्रपत्ति काम्यैயாகையாலே अङ्गपूर्ति अपेक्षितै என்று கருத்து - ஆனால் त्यागविधिக்கு सात्त्विकत्यागयुक्तधर्माङ्गकत्व विधानத்தாலே तात्पर्यமானாலோ? என்ன एतच्छङ्कैயையும் परिहरिயா நின்றுகொண்டு उक्तार्थத்தைக் कारिकैகளாலே उपसंहरिக்கிறார். अत इति । अतः, उक्तयुक्त्या । स्वरूपत्यागोक्तौ कैङ्कर्यस्यापचारता स्यात्, निषिद्धत्वात् - उपायत्वबुद्धित्यागविधौ तद्युक्तधर्मस्वरूपाङ्गता भवेत् तच्चाकिञ्चन्य विरोधादिदूषण-ग्रस्तमिति भावः सात्त्विकत्यागयुक्तधर्माङ्गकत्वविधौ दूषणमाह । सात्त्विकेति । ननु न काकादिवृत्तान्तविस्मरणं, तत्र धर्मस्वरूपाङ्गवैकल्येन फलवैकल्यदर्शनादित्यत्राह ।

(सा.प्रः) एवं सर्वधर्मस्वरूपत्यागाङ्गकत्वे बुद्धित्यागाङ्गकत्वे च कैङ्कर्यस्य निषिद्धत्वं प्रपत्तेरुपायान्तराङ्गकत्वप्रयुक्तस्सर्वाधिकारत्वभङ्गश्च प्रधानदोषावित्याह । अत इत्यादिना । नन्वेवं तर्हि "सङ्गंत्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः । एतान्यपि च कर्माणि सङ्गंत्यक्त्वा फलानिच । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।" इत्युक्तसात्त्विकत्यागयुक्त नित्यनैमित्तिकमात्राङ्गकत्वविधिरस्त्वित्यत्र काक, कालीय, द्रौपदी, निषादादि कृते भरन्यासे तदङ्गत्वायोगात्तदप्यनुपपन्नमित्यभिप्रयन्नाचारविरोधमप्याह सात्त्विकेत्यादिना ।

(सा.विः) इति वैषम्यமும் इत्याशङ्क्याह - अङ्गभावத்தில் इति - स्वरूपत्यागबुद्धिपक्षयोः प्रातिस्विकदूषणानि निबध्नाति । अतस्स्वरूपेति । कैङ्कर्यस्यापचारता, निषिद्धानामनुष्ठानादिति भावः - स्वरूपाङ्गता भवेदिति - तथाच नैरपेक्ष्यबाधः आकिञ्चन्याधिकारबाधश्चेति भावः - उपायत्व-बुद्धित्याग पक्षे दूषणान्तरमप्याह - सात्त्विकत्यागपक्षे दूषणान्तरमप्याह - सात्त्विकत्यागेति । विस्मृतकाकादिवृत्तान्तैरिति परैरिति शेषः ।

(सा.सं:) तदपि न सिद्ध्यतीत्याह - अङ्गभावத்தில் इति - इत्थं परपक्षयोजनाभेदानामनुपपन्नत्वं स्वपक्षयोजनाया उपपन्नतां च सङ्गृह्णाति - अत इत्यादिना - अपचारता, त्याज्यतयोक्तस्वानुष्ठाने निषिद्धानुष्ठानतुल्यतेत्यर्थः । उपायत्वबुद्धित्याग एव दोषान्तरं - सात्त्विकेति । धर्मशब्द इह नित्यनैमित्तिकवदुपायान्तराणामपि ग्राहकः ।

**मूः - सकृत्प्रपदनेनैव धर्मान्तरदवीयसा ।**
**तत्क्षणेऽभिमतं पूर्वे संप्रापुरिति शुश्रुम ॥**
**प्रसक्ताङ्गत्वबाधेतु ब्रह्मास्त्रसमतैजसः ।**
**उपायस्य प्रभावश्च कैङ्कर्यादि च सुस्थिरम् ॥**

---

(सा.दीः) काकादिवृत्तान्तங்களில் सात्त्विकत्यागयुक्तधर्माङ्गतै प्रपत्तिக்குக்கண்டிலோமிறே । आदिशब्दத்தால் कालीयश्रीगजेन्द्रादिसङ्ग्रहः - ननु धर्माङ्गताभावात्काकादिகளுடைய प्रपत्ति विफलैயன்றோ? என்னவருளிச் செய்கிறார். सकृदिति-धर्मान्तर दवीयसा, भक्त्याद्यङ्गरहितेनेत्यर्थः - पूर्वे, काकविभीषणादिகள் - नैरपेक्ष्यविशिष्टविधिपक्षத்தில் கீழ்ச்சொன்ன पक्षद्वयोक्तदोषமில்லையென்கிறார். प्रसक्तेति - सर्वधर्मान्परित्यज्यஎன்னுமிடத்தில் उपायान्तर न्यायத்தால் प्रसक्तங்களான कर्मयोगादिகளுக்கு प्रपत्त्यङ्गत्वबाधैசொல்லுகிறதென்னும் पक्षத்தில் नैरपेक्ष्यरूपமான उपायप्रभावமும் उपपादितமாம்.

---

(सा.स्वाः) सकृदिति । धर्मान्तरदवीयसा, धर्मान्तरनिरपेक्षेण - सकृत्प्रपदनेनैव । तत्क्षणे - नतु कालान्तरे । अभिमतम् । पूर्वे, प्रपन्नाः । काकविभीषणादयः - संप्रापुरिति शुश्रुम । एवं चेद्विधिपक्षस्य भवत्पक्षे कथं निर्वाह इत्यत्राह - प्रसक्तेति - अङ्गत्वबाधकत्वेतु ब्रह्मास्त्रसमतेजसः उपायस्य प्रभावश्च सूचितो भवेत् ।

---

(सा.प्रः) नैरपेक्ष्यविधित्वे तु कैङ्कर्याबाधो नित्यनैमित्तिकाद्यनपेक्षिततया सर्वाधिकारत्वरूपभरन्यास प्रभावश्च सिद्ध्येदिति दर्शयति - प्रसक्तेत्यादिना ।

---

(सा.विः) काकादिवृत्तान्तस्मरणे सति तेषु कर्मयोगाद्यभावेन तदङ्गत्वं नोच्यतेति भावः - ननु काक, कालीयादीनामङ्गतया भगवद्द्वेषितया वा तत्र भक्त्याद्यङ्गकत्वासम्भवेऽपि ज्ञानिनां पराङ्कुशादिषु भक्तियोगाङ्गकत्वं दृष्ठमित्यत आह - सकृत्प्रपदनेनैवेति - धर्मान्तराणां, कर्मयोगादीनाम् - दवीयसा, दूरतरेण । तद्रहितेनेत्यर्थः - सकृत्प्रपदनेनैव - पूर्वे, आचार्याः - तत्क्षणे, आर्तप्रपत्त्युत्तरक्षणे - अभिमतं संप्रापुरिति शुश्रुम - श्रुतवन्तोऽभूम । शुश्रुमेति शुश्रवण इति धातोर्लिंडुत्तम पुरुषबहुवचनं विसर्गरहितम् । सविसर्गपाठस्तु लेखकदोषकृतः - पूर्वे इत्यस्य विभीषणादय इति वार्थः - तत्पक्षेऽभिमतम् - रामप्रसादरूपं फलं द्रष्टव्यम् - नैरपेक्ष्यविधिपक्षे तु न कस्यापि बाध इत्याह - प्रसक्तेति - प्रसक्तानां "सहकारित्वेन च" इति भक्तिविद्यायामिव विद्यात्वसाधारण्येन प्रपत्तिविद्यायामप्यङ्गत्वेन प्रसक्तानां नित्यनैमित्तिकादीनां गतिचिन्तनादीनाञ्चेत्यर्थः । अङ्गत्वबाधे तु, अङ्गत्वबुद्धित्यागपक्षे तु - उपायस्य प्रभावः, नैरपेक्ष्यम् ।

---

(सा.संः) काकादिवृत्तान्तमेव स्पष्ठयति - सकृदिति - दवीयसा, दूरतरेण - पूर्वे, काकादयः । शुश्रुम, पुराणेष्विति शेषः - नन्वितराङ्गनैरपेक्ष्यविधिरिति त्वत्पक्षेऽप्यप्राप्तानां नैरपेक्ष्यविधौ नैष्फल्यमप्रसक्तप्रतिषेधश्च प्राप्तानाञ्चेदपरित्याज्यानामानुकूल्यसङ्कल्पादीनामपि त्यागः सिद्ध्ये दित्यत्राह - प्रसक्तेति । प्रपत्तेरपि ब्रह्मविद्यात्वाविशेषादग्निहोत्रादिरूपवर्णाश्रमधर्माणां गति चिन्तनादीनां च अङ्गत्वेन न्यायतः प्रसक्तानामङ्गत्वमात्रं बाध्यते न तु स्वरूपमपि । तदा प्रभावः - असहायशूरत्वं, स्वरूपेण फलतया अनुष्ठानलाभात्सुस्थिरत्वम् ।

**मूः** - ஆகையால் இங்கு **सर्वधर्म**ங்களினுடைய **स्वरूपत्याग**த்தை **अङ्ग**மாக **विधि**க்கிற தென்றும், அவை **अङ्ग**மாம்படி இங்கு **बुद्धि विशेषत्यागमात्रं विधि**க்கிறதென்றும் சொல்லுகிற **पक्ष**ங்கள் **आज्ञानुपालनादिशास्त्र**ங்களுக்கும், **प्रपत्ति**க்கு **नैरपेक्ष्य**ம் சொல்லுகிற **शास्त्र**ங்களுக்கும் **पूर्वाचार्यसंप्रदाय**ங்களுக்கும், **प्रपन्न**ராய் போந்த **पूर्वशिष्ट**ர்களுடைய **आचार**த்துக்கும் **विरुद्ध**ங்களாம்- இப்படி **उक्तदोष**ங்களாலே **धर्म**ங்களினுடைய **स्वरूपत्याग**மும் **प्रपत्ति**க்கு **अङ्ग**மன்று. **उक्तनैरपेक्ष्य**த்தாலே அந்த **धर्म**ங்களினுடைய **स्वरूप**மும் இதுக்கு **अङ्ग**மன்று. ஆகையால் இங்கு மற்றொரு **धर्म**த்தாலும் இப் **प्रपत्ति**க்கு **अपेक्षै**யில்லையென்கையிலே இத் **त्यागविधि**க்கு **तात्पर्य**ம்

---

(सा.दीः) वर्णाश्रमधर्मத்துக்கு निषेधமில்லாமையால் कैङ्कर्यादिகளும் प्रतिष्ठापितமாமென்கை- आदिशब्दத்தால் अपराधपरिहारादेस्सङ्ग्रहः - उक्तहेतुக்களால் கீழ்ச்சொன்ன पक्षद्वयदूषणத்தை उपसंहरिக்கிறார்- ஆகையால் इत्यादि - स्वरूपत्याग पक्षத்தில் आज्ञानुपालनादिशास्त्रங்களுக்கும், बुद्धित्यागपक्षத்தில் प्रपत्ति नैरपेक्ष्य परशास्त्रங்களுக்கும், उभयपक्षத்திலும் पूर्वाचार्यसंप्रदायादिகளுக்கும் विरुद्धமாமென்கை. ஆகையால் प्रपत्तिக்கு धर्मங்களினுடைய त्यागமும் स्वरूपமும் अङ्गமன்றென் கிறார். இப்படி इत्यादिயால் प्रपत्तिயினுடைய नैरपेक्ष्यத்திலே विधिக்கு तात्पर्यமென்கிறார். ஆகை யாலிங்கு इत्यादिயால். प्रसक्तத்துக்கு प्रतिषेधமாகையால் प्रसङ्गप्रकारத்தை प्रश्नपूर्वकமாக வருளிச்செய்கிறார்.

---

(सा.स्वाः) उक्तकैङ्कर्यादि च सुस्थिरमित्यर्थः । बुद्धित्यागविधिपक्षத்தில் आचारसंप्रदायविरोधादि दूषणத்தை सङ्क्रमिப்பியா நின்றுகொண்டு पक्षद्वयदूषणத்தை उपसंहरिக்கிறார். ஆகையால் इति । स्वरूपत्यागविधिपक्षத்தில் आज्ञानुपालनशास्त्रविरोधமும், बुद्धित्यागविधिपक्षத்தில் नैरपेक्ष्यशास्त्र- विरोधமும், उभयपक्षத்திலும் संप्रदायशिष्टाचारविरोधமும் अन्वयिக்கிறது. उक्तदूषणங்களாலே फलितமான धर्मस्वरूपत्यागतदनुष्ठानयोरङ्गत्वभावத்தை उपसंहरिக்கிறார். இப்படி इति । यद्वा, இப்படி अङ्गமன்றென்று சொன்னது கூடுமோ? विधिपक्षத்தில் त्यागं शब्दार्थतया अवश्यं विधेयतया वक्तव्यமாகையால் विधेयान्तरालाभेन च स्वरूपत्यागबुद्धित्यागयोरन्यतरं विधेयமென்று சொல்ல வேண்டாவோ? என்னவருளிச்செய்கிறார். இப்படி इति । அப்போது विधिपक्षத்தில் त्यागविधिக்கு எந்த अर्थத்தில் तात्पर्यम् ? என்கையிலருளிச்செய்கிறார். ஆகையால் इति - இப்படி इतराङ्गापेक्षा प्रतिषेधத்தில் तात्पर्यசொன்னது கூடுமோ? अप्रसक्त प्रतिषेधं प्रसङ्गिயாதோ?

---

(सा.विः) कैङ्कर्यादि च, ''विहितत्वाच्चाश्रमकर्मापि'' इति विनियोगप्राप्तनित्यनैमित्तिकादि कैङ्कर्यानुष्ठानं च सुरक्षितं भवतीत्यर्थः - प्रागुपक्रान्त पक्षद्वयदूषणोत्थापनमुपसंहरति ஆகையால் इति - स्वाभिमतत्यागविधितात्पर्यं निष्कृष्य दर्शयति । இப்படி इति । ''भावाभावौ न धर्माणां प्रपत्तेरङ्गमिष्यते'' इति पूर्वोक्तरीत्या धर्माणां स्वरूपं वा तत्त्यागो वा प्रपत्तेरङ्गं नेष्यते । अतो नैरपेक्ष्यसिद्धिरिति भावः - ननु प्रतिषेधस्य प्रसक्तिरपेक्षणीया? प्रसक्तं हि प्रतिषिध्यते इति न्यायात् ।

---

(सा.सः) आदिशब्देनाकिञ्चनाधिकारत्वसर्वाधिकारत्वादिसङ्ग्रहः । इत्थं सङ्ग्रहितमीषद्विवृणोति । ஆகையால் इत्यादिना । नैरपेक्ष्यविधिसिद्धान्ते प्रसक्तिं प्रसक्तांश्च दर्शयति ।

**मूः** - இப்படி **प्रतिषेधि**க்கைக்கு **प्रसङ्ग**ம் வேணும். இங்கு என்ன **धर्म**ங்கள் **प्रसक्त**ங்களாய் **प्रतिषेधि**க்கப்படுகிறனவென்னில்? **वेदान्तचोदितै**களான **विद्यै**களில் ஒரு **विद्यै**யிலே யோதி **अङ्ग**ங்களாய் தோற்றின **वर्णाश्रमधर्म**ங்களும், **गतिचिन्तनादि**களும், **विद्यान्तर**த்திலும் வருமாப்போலே **न्यासविद्यै**யிலும் இவை **तुल्यन्याय**த்தாலே **अङ्ग**ங்களாய் வரப்புக இப்படி **अङ्गत्वप्रसङ्ग**முடைய **सर्वधर्म**ங்களாலும் இதுக்கு **अपेक्षै**யில்லையென்கை இவ்விடத்துக்கு **उचितम्** -

---

(सा.दीः) இப்படி प्रतिनिषेधिக்கைக்கென்று துடங்கி - प्रपन्नविषयத்தில் वर्णाश्रमधर्मங்களுக்கு विद्यासहकारित्व वेषंதவிர்ந்தால் उपयोगமெது? என்னவருளிச் செய்கிறார்.

---

(सा.स्वाः) ஆகையால் प्रपत्तिக்கு नैरपेक्ष्यविधिகூடாமையால் बुद्धित्यागविद्याश्रयणेन सात्त्विकत्या-गविशिष्टधर्मस्वरूपाङ्गकत्वमनन्यगत्याङ्गीकार्यமன்றோ? என்கிற अभिप्रायத்தாலே शङ्कित्तु उत्तरமருளிச் செய்கிறார். இப்படி इत्यादियाल்-ஒரு विद्यैகளில் इति - पञ्चाग्निविद्योपकोसलविद्या प्रकरणத்தில் श्रुतமான गतिचिन्तनं विद्यान्तरத்திலும், एकविद्याप्रकरणத்தில் "यज्ञेन दानेन" इत्यादि श्रुत्या अङ्गतया श्रुतवर्णाश्रमधर्मங்களும் चित्तशुद्ध्यापादकत्वादिरूपार्थ सामर्थ्य रूपलिङ्ग प्रमाणத்தாலே सर्वविद्यैகளிலும் வருமாப்போலேயென்று கருத்து - இப்படியாகில் प्रपन्नனுக்கு वर्णाश्रम धर्म परित्यागं प्रसङ्गियாதோ? विद्या सहकारित्वेनानुष्ठानापेक्षैயில்லையே? कैङ्कर्यरूपेणानुष्ठेयமென்கைக்கு प्रापकமில்லையே? "विहितत्वाच्चाश्रमकर्मापि" என்கிற न्यायத்தாலே प्रपन्नனுக்கும் अनुष्ठेय மென்று சொல்லிலந்த सूत्रं भक्तविषयமாகையாலே प्रपन्नனுக்கு அது प्रापकமன்றே? என்ன வருளிச் செய்கிறார்.

---

(सा.प्रः) ननु नैरपेक्ष्यविधित्वेऽप्यप्रसक्तधर्मनैरपेक्ष्यबोधनानुपपत्तेः केषां धर्माणां प्रसक्तानां नैरपेक्ष्यं विधीयत इत्याशङ्कामनूद्य परिहरति । இப்படி प्रतिषेधिக்கைக்கு इत्यादिना - "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । यज्ञेन दानेन तपसाऽनाशकेन "वर्णाश्रमाचारवता पुरुषेणपरः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः । सहकारित्वेन च - अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इत्यादिभिर्नित्यनैमित्तिकानां विद्याङ्गत्वावगमाद्दहराक्षरादि विद्यावन्न्यासविद्याया अपि विद्यात्वाविशेषात्तदङ्गकत्वप्राप्तौ तन्नैरपेक्ष्यं विधीयत इत्यर्थः - एवं तर्ह्यनपेक्षितानां तेषां जलताडनादीनामिव प्रपन्नैरनुष्ठानमयुक्तमित्यत्र "अहरहस्सन्ध्यामुपासीत तदुह वा एते ब्रह्मवादिनः पूर्वाभिमुखास्सन्ध्यायां गायत्र्याभिमन्त्रा आप ऊर्ध्वं विक्षिपन्ति - सन्ध्याहीनोऽशुचिर्नित्यमनर्हः स्सर्वकर्मसु ॥ विहितत्वाच्चाश्रमकर्मापि - मानीषी वैदिकाचारं मनसापि न लङ्घयेत्" इत्यादिभिरवश्यानुष्ठेयत्वसिद्धे स्तद्युक्तमेवेति दर्शयन् -

---

(सा.विः) भक्त्यङ्गानामिहाप्रसक्तत्वात्प्रसक्तानां प्रपत्त्यङ्गनामानुकूल्य सङ्कल्पादीनां प्रतिषेधव्याघातात्कथं नैरपेक्ष्यविधिर्घटत इति चोदनापूर्वकं परिहारमाह । இப்படி प्रतिषेधिக்கைக்கு इति । प्रतिषेधस्य प्रसङ्गः प्रसक्तिः । வரப்புக अङ्गत्वेन प्राप्तेषु सत्सु ।

---

(सा.संः) இப்படி प्रतिषेधिக்கைக்கு इति । नैरपेक्ष्यविधौ वर्णाश्रमधर्मानुष्ठानप्रापकं किमित्यत्राह ।

**मूः - இத் धर्मங்களுக்கு ''सहकारित्वेन च'' என்கிற सूत्रத்திற்சொன்ன विद्या सहकारित्ववेषं தவிர்ந்தால் ''विहितत्वाच्चाश्रम कर्मापि'' என்று सूत्रान्तरத்திற்சொன்ன विनियोगान्तरத்துக்குப் प्रपन्नன் பக்கல் निवारकரில்லை. ஆகையால் இத் धर्मங்களினுடைய अनुष्ठानமும், धर्मங்களை त्यजिக்கையும் प्रपत्तिக்கு अङ्गமல்லாமையால் अशक्यங்களில் नैराश्यमधिकारத்திலே சொருகும். शक्यமான नित्यनैमित्तिकங்களுடைய अनुष्ठानं आज्ञानुपालनமான कैङ्कर्यमात्रமாம்.**

---

(सा.दीः) இத்धर्मங்களுக்கு इत्यादिயால். இப்படி सर्वधर्मங்களினுடைய परिग्रहமும் त्यागமும் प्रपत्तिக்கு अङ्गமன்றென்றீர். சிறிது धर्मங்களுடைய परिग्रहமும் अपरिग्रहமும் இவனுக்குண்டா யிருந்தது. அது எதிலே சேரும்? என்னவருளிச்செய்கிறார். ஆகையால் இத் धर्मेत्यादिயால்

---

(सा.स्वाः) இத் धर्मங்களுக்கு इति - विनियोगान्तरेति । ''यावज्जीवमग्निहोत्रंजुहोति'' इत्यादि विनियोगान्तरेण वर्णाश्रमाद्यर्थत्वावगमेन तत्प्रयुक्तानुष्ठानबाधकமில்லை என்றபடி-இப்படி प्रपत्तिக்கு धर्मங்கள் अङ्गமன்றென்றால் धर्मत्यागमङ्गமென்று சொன்னதாகாதோ? धर्मत्यागमङ्गமன்றாகில் प्रपन्नानां ''न धर्मनिष्ठोऽस्मि'' इत्याद्यनुसन्धानं विरोधिயாதோ? प्रपन्नனுக்கு आश्रमादिधर्मत्वेन धर्मानुष्ठानं தான் சொன்னது சேருமோ? அப்போது भक्तனுக்கும் वर्णाश्रमधर्मत्वेनाप्यनुष्ठेयமாகை யாலே இருவருக்கும் प्रपत्तिभेदमात्रமென்கிறதுவும் विरोधिயாதோ? என்னவருளிச் செய்கிறார். ஆகையால் इति । अशक्यங்களில் नैराश्यमाकिञ्चन्यानुप्रविष्टமாகையாலே ''न धर्मनिष्ठोऽस्मि'' इत्यादिகள் तदनुसन्धानरूपम्शक्यधर्मानुष्ठानं भक्तனுக்கு अङ्गत्वेन कैङ्कर्यत्वेन चानुष्ठेयम् । प्रपन्नனுக்கு कैङ्कर्यरूपमात्रமென்று கருத்து - இப்படி प्रपन्नனுக்கு कैङ्कर्यरूपमात्रமென்று சொன்னது கூடுமோ? प्रपत्तिக்கு आनुकूल्यसङ्कल्पमङ्गமானபடியாலே

---

(सा.प्रः) ''भावाभावौ न धर्माणां प्रपत्तेरङ्गमिष्यते । स्वतन्त्रशिष्ट्यशक्येहाशेषाभावोऽधि कारगः'' इत्युक्तरीत्या धर्मानुष्ठानतत्त्यागयोरुभयोरपि प्रपत्त्यङ्गत्वाभावादशक्यत्यागोऽधिकार इति वक्तुं शक्यं सर्वं कार्यमेवेत्याह । இத் धर्मங்களுக்கு इत्यादिना । ननु नैरपेक्ष्यविधियक्षेऽप्यानुकूल्यसङ्कल्प-स्याप्यङ्गत्वात्तस्य चानुकूलानां हितानामनुष्ठापकत्वात्तेषामङ्गत्वम परि -

---

(सा.विः) एवं चाङ्गत्वेन त्यागेऽपि नित्यत्वेन प्राप्तधर्मस्वरूपस्य निवारकाभावान्नानुष्ठानत्यागः प्रपन्नानामित्याह । இத் धर्मங்களுக்கு इति -தவிர்ந்தால், विद्यासहकारित्ववेषस्य त्यागेऽपि ''स्वतन्त्रशिष्ट्याशक्येह'' इति पूर्वोक्तार्थं स्मारयति । ஆகையால் इति । धर्मங்களினுடைய इति । नन्वानुकूल्यसङ्कल्पस्य प्रपत्त्यङ्गत्वात्तस्य च विहिताचरणसङ्कल्परूपत्वाद्विहिताचरणस्यापि -

---

(सा.सं:) இத் धर्मங்களுக்கு इति - त्यज्येत्यादेर्निर्वारकत्वाभावस्य उपपादितत्वादिति भावः - इत्थं परपक्षनिरसनस्वपक्षोपपादनाभ्यां धर्माणामनुष्ठानवत्त्यागोऽपि न प्रपत्त्यङ्गमिति फलितं सूचयन् संभावितमशक्याननुष्ठानं शक्यानुष्ठानं च तर्हि कथमस्मिन्नधिकारिण्युपयुज्यत इत्यत्रोत्तरमाह - ஆகையால் इति - नन्वानुकूल्यसङ्कल्पाङ्गकत्वबलाद्यथासङ्कल्पकरणस्याङ्गत्वे -

**मूः - सङ्कल्पमात्रमेवाङ्गं - श्रुतमाचरणं पुनः ।**
**अनङ्गमाज्ञया प्राप्तं न सङ्कल्पनिबन्धनम् ।।**

(सा.दीः) धर्माचरणத்துக்கு प्रपत्त्यनङ्गत्वे हेत्वन्तरமுண்டென்கிறார். सङ्कल्पमात्रमिति । प्रपत्तिயில் धर्माणां आचरणसङ्कल्पमात्रमेवाङ्गत्वेन श्रुतम् । "आनुकूल्यस्यसङ्कल्पः" என்னுமிவ் वचनத்தால். आचरणं तु आज्ञया प्राप्तम् । आज्ञैயாவது? विधि - सङ्कल्पप्रयुक्तமன்று. ஆகையால் प्रपत्तिக்கு अङ्गமுமன்று- இத்தால் आज्ञाकैङ्कर्यமெல்லாம் स्वविधि प्रयुक्तங்களென்றதாயிற்று. ननु कैङ्कर्यमा-ज्ञासिद्धமென்றீர். ஆகில் नित्यनैमित्तिकங்களில் अन्तर्भविயாத अनुज्ञाकैङ्कर्यத்தில் प्रवृत्तिகூடாதே போம். मोक्षोपायமாகவாதல், तदङ्गமாகவாதல், आज्ञासिद्धமாகவாதல், प्रायश्चित्तமாகவாதல், स्वर्गपश्वादिकाम्यार्थமாகவாதல், द्यूतभोजनादिवल्लोकसिद्धस्वसुखार्थமாகவாதலிறே ஒன்றை अनुष्ठिப்பது - அதொன்றுமிங்கில்லை मुक्तரைப்போலே भगवत्प्रीत्यर्थकமாகவும் கூடாது. அவர்களைப்போல இது भगवत्प्रीतिहेतुவென்றறியப்போகாமையாலென்னும் अभिप्रायத்தாலே शङ्किக்கிறார்.

(सा.स्वाः) सङ्कल्पितधर्मानुष्ठानமும் अङ्गமாக प्राप्तமாகையால் இவனுக்கும் उभयरूपेणानुष्ठेयமன்றோ? என்னவருளிச் செய்கிறார். सङ्कल्पमात्रमिति सङ्कल्पमात्रमेवाङ्गम्, अङ्गतया श्रुतम् । आचरणं पुनः, आचरणंतु - अनङ्गम्, अङ्गताग्राहकश्रुत्याद्यभावादिति भावः । तर्हि तस्य किमनुष्ठापकमि-त्यत्राह-आज्ञयेति । स्वतन्त्र विधिरेव तदनुष्ठापकइत्यर्थः - आज्ञया प्राप्तमाचरणं न सङ्कल्पनिबन्धनम् । सङ्कल्पेनाङ्गभूतेन सप्रयोज्यमित्यर्थः - இப்படியாகில் नित्यनैमित्तिकங்கள் स्वतन्त्रविधिप्रयुक्तங் களாய்க்கொண்டு अनुष्ठेयங்களானாலும் नित्यनैमित्तिकेष्वन्तर्भावयितुमशक्यங்களான प्रभूतकैङ्कर्य शब्दितानुज्ञाकैङ्कर्यं प्रपन्नருக்கு अनुष्ठेयங்களாகக் கூடுமோ? तदनुष्ठान प्रयोजकமில்லையே? என்று शङ्किக்கிறார்.

(सा.प्रः) हार्यमिति तेषामङ्गत्वाभावोक्तिरनुचितेत्यत्राह-सङ्कल्पमात्रमित्यादिना । आज्ञयेति, विहितत्वादित्यर्थः । नन्वेवं प्रपत्तेस्सर्वधर्मनिरपेक्षत्वे प्रपन्नैरेव श्रीपरकाल भाष्यकारादिभिर्भागवतैर्बहु-वित्तव्ययायाससाध्यभगवदावासनिर्माणभागवताराधनादीनां नित्यनैमित्तिकबहिर्भूतानामनुष्ठानं न स्यात् - प्रयोजकाभावादित्यत्र प्रतिपन्नानां प्रयोजकानां-

(सा.विः) प्रपत्त्यङ्गत्वमवर्जनीयमित्यत आह सङ्कल्पमात्रमेवाङ्गमिति - श्रुतमिति- "आनुकूल्यस्य सङ्कल्प इति" सङ्कल्पस्यैवाङ्गत्वं श्रुतम् न त्वनुष्ठानस्येति भावः - ननु सङ्कल्पस्याङ्गत्वे सङ्कल्पस्यानुष्ठा-पकत्वादनुष्ठानस्याप्यङ्गत्वं स्यादेवेति चेन्न - उपनयनकाले "कर्म कुरु मासुषुप्था" इत्युपदेशे बाढमित्युक्त-सङ्कल्पस्योपनयनाङ्गत्वेऽपि नित्यविधिप्रयुक्तकर्मानुष्ठानस्योत्तरकालीन स्योपनयनाङ्गत्वाभावात्तद्वदुपपत्तेः । आचरणं पुनः, अनुष्ठानम् । आज्ञया प्राप्तम्, नित्यविधिसिद्धम् । न सङ्कल्पनिबन्धनम्, सङ्कल्पप्रयुक्तं न भवति । यथोपनयनोत्तरं सन्ध्यावन्दनादिकं नबाढमिति सङ्कल्पवशात्क्रियते ।

(सा.संः) प्रपदनाङ्गमेव नित्यादिकमापतितमित्यत्राह-सङ्कल्पमात्रमिति मात्रशब्दार्थमेवानुवदत्येवकारः - अनङ्गस्य प्राप्तिः कथमित्यत्राह-आज्ञयेति - यथोपनीतस्य उत्तरकालकर्मानुष्ठानं न बाढमित्युपनय नाङ्गसङ्कल्पनिबन्धनम् - किन्त्वाज्ञयैव प्राप्तं तथेहापीति भावः-यदि यथा सङ्कल्पकरणमपि प्रपत्त्यङ्गतया नेष्यते तर्हि बहुवित्तबह्वायाससाध्यानुज्ञाकैङ्कर्यप्राप्तिर्नस्यादिति शङ्कते ।

**मूः - இப்படியாகில் இவனுக்கு नित्यनैमित्तिकங்களில் அடைக்கவொண்ணாத प्रभूतकैङ्कर्यங்களுக்கு प्रयोजकராரென்னிலிவையிவனுக்கு उपायान्तरத்திற் புகுராது. अङ्गान्तरनिरपेक्षैயான प्रपत्तिக்கு परिकरங்களுமாகாது.**

(सा.दीः) இப்படியாகில் इत्यादिயால். प्रभूतकैङ्कर्यங்களாவன? अनुज्ञाकैङ्कर्यங்கள்- இதில் पक्षान्तरங்கள் கூடாவிடிலும் भगवत्प्रीत्यर्थமென்னும் चरमपक्षं கூடுமென்கிறார். இவையிவனுக்கு इत्यादि शास्त्रं கைவிளக்காக प्रवृत्तिக்கிறான் इत्यन्तத்தால் उपायान्तरத்தில் अन्तर्भविயாது. मोक्षार्थமாக अनुष्ठिயாமையால் प्रपत्तिக்கு अङ्गங்களுமாகாது. प्रपत्तिनिरपेक्षोपायமாகையால் नित्यतयाசெய்கிறானுமல்லன்.

(सा.स्वाः) இப்படியாகில் इति प्रभूतेति । अनुज्ञाकैङ्कर्यமென்றபடி. अनुज्ञाकैङ्कर्यं प्रपत्तिயில் अविश्वासத்தாலே उपायान्तरत्वबुद्ध्या अनुष्ठेयமோ? प्रपत्त्यङ्गतयानुष्ठेयமோ? अकरणे प्रत्यवाय भीत्यानुष्ठेयமோ? पापक्षयफलकतया प्रायश्चित्तरूपत्वेनानुष्ठेयமோ? स्वर्गार्थतयानुष्ठेयமோ? द्यूतादिवत्स्वयं प्रयोजनतया वा? मुक्तादिवत्प्रत्यक्षेण भगवदभिमतं विदित्वा तत्प्रीत्यर्थमनुष्ठेयமோ? என்று विकल्पिத்து ஒரு प्रकारமும் கூடாதென்று सिद्धान्तिதானே पूर्वपक्ष्यभिप्रायोन्नयनेन परिशेषिப்பித்து மற்றெங்ஙனேயென்னில் इत्यादिना प्रश्नपूर्वकமாக उत्तरமருளிச்செய்கிறார். इत्यादिना ।

(सा.प्रः) प्रपन्नानर्हत्वं प्रदर्शयन् प्रपन्नोचितं प्रयोजकमाह - இப்படியாகிலிவனுக்கு इत्यादिना ।

(सा.विः) किन्तु ''अहरहस्सन्ध्यामुपासीत'' इति विधिबलात्तद्वदिति भावः । ननु नित्यनैमित्तिककर्मणां स्वतन्त्राज्ञासिद्धानां स्वविधिप्रयुक्तत्वादनुष्ठानं स्यात् - अनुज्ञाकैङ्कर्याणां तु भगवन्मन्दिर, गोपुर, प्राकार, मण्डपादिनिर्माणानां भागवताराधनादीनां चानुष्ठापकाभावात् - तथाहि? किं युक्त्युपा यत्वेन वा? अकरणे प्रत्यवायकरत्वेन वा? स्वर्गपश्वादिफलसाधनकाम्यकर्मत्वेन वा? द्यूतादिवत्स्व प्रीत्यर्थत्वेन वा? मुक्तवद्भगवदभिप्रायप्रत्यक्षेण वेतीह एकमपि नास्ति । नचाननुष्ठानमिष्टापन्नं, परकाल श्रीभाष्यकारादिभिर्बहुवित्तव्ययायाससाध्यानुज्ञाकैङ्कर्याचरणं कृतमिति प्रसिद्धेरित्यभिप्रायेण शङ्कते- இப்படியாகில் इति - இப்படியாகில், नित्यनैमित्तिकानामाज्ञासिद्धत्वेनानुष्ठानं चेदित्यर्थः - அடைக்கவொண்ணாத, गृहीतुमयोग्यानाम् । तत्रानन्तर्भूतानामित्यर्थः । प्रभूतकैङ्कर्यங்களுக்கு गोपुरमण्डपादि निर्माणानाम् - प्रयोजकர், प्रयोजकाः- प्रयोजकान्तरप्रदर्शनेन परिहारमाह । இவை इति - இவை, अनुज्ञाकैङ्कर्याणि - இவனுக்கு, प्रपन्नस्य - उपायத்தில்புகுராது, उपायकोटौ न प्रविशन्ति । उत्तरकालं निर्भरत्वेन मोक्षार्थमनुष्ठानासम्भवादिति भावः । अङ्गान्तरनिरपेक्षेति हेतुगर्भविशेषणम् - अत एव तेषामङ्गत्वं न सम्भवतीति भावः ।

(सा.संः) இப்படியாகில் इति - प्रयोजकர், प्रवर्तकाः - आज्ञाबहिर्भूतत्वेन आज्ञया अप्रवर्तकत्वादिति भावः । परिशेषात्स्वरुचि भगवत्प्रीणनाभिसन्ध्योः प्रवर्तकत्वं वक्ष्यन् सम्भावितानि प्रयोजकान्तराण्यपाकरोति - இவை इत्यादिना ।

मूः - अकरणத்தில் ईश्वरன் வெறுக்குமென்று செய்கிறானுமல்லன். தனியே யிவை தனக்கொரு पापक्षय, स्वर्ग, पशु, पुत्रादि फलान्तरத்தை आशैப்பட்டுச் செய்கிறானுமல்லன்- लौकिकரானவர்கள் द्यूतादिகள் பண்ணுமாப்போலே केवलं தன்னுகப்பாலே प्रवर्तिக் கிறானுமல்லன். मुक्तरैப்போலே भगवदभिप्रायத்தை प्रत्यक्षமாகக்கண்டு அவனை உகப்பிக் கைக்கு प्रवर्तिக்கிறானுமல்லன். மற்றெங்ஙனேயன்னில்? இக் कैङ्कर्यங்களுக்கும் फलान्तरங்கள் போலே भगवत्प्रीतिயும் फलமாக शास्त्रसिद्धமாகையாலே அவனுகப்பிலே सर्वोत्तरனான தன் प्रकृतिस्वभावத்தாலே रुचिபிறக்கையாலே सुहृत्पुत्राद्युपलालनங்களிற்போலே सर्वविधबन्धुவானவனுடைய प्रीणनங்களிலே शास्त्रं கைவிளக்காக प्रवर्तिக்கிறான்-

(सा.दीः) अकरणத்தில் प्रत्यवायமில்லாமையால்- काम्यங்களுமன்று- இவனுக்கு काम्यकर्म निषिद्धமாகையால் द्यूतादिகளைப்போலே लीलारूपங்களுமன்று- அப்படிச்செய்யக்காணாமை யால். பின்னையெப்படிச் செய்கிறானென்னில் प्रश्नपूर्वकமாகவருளிச்செய்கிறார்- மற்றெங்ஙனேயென்னில் इत्यादिயால்- भगवत्प्रीतिயில் रागத்தால் प्रवृत्तिக்கிறான். रागं தான் सत्त्वगुणोन्मेषத் தாலுண்டாயிற்று. இக் कैङ्कर्यத்தினுடைய भगवत्प्रीतिहेतुत्वं प्रत्यक्षगम्यமாகாவிட்டாலும் शास्त्रத்தால் ज्ञातமாயிற்றென்கை.

(सा.स्वाः) மற்றெங்ஙனேயென்னில் इति - பின்னையெப்படி अनुष्ठिக்கிறானென்னிலென்ற படி- भगवत्प्रीतिயும் शास्त्रसिद्धफलமாகில் सर्वருக்கும் स्वर्गादिகளிற்போலே रुचिபிறக்க வேண்டாவோ? என்னவருளிச்செய்கிறார். அவனுகப்பிலே इति । बद्धचेतनतया शेष्यभिमतं ज्ञातुमशक्यமாகையாலே तत्साधनत्वமறியக்கூடுமோ? என்னவருளிச்செய்கிறார். शास्त्रं கைவிளக்காக इति இப்படி वर्णाश्रमधर्मं तत्तद्विधि प्रयुक्तமாக कैङ्कर्यरूपतयानुष्ठेयமென்றும்.

(सा.प्रः) शास्त्रसिद्धமாகையாலே इति - "यस्तु कारयते भूमौ विष्णोराराधनानि वै । तस्य तुष्टो भवेद्विष्णुस्सर्वलोकेश्वरः प्रभुः । शुभेत्वसौ तुष्यति दुष्कृतेतु न तुष्यतेऽसौ परमश्शरीरी । अनादृतसुतं गेही पुरुषं नाभिनन्दति ।। तथानर्चितसद्भक्तं भगवान्नाभिनन्दति । मम मद्भक्त भक्तेषु प्रीतिरभ्यधिका भवेत् । तस्माद्विष्णुप्रसादाय वैष्णवानेव तोषयेत् इत्यादिप्रमाणैस्सिद्धा केवलभगवत्प्रीतिरेव प्रयोजिकेत्यर्थः ।

(सा.विः) வெறுக்குமென்று, निगृह्णीयादिति - செய்கிறானுமல்லன், अनुष्ठाता न भवति - आज्ञारूपविधिसिद्धत्वाभावादिति भावः - पापक्षयेति, प्रायश्चित्तार्थतया विध्यभावादिति भावः । स्वर्गपश्विति, प्रयोजनान्तरस्य निषिद्धत्वादिति भावः - द्यूतादीति । परतन्त्रचेतनस्य स्वार्थभोगनिषेधादिति भावः - मुक्तரைப்போலே इति - प्रवर्तिக்கிறான், प्रवृत्तः । அல்லன் न भवति । तर्हि कथमनुष्ठानमिति प्रश्नपूर्वकं शास्त्रगम्या भगवत्प्रीतिरेव फलमित्याह - மற்றெங்ஙனேயென்னில் समुच्चयोऽधिकार्यन्तस्थितस्स्वर्गपश्वादि फलान्तरैस्सहेति ध्येयम् - प्रकृतिस्वभावத்தாலே, रुचि பிறக்கையாலே, रजोगुणप्राबल्ये यथा सुहृत्प्रियापुत्रादीनां पराप्रीतिर्भूयादित्यभिलाषो जायते - तथा सत्त्वगुणप्राबल्याद्भगवतोऽपि प्रीतिर्भूयादिति रुचिर्जायते इति भावः - प्रीतिप्रयोजनत्वेन प्रवृत्तावपि शास्त्रमुखेन प्रीतिं ज्ञात्वा प्रवर्तेतेत्यभिप्रायेणोक्तम् । शास्त्रं கைவிளக்காக इति ।

(सा.सं:) வெறுக்கும், कुप्यति - परप्रीतिमात्रोद्देशेन प्रेक्षावतः कथं प्रवृत्तिरुपपद्यत इत्यत्राह - सत्त्वोत्तरனான इति - प्रकृतेरयमेव स्वभावः यत्स्वप्रयोजनप्राधान्यमनादृत्य स्वामिप्रीत्यादिप्रयोजन प्रधानत्वमित्यभिप्रेत्य प्रकृतिस्वभावத்தாலே इत्युक्तम् । अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।

**मूः** - இவ்விடத்திலே சிலர் **सर्वेश्वर**ன் பக்கலிலே **सर्वभरन्यासं**பண்ணின **विवेकि**க்கு **त्याज्योपादेयविभागनिर्णायकं स्वरूपज्ञान**மன்றோ?

(सा.दीः) இனியிவன் स्वरूपवश्यனாய் போருமதொழிய இவனுக்கு शास्त्रवश्यतैயில்லையென்னு மவர்கள் शङ्कैயை अनुवदिக்கிறார்- இவ்விடத்தில் इत्यादियால்- அத்தை प्रतिवदिக்கிறார்.

(सा.स्वाः) अनुज्ञाकैङ्कर्यं भगवत्प्रीणनமென்றும் शास्त्रमुखமாகவறிந்து अनुष्ठेयமென்றும் சொன்னது கூடுமோ? स्वरूपंதெளிந்த प्रपन्नனுக்கு स्वरूपवश्यतैயொழிய शास्त्रवश्यतैயுண்டோ? ஆகையால் स्वरूपत्यागविधिपक्षமே समीचीनமன்றோ? என்ற एकदेशिपक्षத்தை अनुवदिத்து निरसिக்கிறார்- இவ்விடத்தில் इत्यादिना । இவ்விடத்தில், शास्त्रमूलமாக आज्ञानुज्ञाधर्मानुष्ठानपक्षத்திலென்றபடி.

(सा.प्रः) ननु भगवदनन्यार्ह शषेत्वानन्य शरणत्वानन्य प्रयोजनत्वरूप स्वरूपज्ञानवतो यथानन्यशरणत्व-रूपाशक्तिज्ञानमेव कर्मज्ञानभक्तिप्रपत्तिषु प्रपत्त्युपादाने तद्व्यतिरिक्तत्यागे च नियामकं तथा पुरुषार्थेऽप्यनन्यप्रयोजनताख्यस्वरूपज्ञानमेव त्याज्योपादेयविवेकनियामकमस्त्वित्यत्र अशक्तत्वरूप-स्वरूपे ज्ञातेऽपि यथाऽशक्तस्य भरन्यास उपायो नेतरस्येति ज्ञानाभावे भरन्यासे स्वरूपतदङ्गादिज्ञानाभावे च तदुपादानं न सम्भवतीति तद्ज्ञानं शास्त्रादेव सम्पादनीयं तथा स्वगतानन्यशेषत्वानन्यप्रयोजनत्वादि ज्ञानेन शेषिप्रीतिजनकानामेव कार्यत्वावगमेऽपि कर्मविशेषेषु भगवत्प्रीत्यैकफलकत्वस्य इतरेष्वप्रीति फलकत्वस्य प्रामाणिकस्य प्रपन्नेनापि यावच्छरीरपातं शास्त्रमन्तरेण ज्ञातुमशक्यत्वात्स्वरूपज्ञानस्य च तादृशविभागाविषयत्वाच्छास्त्रं विहाय स्वेच्छयानुष्ठाने निषिद्धानुष्ठानस्यापि कैङ्कर्यत्वं प्रसजेदिति तत्परिहाराय शास्त्रवश्यत्वमपरिहार्यमित्याह இவ்விடத்தில் इत्यादिना

(सा.विः) ''यस्तु कारयते भूमौ विष्णोराराधनानि वै । तस्य तुष्टो भवेद्वित्णुस्सर्वलोकेश्वरः प्रभुः । मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् । तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः'' इत्युक्तशास्त्रं गृहीत्वेत्यर्थः । ननु अनुज्ञाकैङ्कर्याणामपि शास्त्रमूलकत्वाच्छास्त्रस्य भगवदाज्ञारूपत्वादा-ज्ञाकैङ्कर्यादनुज्ञाकैङ्कर्यस्य को भेद इति चेत्? इत्थमेषु प्रधानविधिषु अकरणे निग्रहो बोध्यते तदाज्ञारूपं निग्रहज्ञापकम् । ''अहरहस्सन्ध्यामुपासीत । वसन्तेवसन्ते ज्योतिषा यजेत'' इत्यादि वीप्सादिकं अनिष्ठफलश्रवणादिकं च- यत्राकरणेऽनिष्ठं न ज्ञाप्यते, करणे च प्रीत्यादिकं फलं ज्ञाप्यते, तदनुज्ञारूपमिति - अनुज्ञाकैङ्कर्येष्वपि क्रमव्यत्यासादिष्वनिष्ठफलबोधनात्प्रधानविधिष्वित्युक्तम् - तत्र शास्त्ररीत्यैवानुज्ञाकैङ्कर्याण्यपि कर्तव्यानीत्युक्ते परशेषत्वस्वरूपज्ञानवतस्स्वरूपज्ञानेनैव त्याज्योपादेयविभागज्ञानाच्छास्त्रं किमर्थमिति केषाञ्चिच्छङ्कामाक्षिप्य परिहरति-இவ்விடத்திலே इति ।

(सा.सः) दानं दमश्च यज्ञश्च स्वाध्याय स्तप आर्जवम् । अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् । दयाभूतेष्वलोलत्वं मार्दवं ह्रीरचापलम् । तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता । भवन्ति सम्पदं दैवीमभिजातस्य भारत ।।'' इत्यादिकमिहानुसन्धेयम् -இவ்விடத்தில், शास्त्रं கைவிளக்காக इत्यवकाशे ।

**मूः** - இப்படி இவன் **स्वरूपवश्य**னாமத்தனை போக்கி **शास्त्रवश्य**னாம்படியென்னென்று சொல்லுவார்கள்- இதுவும் **अनुपपन्नम्** எங்ஙனேயென்னில்? **स्वरूपं**இப்படியிருக்குமென்று **शास्त्र**த்தைக்கொண்டு அறுதியிட்டால் இஸ் **स्वरूप**த்துக்கு இன்ன **पुरुषार्थ**மும், **तदुपाय**மும் **त्याज्य**ம்- இன்ன **पुरुपार्थ**மும், **तदुपाय**மும், **उपादेय**மென்று பிரித்து தெளிகைக்கு **मुक्त**னாமளவும் **शास्त्र**மொழியவழியில்லை. **स्वरूप**த்தில் **शेषत्वादि**களைக்கொண்டு சில **औचित्यमात्र**ம் அறியலாம். இத்தனையல்லது **शेषि**யுகந்த **कैङ्कर्य**த்தின் **प्रकार**மிது, இக் **कैङ्कर्य**த்துக்கு **उपाय**ங்கள் இவை, என்று **स्वरूपज्ञानं नियमि**த்துக்காட்டாது. ஆனபின்பு **शास्त्र**த்தை **अनादरि**த்து **निषिद्धद्रव्य**ங்களைக் கொண்டாதல், **विहित**ங்கள் தன்னிலும் **न्यायार्जित** மல்லாத **द्रव्य**ங்களைக்கொண்டாதல், தனக்கு **रुचि**த்தபடியே **शास्त्रविरुद्ध**மாயிருக்கும் கட்டளையிலே **कैङ्कर्य**த்தை நடத்தப்பார்த்தால் **उपचारापचार** ங்களுக்குப் பிரிவில்லையாம்.

---

(सा.दीः) இதுவும் इत्यादि । स्यरूपज्ञानार्थं शास्त्रार्थத்தை अपेक्षिக்கில் त्याज्योपादेयविभागार्थமும் शास्त्रमपेक्षणीयமென்கிறார். स्वरूपமின்னபடி इत्यादिயால். स्वरूपज्ञानத்தால் तदुचितपुरुषार्थं कैङ्कर्यமென்றறியலாம்? என்னவருளிச் செய்கிறார். स्वरूपத்தில் इत्यादिயால் स्वरूपधर्मभूत-शेषत्वादिகளென்கை. औचित्यमात्रं, शेषभूतனுக்கு शेषिயுகப்பை अनुवर्तिக்கையே उचितமென்றும் இம் मात्रமென்கை. शेषिக்கு இன்னது इष्टम्, இதுக்கிவை उपायங்களென்று विशिष्यக் காட்டமாட்டாது शेषत्व ज्ञानम् - शास्त्रமேயிதுக்கு नियामकமென்கை. शास्त्रानादरத்தில் उपचारा-पचारविभाजकशास्त्रं व्यर्थமாமென்கிறார். ஆனபின்பு इत्यादि ।

---

(सा.स्वाः) स्वरूपेति - स्वर्गादि पुरुषार्थं स्वरूपविरुद्धतया त्याज्यமென்றும், भगवत्कैङ्कर्यं स्वरूपानुगुणतया उपादेयமென்றும் சொல்லுகையாலே त्याज्योपादेयविभागनिर्णायकं स्वरूपமே என்று கருத்து. पुरुषार्थतदुपायं शास्त्रैक समधिगम्यமாகில் स्वरूपानुगुण पुरुषार्थव्यवस्थै சொல்லுகிறது கூடுமோ? என்னவருளிச் செய்கிறார். स्वरूपத்தில் इति - स्वरूपनिष्ठशेषत्वादिகளைக் கொண்டென்றபடி- औचित्येति । शेषभूतனுக்கு शेषिயுகப்பை अनुवर्तिக்கை उचितமென்று एतावन्मात्रமறியலாமென்றபடி- இனி साधकமில்லை என்று சொல்லி बाधकமுமருளிச் செய்கிறார். ஆனபின்பு इति ।

---

(सा.विः) स्वरूपवश्यानां स्वरूपज्ञानाधीनो भवति - अतस्स्वरूपोचितं कर्म कुरुते । அத்தனைப் போக்கி, स्वरूपज्ञानं विहाय । शास्त्रवश्यனாம்படி, शास्त्रवश्यो भवेदित्येतत्प्रकारः -பிரிவு, विभागस्य -தெளிவுக்கு, ज्ञानाय मुक्तனாமளவும், मुक्तिपर्यन्तम् - शास्त्रं विहाय यथेच्छं भगवत्प्रीतिकरणप्रवृत्तौ उपचारापचारविभाजकशास्त्रविरोधस्स्यात् - ''इमे उपचारा - इमे अपचाराः'' इति विभागो न स्यात् - स्वरुचिवशेन भगवत्प्रीतिहेतुत्वे उपचाराभावादित्यनिष्टमाह । ஆனபின்பு इति । ननु ''आत्मनो यत्प्रियं भोज्यं तत्सर्वं विनिवेदयेत् ।''

---

(सा.संः) स्वरूपज्ञस्स्वरूपवश्य एव - तस्य स्वरुच्यनुगुणमेव कैङ्कर्यं किं शास्त्रादरेणेति केचित् । तत्पक्षे बाधकान्याह । இதுவும் इत्यादिना । औचित्यमात्रमिति - शेषभूतस्य शेषिप्रीतये अनुवर्तनमुचितमित्येतावन्मात्रमित्यर्थः - नियमिத்து निर्देश्य -

**मू:** - அப்போது தன் **रुचि**யொழிய வேறு **नियामक**மில்லாமையாலே **मुमुक्षु**க்கள் தவிர்ந்து போருகிற **सर्वनिषिद्ध**ங்களையும் தன் **रुचिमात्र**த்தாலே **कैङ्कर्य**மாக **अनुष्ठि**க்கப் **प्रसङ्गि**க்கும். **हविर्निवेदन**த்திலும் **श्रीभाष्यकार**ர் **''शास्त्राविरुद्धानि सम्भृत्य''** என்று அருளிச் செய்தார். ஆகையால் **शास्त्रवश्य**னாய் தன் **अधिकार**த்துக்கு **शास्त्र**மடைத்த **कैङ्कर्य**ங்களையே பண்ண **प्राप्तम्**

**''तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।।''**

என்ற **उपदेशं सर्वाधिकारि**களுக்கும் பொதுவாயிருக்கும்.

---

(सा.दीः) इत्यादिயால். पूर्वानुष्ठानविरोधமும் प्रसङ्गिக்கிறார்- அப்போது इत्यादिயால். प्रपन्नன் शास्त्रवश्यனாயேயிருக்க வேணுமென்னுமிடத்தில் श्रीभाष्यकारसंमतिயைக் காட்டுகிறார்- हविर्निवेदनத்திலும் इत्यादिயால் - शास्त्रवश्यனாகவேணுமென்னுமத்தை निगमिக்கிறார்- ஆகையால் इत्यादि - இவ் अर्थத்தில் भगवद्गीतावचनத்தைக் காட்டுகிறார் - तस्माच्छास्त्रमिति । कार्याकार्यविभागे என்றபடி - இவ் उपदेशम् अप्रपन्नविषयமென்னும் चोद्यத்தை परिहरिக்கிறார். सर्वाधिकारिகளுக்குமென்று - अधिकारविशेषं சொல்லாமையாலென்று கருத்து. श्रीगीतार्थसङ्ग्रहத்தில் ''निजकर्मादि भक्त्यन्तं कुर्यात् प्रीत्यैव कारितः'' என்ற இடத்தில்-

---

(सा.स्वाः) इष्टापत्तिயென்னில் शिष्टाचारविरोधरूपानिष्टமருளிச் செய்கிறார். அப்போது इति - இந்த पक्षத்தில் श्रीभाष्यकारोक्तिविरोधமும் வருமென்கிறார். हविर्निवेदनத்திலும் इति - शास्त्रवश्यतास्थापनத்தை उपसंहरिக்கிறார். ஆகையால் इति - இப்படியாகில் ''तस्माच्छास्त्रं प्रमाणं ते'' என்று श्रीगीताचार्यன் अधिकारिविशेषத்திலே शास्त्रवश्यत्वத்தை उपदेशिக்கிறது विरोधिயாதோ? என்னவருளிச் செய்கிறார்- तस्मादिति । उपदेशमिति । साभिप्रायमुपदेशமாகையாலே ते ते என்று अधिकारविशेषनिर्देशं பண்ணினாலும் मन्वाद्युपदेशं போலே सर्वसाधारणமென்றபடி - ஆனாலும் ஆளவந்தார் श्रीगीतार्थसङ्ग्रहத்தில் ''कुर्यात् प्रीत्यैव कारितः'' என்று शास्त्रवश्यतैயை एवकारத்தாலே व्यवच्छेदिக்கவில்லையோ?

---

(सा.प्रः) ननु भगवच्छास्त्रे ''आत्मनो यत्प्रियं भोज्यं तत्सर्वं च निवेदयेत्'' इत्यादिभिस्स्वेष्टस्य सर्वस्य भगवन्निवेदनार्हत्वोक्तेर्निषिद्धस्यापीष्टत्वसम्भवादशास्त्रीयेणापि कैङ्कर्यं कर्तव्यमेवेत्यवगम्यत इति भागवतानां न शास्त्रवश्यत्वमित्यत्र, श्रीभाष्यकारैस्तस्य शास्त्राविरुद्धसर्वविषयकत्वोक्तेश्शास्त्रवश्यत्वमपरिहार्यमित्यभिप्रयन्नाह । हविर्निवेदनத்திலும் इत्यादिना - सर्वधर्मान् परित्यज्येति त्यागविधिबलात् प्रपन्नानां शास्त्रवश्यत्वाभावोक्तिः पूर्वोक्तव्याघातप्रसङ्गबाधितत्वात् न युक्तेत्यभिप्रयन् शास्त्रवश्यत्वाभावे वचनविरोधमप्याह । तस्मादित्यादिना । ननु गीतार्थसङ्ग्रहे परमैकान्तिनां प्रपन्नानां प्रीतेरेव कैङ्कर्यप्रवृत्तौ प्रयोजकत्वोक्तेश्शास्त्रवश्यत्वाभावो -

---

(सा.विः) इति भगवच्छास्त्रोक्तेर्निषिद्धद्रव्यस्याप्यात्मप्रियत्वे निवेद्यत्वमेवेति कथं परिहार्यत्वमित्यत्र शास्त्रनिषिद्धत्वाभावे सति आत्मनो यत्प्रियमिति तत्तात्पर्यम् - अत एव श्रीभाष्यकारैर्निवेदने ''शास्त्राविरुद्धानि सम्भृत्य''इत्युक्तमिति तत्सम्मतिं वदन् तेषां तद्विरोध माह - हविर्निवेदनத்திலும் इति । ननु तत्परमाचार्यैः ''कुर्यात् प्रीत्यैव कारितः'' इत्यवधारणेन प्रीतिव्यतिरिक्तशास्त्रनियमस्य व्यवच्छेदः कृत इति तद्विरोध इत्यत आह -

मूः - ஆளவந்தார் श्रीगीतार्थसङ्ग्रहத்திலே-
''ज्ञानी तु परमैकान्ती परा(तदा) यत्तात्मजीवनः ।
तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः ॥
भगवद्ध्यानयोगोक्तिवन्दनस्तुतिकीर्तनैः ।

(सा.दीः) प्रीत्यैव என்று शास्त्रமன்றோ व्यवच्छेदिக்கப்படுகிறது? என்னவருளிச் செய்கிறார்- ஆளவந்தார் इत्यादिயால்.

(सा.स्वाः) என்னவருளிச் செய்கிறார்- ஆளவந்தார் इति । अत्र गीतार्थसङ्ग्रहरक्षा- ''ज्ञानी, ज्ञानी त्वात्मैव मे मतम्'' इत्युक्तः - परमश्चासावेकान्ती चेति परमैकान्ती - एकान्तिषु परम इत्यर्थः । परमः, एकान्तः । अनन्यत्वनिश्चयोऽस्तीति वा - न केवलमनन्यदेवताकत्वम्, अपितु अनन्यप्रयोजनत्वमप्यस्तीत्यर्थः - संश्लेषोऽत्र मनोवाक्कायसाध्यतदभिमतशास्त्रचोदित सपर्याद्यभिमुख्यम् । वियोगोऽपि तद्विच्छेदः - यथाहुर्महर्षयः । ''यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सा च विक्रिया ॥ एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रान्दितुं भृशम् ॥'' इति । तस्मिन्नेव धीःचिन्ता यस्य तदेकधीः । भगवद्ध्यानेति- ध्यानमिहानुचिन्तनम् - योगः, तन्मूलावलोकनम् । विशिष्टक्षेत्रादिवर्तिनः परस्याभिगमनं वा - यथाहुः । ''पादौ तदीयौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो यदीयौ'' इत्यादि । ''योगस्तु द्विविधः प्रोक्तो बाह्यमाभ्यन्तरं तथा । बाह्यं बहिःक्रियापेक्षमान्तरं ध्यानमुच्यते ॥'' इति

(सा.प्रः) यामुनाचार्याभिमत इति तद्दूषणेऽपसिद्धान्तस्स्यादित्यत्राह । ஆளவந்தார் इत्यादिना ।

(सा.विः) ஆளவந்தாரும் इति - अत्र पूर्वं ''ऐकान्त्यं भगवत्येषां समानमधिकारिणाम्'' इत्यैश्वर्याधिकारिणः कैवल्याधिकारिणो भगवदनुभवाधिकारिणश्च ऐकान्त्यमनन्यदेवताकत्वं साधारणरूपं ''चतुर्विधा मम जना भक्ता एव हि ते श्रुताः । तेषामेकान्तिनश्श्रेष्ठास्ते चैवानन्यदेवताः ॥'' इत्यनुगीतावचनानुसारेणोक्त्वा ''ये तु शिष्टास्त्रयो भक्ता फलकामा हि ते मताः । सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ॥'' इत्यनुगीतोक्तरीत्यैव मोक्षार्थिन अनन्यसाधारणाकारस्तदनुष्ठानादिकं चोक्तम् - ''ज्ञानी तु परमैकान्ती' इति । ज्ञानी । मोक्षार्थीत्यर्थः - परमैकान्ती, यावदात्मभाव्यैकान्ती - भगवदेकफलत्वात् । अनेनास्यानन्यप्रयोजनत्वं लब्धम् - अन्ये अधिकारिणो यावत्स्वाभिमतलाभमैकान्तिन इति न तेषां पारमैकान्त्यमिति भावः । अत्रेयं गीतार्थसङ्ग्रहरक्षा ''तदायत्तात्मजीवनः'' इत्यनेन ''ज्ञानीत्वात्मैव मे मतम् - मच्चित्ता मद्गतप्राणाः'' इति च स्मारितम् - परमश्चासावेकान्ती च परमैकान्ती । एकान्तिषु परम इत्यर्थः । परमैकान्तोऽनन्यत्वं अस्यास्तीति वा - न केवलमनन्य देवताकत्वम् - अपि त्वनन्यप्रयोजनत्वमपि अस्यास्तीत्यर्थः । संश्लेषोऽत्र मनोवाक्कायसाध्ये तदभिमतशास्त्रचोदितपरिचर्याप्रमुखः । वियोगोऽपि तद्विच्छेदः । यदाहुर्महर्षयः । ''एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिः मुषितेनेव युक्तमाक्रान्दितुं भृशम् ॥'' इति - तस्मिन्नेकस्मिन्नेव धीः चिन्ता यस्य तदेकधीः - भगवद्ध्यानेति - ध्यानमिहानुचिन्तनम् । योगः, तन्मूलमवलोकनम् ।-

(सा.सं:) प्रीत्यैव कारितः इति यामुनाचार्यैरेवोक्तेः प्रपन्नस्य न शास्त्रवश्यतेत्यत्राह -ஆளவந்தார் इति ।

मूः - **लब्धात्मा, तद्गतप्राणमनोबुद्धीन्द्रियक्रियः ।।**
**निजकर्मादि भक्त्यन्तं कुर्यात् प्रीत्यैव कारितः ।**

(सा.दीः) विहितातिक्रमத்தில் प्रत्यवायமுண்டென்னும் भीतिயில் காட்டில் स्वामिमुखोल्लासहेतुக்களானவவைகளில் வரும் स्वप्रीतिயினுடைய -

(सा.स्वाः) उक्तिः, शुश्रूषुभ्योऽधिकारिभ्यः प्रतिपादनम् । वन्दनम्, त्रिभिः करणैः प्रणाम इत्यर्थः । स्तुतिः, गुणकथनम् । कीर्तनं, तत्तदनुगुणविभवगर्भाणां तत्तदसाधारणानां नाम्नां कीर्तनम् - लब्धात्मा, अन्यथा अवस्तुभूतमात्मानमभिमन्यमान इति भावः - प्रशिथिलकरणकलेबरादिको भवेदिति वा - प्राणादीनां क्रियायास्तद्गतत्वं तदनुभावाभावे शैथिल्यादिति भाव्यम् । - अथवा ''यत्करोषि''इत्यादि प्रक्रियया स्वभावार्थशास्त्रप्राप्तानां कर्मणां भगवति समर्पणम् - मनस्सङ्कल्पविकल्प वृत्तिकमन्तः करणम् । तस्याध्यवसायात्मिकावृत्तिः बुद्धिः । अथवा तदेवात्राध्यवसायवृत्तिविशिष्टं बुद्धिरित्युच्यते - यथोक्तं शारीरकभाष्ये ''अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यवह्रियते'' इति । इन्द्रियशब्दोऽत्र गोबलीवर्दन्यायात् बाह्येन्द्रियविषयः । एवंविधस्याधिकारिणः ''सततं कीर्तयन्तो माम्'' इत्युक्तप्रक्रियया किं वर्णाश्रमधर्माणामपि लोपस्स्यादित्यत्राह । निजकर्मादीति । नित्यदास्यैकस्वभावस्य मुक्तस्यैवान्यापि तत्परिचरणं तदाज्ञानुवर्तनं प्रीत्यैवेत्यादेर्मूल एव स्पष्टोऽर्थः ।

(सा.प्रः) एतानि कैङ्कर्याणि स्वामिप्रीतिकराणीति प्रीत्यै कर्तव्यानि । नतु स्वामिप्रीत्यप्रधानतया स्वप्रीत्यित्यर्थः ।

(सा.विः) विशिष्टक्षेत्रादिवर्तिनः परस्याभिगमनं वा । यदाहुः- ''पादौ तदीयौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ'' इति - ''योगस्तु द्विविधः प्रोक्तो बाह्यमाभ्यन्तरं तथा । बाह्यं बहुक्रियापेक्षमान्तरं ध्यानमुच्यते'' इति - उक्तिः, शुश्रूषुभ्योऽधिकारिभ्यः प्रतिपादनम् । वन्दनम्, त्रिभिः करणैः प्रणामः - स्तुतिः, गुणकथनम् । कीर्तनं, तत्तद्गुणविभवचेष्टितादिगर्भाणां तदसाधारण नामधेयानां कीर्तनम् - लब्धात्मा, अवस्तुभूतमात्मानं अनभिमन्यमान इति भावः । प्रशिथिलकरणकलेबरादिको भवेदिति वा - प्राणादीनां क्रियायाः तद्गतत्वं तदनुभवाभावे शैथिल्यादिति भाव्यम्- ''यत्करोषि यदश्नासि'' इति न्यायाच्छास्त्रप्राप्तानां कर्मणां भगवति समर्पणं वा-मनः, सङ्कल्पविकल्पवृत्ति अन्तःकरणम् - तस्याध्यवसायात्मिका वृत्तिर्बुद्धिः । अथवात्राध्यवसायविशिष्टं बुद्धिरित्युच्यते - यथोक्तं शारीरकभाष्ये ''अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दरुच्यते'' इति । इन्द्रियशब्दोऽत्र गोबलीवर्दन्यायाद् बाह्येन्द्रियविषयः - एवंविधस्याधिकारिणः ''सततं कीर्तयन्तो माम्'' इत्याद्युक्तप्रक्रियया वर्णाश्रमधर्माणामपि लोपस्स्यादित्यत आह - निजकर्मादीति - नित्यदास्यैकस्वभावस्य मुक्तस्यैवास्यापि तत्परिचरणं तदाज्ञानुवर्तनं प्रीत्यैव यथाशास्त्रं यथाधिकारं यथावसरं च सर्वं घटते । अन्यथा ''सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु'' इत्यादिभिर्भगवदर्चनादावप्यनधिकारप्रसङ्गात् । तस्माद्योग्यतासिद्ध्यर्थं लब्धांशशैथिल्यपरिहारार्थं उत्तरोत्तरापचयार्थं

(सा.सं:) शास्त्रीयैरेव द्रव्यैश्शास्त्रोक्तविधयैव कृतमपि कैङ्कर्यं प्रेमविशेषमन्तरा कृतं चेन्न स्वामिसन्तोषं विशेषहेतुरिति -

**मूः - उपायतां परित्यज्य न्यस्येद्देवे तु तामभीः ।।''**

என்று அருளிச் செய்தவிடத்தில் **प्रीत्यैव कारितः,**என்றதுவும் **शास्त्रं** வேண்டாவென்ற படியன்று - இங்கு **शास्त्रं**கொண்டே அறியவேண்டுகிற **कैङ्कर्य** ந்தன்னில் **स्वामिसन्तोष-जनकत्व**மடியாக **शेषभूत**னான தனக்குப் பிறக்கிற **प्रीति**யினுடைய **प्रेरकत्वातिशयं** சொல்லுகையிலே **तात्पर्यम् ।**

(सा.दीः) प्रेरकत्वातिशयोपपादनத்திலே तात्पर्यமென்றபடி. இஃ श्लोकங்கள் उपासकविषयமாகவும் स्वतन्त्रप्रपन्नविषयமாகவும் योजिக்கையாயிருக்கையால் उपासकविषयமாம்போது

(सा.स्वाः) एवकाराभिप्रेतमन्यदपि विवृणोति । उपायतामिति - मुक्तव्यापारन्यायेन स्वयं स्वादुतमतया क्षणिकतया कालान्तराभाविफलसाधनत्वासम्भवाच्चेति भावः- अतस्तस्मिन्नेव मामेकं शरणं व्रजेति वक्तर्यैवोपायताबुद्धिः कार्येत्याह । न्यसेद्देवे तु तामभीरिति - प्रीतिயினுடைய इति - अकरणத்தில் शास्त्रबोधितप्रत्यवायजनकतानिमित्तभीतिயில் காட்டில் स्वामिसन्तोषहेतुतानिमित्तशेषभूतसप्रीति प्रेरकत्वमतिशयितமென்று கருத்து-ஆனாலுமிந்த ஆளவந்தார் कारिकाजातं भक्तियोगनिष्ठ-विषयமோ? प्रपन्नविषयமோ? आद्ये भक्त्यन्तक्रियासु उपायतां परित्यज्येत्यंशं विरोधिக்கும்.

(सा.प्रः) किञ्चैषां श्लोकानामधिकारितत्कर्तव्यपरत्वे स्वारस्यात्किल प्रीत्यैवेत्यस्य शास्त्रवश्यत्वा-भावपरत्वमुच्यते, तदापि तदयुक्तम् ।

(सा.विः) सुदृढसिद्धोपायस्यापि स्वानुष्ठानेन परप्रवर्तनरूपभगवदाज्ञानुपालनार्थं च अवश्यकर्तव्यानामपि कर्मणां विधिपरामर्शमन्तरेण प्रियतमसुहृत्पुत्राद्युपलालनवत्प्रीतिरेव ज्ञानिनः प्रयोजिकेति भावः । एवकाराभिप्रेतमन्यदपि विवृणोति । उपायतां परित्यज्येति । मुक्तव्यापारनयेन स्वयं स्वादुत्वात्क्षणिकस्य कालान्तरभाविफलसाधनत्वानुपपत्तिदर्शनाच्च नास्य स्वव्यापारे मोक्षोपायताबुद्धिरपि स्यादिति भावः - अन्ततस्तैस्तैराराधितो भगवानेव सर्वत्रोपायः - न पुनः क्षणिकं तत्क्रिया स्वरूपम् - तत्साध्यं किञ्चित्तत्प्रीत्यतिरिक्तमप्रामाणिकमपूर्वादिकं वा - अतस्तस्मिन्नेव ''मामेकं शरणं व्रज'' इति उपायताबुद्धिः कार्येत्याह । न्यसेद्देवे तु तामभीरिति । अनाश्रितानां बन्धनमाश्रितानां मोचनं च स्वमाहात्म्यानुगुण एवेत्यभिप्रायेणाह । देव इति । शरण्यविषयश्रुतिसूचनार्थमत्र देवशब्दः । अपार कारुण्यसौशील्यवात्सल्यादिगुणनिधौ ''मित्रभावेन संप्राप्तम् - सकृदेव प्रपन्नाय - अपिचेत्सुदुराचारः - क्षिप्रं भवति । मन्मना भव मद्भक्तः - सर्वधर्मान्परित्यज्य'' इति वक्तरि तस्मिन् अशरण्यशरण्ये स्वयमुपायतयावस्थिते सापराधतत्स्वातन्त्र्य तत्सङ्कल्पकिङ्करहिरण्यगर्भरुद्रेन्द्रादि क्षुद्रेश्वरादि निमित्तं भयं न कर्तव्यमित्यभिप्रायेणाह - अभीरित्युक्तमिति । तत्र प्रीत्येवेत्यस्य विधिपरामर्शमन्तरेणेति निर्बन्धबुद्ध्या विनेति भावः - अतश्शास्त्रत्यागो न विवक्षित इति भावः'' इति तदेवेह व्याचष्टे । प्रीत्यैव कारित என்றதுவும் इति । பிறக்கிற प्रीतिயினுடைய, उत्पन्नप्रीतेः । ननूपासनाधिकारिपरमिदम् - गीताशास्त्रतात्पर्यरूपत्वादित्यत्र उपासनाधिकारिपरत्वेऽपि प्रीत्यैव कारित इत्यस्य स्वादुतमत्वप्रकाशनपरत्वेन शास्त्रव्यवच्छेदपरत्वाभावात् ।

(सा.संः) प्रीत्यैवेत्यस्य प्रीतिप्रेरित एव यथाशास्त्रं कर्तव्यमिति तात्पर्यमित्याह -இங்கு इति - भक्त प्रपन्नोभयसाधारणोऽयं ज्ञानी त्वित्यादिः । तत्र भक्तविषये प्रीत्येवोपायतां परित्यज्येत्यनयोरर्थमाह ।

**मूः** - இப் **श्लोक**ங்களை **उपासनाधिकारि** பக்கலிலே **योजि**க்கும்போது **उपासनादि**களுடைய **स्वादुतमत्व**த்தையும், **फलोपाय**மான **शरण्य**னுக்கு **प्रसादन**மாய்க்கொண்டு **फल**த்துக்கு **साक्षादुपाय**மன்றிக்கே நிற்கிற நிலையையும், இவ் **उपासन**த்தாலே **प्रसन्न**னான **सर्वेश्वर**ன் தானே **फल**த்துக்கு **साक्षादुपाय**மாய் நிற்கிற நிலையையும் சொல்லுகையிலே நோக்கக் கடவது-

(सा.दीः) उपायतां परित्यज्यவுக்கு अर्थமருளிச்செய்கிறார்- இப் श्लोकங்களை इत्यादिயால் स्वतन्त्रप्रपन्नविषयமாம்போது तात्पर्यविशेषத்தைக்காட்டுகிறார்-

(सा.स्वाः) उपायभूतभक्तिக்கு उपायत्वपरित्यागं असङ्गतமன்றோ? प्रीत्यैव कारितः என்கிறதுவும் विरोधिக்கும். मोक्षाभिसन्धिயாலேயன்றோ அவன் अनुष्ठिக்கிறது- तां, भक्तिनिष्ठोपायताम् । देवे न्यसेत् என்கிறதுவும் बाधिततयाகூடுமோ? प्रपन्नविषयமென்னில் उपायतां परित्यज्येत्यंशमप्रसक्त-प्रतिषेधமாக प्रसङ्गिக்கும் - प्रपत्तिயிலே उपायतैயிருக்க देवे उपायतां न्यसेत् என்கிறதுதான் கூடுமோ? இரண்டு अधिकारिव्यतिरिक्तत्रैवर्गिकविषयत्व மும் கூடாதே? என்ன क्रमेण अधिकारिद्वयத்திலும் कारिकार्थமருளிச் செய்கிறார்- இப் श्लोकங்களை इत्यादिना । प्रीत्यैव என்கையாலே उपासननिष्ठस्वादुतमत्वप्रयुक्तस्वप्रीतिயும், उपायताशब्दத்தாலே साक्षादुपायतैயும்.

(सा.प्रः) भक्त्यधिकारिविषयत्वे प्रमाणान्तराविरुद्धानां भक्तियोगस्वादुतमत्व, भगवत्प्रसादनत्व, साक्षादुपायत्वाभावानां भगवति साक्षादुपायत्वस्य च ज्ञापनपरत्वेनापि चरितार्थत्वादनन्त-प्रमाणशिष्टाचारयोर्विरुद्धस्य शास्त्रवश्यत्वाभावस्य ज्ञापनपरत्वं नोपपद्यते । प्रपन्नविषयत्वेऽपि प्रमाणान्तराविरुद्धानां अनन्योपायत्वव्याहत्यभावानन्यप्रयोजनत्वव्याहत्यभावभगवदुपायान्तरस्थान निविष्टत्वानां ज्ञापनपरतयापि चरितार्थत्वेन चाप्रामाणिकस्य शास्त्रवश्यत्वाभावस्य ज्ञापनपरत्वं नोपपद्यत इत्याह । இப் श्लोकங்களை इत्यादिना - तत्संश्लेषवियोगैकसुखदुःख इत्यनेन प्रीत्यैव कारित इत्यनेन चोपासनस्वादु-

(सा.विः) इहापि शास्त्रव्यवच्छेदपरत्वेन प्रमाणता - सर्वधर्मानित्यस्यार्जुनं व्याजीकृत्याकिञ्चनार्थं शरणागतिविधानतात्पर्ये गीताशास्त्रस्यापि प्रपत्तिप्रतिपादकत्वात् प्रपत्त्यधिकारिपरत्वेनापि योजयितुं शक्यत्वात्तत्पक्षेऽपि भक्त्यधिकारिमर्यादयैव स्वादुतमत्वेन प्रीतिप्रेरितत्व एव तात्पर्यं' नतु शास्त्र-नैरपेक्ष्ये तात्पर्यमित्यभिप्रायेणाह -இப் श्लोकங்களை इति - अस्यां योजनायामुपायतां परित्यज्येत्यस्य तात्पर्यमाह - फलोपायமான इति ।

(सा.सं:) இப் श्लोकங்களை इति - भक्तेस्स्वादुतमत्वेन प्रीत्यैवेत्येतदनुपपन्नम् । भक्तेस्साक्षादु-पायत्वाभावादुपायतां परित्येज्येत्यतदपि उपपन्नमित्यर्थः । ननु श्रौतात्साङ्गादिति फलाविनाभूतधर्माणां यथाशास्त्रानुवृत्तौ प्रपन्नस्य -

**मूः - स्वतन्त्रप्रपत्तिनिष्ठ**ன் திறத்தில் இ**ப் श्लोक**ங்களை **योजि**க்கும்போது இவன் **आज्ञानुज्ञै**களாலே பண்ணும் **कैङ्कर्य**மெல்லாம் **भक्तियोगादि**களின் கட்டளை குலையாதிருந்தாலும் **स्वामिसन्तोष**மொழிய வேறொரு **स्वर्गमोक्षादिप्रयोजन**த்துக்கு **उपाय**மாக **अनुष्ठि**க்கிறானல்லாமையாலே இவனுக்கு **अनन्योपायतै**யும், **अनन्यप्रयोजनतै**யும், குலையாதேயிருக்கிற படியையும்,

---

(सा.दीः) स्वतन्त्रप्रपत्तीत्यादियால்- यद्वा, शास्त्रीयधर्मங்கள் त्रिवर्गापवर्गार्थமாகையாலந்தந்த धर्मानुवृत्तियால் प्रपन्नனுக்கு வரும் अनन्योपायत्वानन्योपेयत्वहानिशङ्कैயைப் परिहरिக்கிறார். स्वतन्त्रेत्यादियால். இது प्रपन्नविषयமாம்போது प्रीत्यैवஎன்று एवकारं सामान्येन फलार्थ-बुद्धिव्यवच्छेदकமாய் அதில் मोक्षार्थत्वव्यवच्छेदத்தால் अनन्योपायत्वமும் फलान्तरव्यवच्छेदத்தால் अनन्यप्रयोजनत्वமும், उपायान्तराभावமும் सिद्धिக்கையால் ईश्वरனுக்கு उपायान्तरस्थानविशेषமும் सिद्धिக்குமென்றபடி.

---

(सा.स्वाः) சொல்லுகையாலே, विरोधமில்லையென்று கருத்து. स्वतन्त्रेति । भक्तियोगादीति । प्रसिद्धभक्तियोगादिविधायकशास्त्रங்களாலே उपायत्वं प्रसक्तமாக तन्निषेधं கூடுமென்று கருத்து.

---

(सा.प्रः) तमत्वं, निजकर्मादिभक्त्यन्तं कुर्यादित्यनेन भगवति समर्पणीयत्वोक्त्या शरण्यप्रसादनत्वम्, उपायतां परित्यज्येति भक्तेस्साक्षादुपायत्वाभावो भगवतस्साक्षादुपायत्वं च बोध्यत इति भक्तपरत्वेन योजनायां भावः । तत्संश्लेषेत्यादिना प्रीत्यैवेत्यनेन चाज्ञानुज्ञाकैङ्कर्येषु स्वामिसन्तोषव्यतिरिक्त-प्रयोजनाभावोक्त्यानन्यप्रयोजनत्वाविरोधः, उपायतां परित्यज्येत्यनन्योपायत्वाविरोधः, न्यसेद्देवे त्वित्यनेन भगवत उपायान्तरस्थाननिविष्टत्वं च बोध्यत इति प्रपन्नपरत्वेन योजनायां भावः ।

---

(सा.विः) இப் स्वतन्त्रप्रपत्तिनिष्टன் திறத்தில் इति । भक्तियोगादिகளின் கட்டளை குலையாதிருந்தாலும், भक्तियोगादिमर्यादायां ''तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः । भगवद्ध्यानयोगोक्तिवन्दनस्तुति कीर्तनैः'' ''लब्धात्मा तद्गतप्राण मनोबुद्धीन्द्रियक्रियः । निजकर्मादि भक्त्यन्तं कुर्यात् प्रीत्यैव कारितः ।।'' इत्युक्तप्रीतित्यागो यथा न स्यात्तथा स्थितायामपीत्यर्थः । नन्वस्याधिकारिण अनन्यप्रयोजनत्वादनन्योपायत्वात् किमर्थान्येतानीत्यत्र प्रीत्यैव कारितः उपायतां परित्यज्येत्युक्तमिति तात्पर्यमाह-स्वामिसन्तोषமொழிய इति - अनेन भगवत्प्रीतेस्स्वप्रयोजनत्वा-त्तादर्थ्येनोत्पन्न स्वप्रीतिरेव स्वस्य प्रवर्तिकेति भावः - कारित इति हेतुमण्णिजन्तः - प्रीत्येति हेतुकीर्तिप्रयोजककर्त्रीति यावत् - प्रयोजकव्यपारश्च प्रेरणा । प्रीतिप्रेरित इति यावत् - अत्र पक्षे प्रीत्यैवेत्यस्य व्यवच्छेद्यम् - उपायतां परित्यज्येत्यनेन विवृतम् - तथा चोपायत्व व्यवच्छेद परत्वेन शास्त्रव्यवच्छेदपरत्वाभावात् अनन्योपायत्वं रक्षितम् । भगवत्प्रीति परिज्ञानाय शास्त्रमप्यपेक्षितमिति भावः ।

---

(सा.सं:) अनन्योपायत्वानन्योपेयत्वहानिरिति शङ्कां परिहरन् निजकर्मादीत्यादेः प्रपन्नविषये योजना माह - स्वतन्त्रेति । प्रीतिप्रेरिततया कृतेषु प्रत्यवायनिवृत्त्यर्थत्वाभिसन्धिमपि व्यवच्छिनत्ति प्रीत्यैवेत्येवकारः । तेषु मोक्षार्थत्वव्यवच्छेदादनन्योपायत्वम् - फलान्तरव्यवच्छेदादनन्यप्रयोजनत्वम् - उपायान्तराभावसिद्धेरीश्वरस्योपायान्तरस्थाननिवेशश्च निजकर्मादीत्यादिना प्रपन्नविषये सिद्ध्यतीति तात्पर्यमित्यन्तस्य तात्पर्यम् । கட்டளை साधनभक्त्यादिलक्षणलक्षिता ।

मूः - अकिञ्चनனான இவனுக்கு ईश्वरன் தானே उपायान्तरस्थानத்திலே நின்று फलं கொடுக்கிறபடியையும் சொல்லுகையிலே तात्पर्यம் இரண்டு अधिकारिகளும் ''प्रति बुद्धा न सेवन्ते''

''अनन्यदेवताभक्ताः''

''नान्यं देवं नमस्कुर्यात्'' इत्यादिகளிற்படியே परमैकान्तिகளாயிருக்க இங்கு ''निजकर्मादि भक्त्यन्तम्''என்றருளிச் செய்தபடியே वर्णाश्रमादिधर्मங்களை இவர்கள் अनुष्ठिக்கப்புக்கால் अग्नीन्द्रादि देवताव्यामिश्रतैயாலே परमैकान्तित्वं குலையாதோவென்று वेदान्तव्युत्पत्तिபண்ணாதார் चोद्यंபண்ணுவர்கள். இவ்விடத்தில், ''साक्षादप्यविरोधं जैमिनिः''என்கிற सूत्रத்தின்படியே अग्रनयनादिव्युत्पत्तिवशத்தாலே अग्न्यादिशब्दங்களை सर्वेश्वरனுக்கு साक्षाद्वाचकங்களாக-

---

(सा.दीः) भक्तियोगादिகளின் கட்டளை, शास्त्रोक्तस्वरूपமென்றபடி- ननु இவ்விரண்டு अधिकारिகளும் परमैकान्तिகளாயிருக்கையால் இவர்கள் वर्णाश्रमधर्मங்களை अनुष्ठिப்பார்களாகில் देवतान्तरव्यामिश्रतैயாலே परमैकान्तित्वभङ्गं வாராதோ? ஆகையால் शास्त्रवश्यतैகூடுமோ? என்னும் आशङ्कैயை अनुवदिக்கிறார் - இரண்டு अधिकारिகளும் इत्यादिயால் - இத்தைப் परिहरिக்கிறார். இவ்விடத்திலென்று துடங்கி -

---

(सा.स्वाः) अकिञ्चनेति । तां देवे न्यसेदित्यंशमुपायान्तरस्थानापत्तिरूपोपायत्वपरமாகையால் विरोधமில்லையென்று கருத்து - இப்படி ஆளவந்தார் श्रीसूक्तिबलத்தாலே இரண்டு आधिकारिகளுக்கும் वर्णाश्रमधर्ममनुष्ठेयமென்று சொன்னது கூடுமோ? अग्नीन्द्रादिदेवतान्तरशब्दघटितमन्त्रसाध्यवर्णाश्रमधर्मं देवतान्तराराधनமாகையால் देवतान्तरस्पर्शप्रसक्त्यापारमैकान्त्य भङ्गंவாராதோ? என்கிற अव्युत्पन्नचोद्यத்தை शङ्किத்து परिहरिக்கிறார்- இரண்டு अधिकारिகளும் इत्यादिना - अनुष्ठिக்கப்புக்கால், अनुष्ठिப்பார்களாகிலென்றபடி - वेदान्तव्युत्पत्तिபண்ணாதார், वेदान्तव्युत्पत्तिरहितர் - परमैकान्तित्वं குலையாதோ என்று चोद्यंபண்ணுவர்களென்று अन्वयம். अग्रनयनादिव्युत्पत्तिवशத்தாலே देवतान्तरத்துக்கும் वाचकமாகாதோ? என்கிற शङ्कावारणार्थं श्रीसहस्रेति ।

---

(सा.प्रः) नन्वेवं भक्तानां प्रपन्नानां च शास्त्रवश्यतयाज्ञानुज्ञाकैङ्कर्याणां यथाशास्त्रं कर्तव्यत्वे अग्निहोत्रदर्शपूर्णमासादीनामग्नीन्द्राद्याराधनरूप तया देवतान्तराराधनात् पारमैकान्त्यभङ्गस्स्यादिति शङ्कामनूद्य परिहरति - இரண்டு अधिकारिகளும் इत्यादिना । व्युत्पत्तिபண்ணாதார் इति, व्युत्पत्तिशून्या इत्यर्थः ।

---

(सा.विः) भगवत्येवोपायत्वमनुसन्दधीतेति न्यसेद्देव इत्यस्याभिप्राय इत्यभिप्रायेणाह । अकिञ्चनனான इति । देवे तां उपायबुद्धिं न्यसेत् - मम भक्तियोगो भगवानेवेत्यनुसन्दध्यादिति भावः । अत उभयथापि न यामुनाचार्यश्रीसूक्तिविरोध इति भावः । ननु निजकर्मादीत्युक्तनित्यकर्मानुष्ठानेऽग्नीन्द्रादि देवतान्तरोपासनप्रसक्तौ पारमैकान्त्यभङ्गस्स्यादित्यत्र, पूर्वं बहुशः परिहारमुक्तमप्यस्याविस्मरणायाक्षिप्य सदृष्टान्तं पुनराह । இரண்டு अधिकारिகளும் इति ।

---

(सा.सं:) वर्णाश्रमधर्माणां भक्तवत्प्रपन्नेन च यथाशास्त्रमवश्यमनुष्ठेयत्वे प्राप्तं देवतान्तरस्पर्शदोषं वेदान्तप्रक्रियया प्रमाणेन च परिहरति -இரண்டு इत्यादिना ।

**मूः - निर्वहिக்கலாமிடத்தில் இவை श्रीसहस्रनामத்தின் திரு नामங்களின்படியே நிற்கையாலேயிவற்றில் देवतान्तरस्पर्शமில்லை.**

(सा.दीः) निर्वहिக்கலாமிடத்தில், जीवमुख्यप्राणलिङ्गादिरहितस्थलத்திலென்றபடி - जीवादिलिङ्गமுள்ளவிடத்தில் प्रतर्दनविद्यान्यायத்தால் तत्तदन्तर्यामिपरमात्माவைக் குறித்து तत्तत्कर्मங்களை अनुष्टिக்கை शास्त्रसिद्धமாகையாலே देवतान्तरयाजिகளாகார்களென்கிறார்.

(सा.स्वाः) श्रीसहस्रनामத்தின் திருநாமं गुणपौष्कल्यनिमित्तமாகையாலே गुणपौष्कल्यं भगवदेकान्तமாகையால் गुणलेशयुक्तदेवतान्तरवाचकமல்லாதாப்போலே अग्न्यादिशब्द जातமும் अग्रनयनादिगुणपौष्कल्ययुक्तभगवदेकान्तமென்று கருத்து- यद्वा, सहस्रनामपारायणादिகளில் देवतान्तरस्पर्शமில்லாதாப்போலே இங்கும் देवतान्तरस्पर्शமில்லையென்று கருத்து. இப்படி देवतान्तरानन्यथासिद्धलिङ्गமில்லாதவிடத்தில் ''साक्षादप्यविरोधं जैमिनिः'' इति न्यायத்தாலே देवतान्तरस्पर्शமில்லாவிட்டாலும், अनन्यथासिद्धलिङ्गமுள்ள श्राद्धादिகளிலே ''साक्षादप्यविरोधं'' என்கிற न्यायं लिङ्गविरोधத்தாலே கூடாமையாலே அங்கு तल्लिङ्गयुक्तदेवतान्तराराधनप्रयुक्तदेव-तान्तरस्पर्श प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார்.

(सा.प्रः) श्रीसहस्रनामेत्यादि - ''विशनाद्विश्वमित्याहुर्लोकानां कार्यसत्तम । व्याप्य सर्वानिमान् लोकान् स्थितस्सर्वत्र केशवः ।। ततश्च विष्णुनामानिविशेर्धातोः प्रवेशनात् ।'' इत्युक्तविश्वादि नामवदग्नीन्द्रवैश्वानरादिशब्दानां ''साक्षादप्यविरोधं जैमिनिः'' इत्युक्त्याग्रनयनपरमेश्वरत्व विश्वानरनियन्तृत्वादि व्युत्पत्ते र्भगवति पुष्कलत्वात्तस्यैव तत्तच्छब्दवाच्यतेति तस्यैवसर्वकर्म समाराध्यत्वमिति न देवतान्तरसम्बन्धगन्धोऽपि । अन्यत्र रूढानामन्यत्रावयवशक्त्या बोधकत्वं ''इन्द्रत्वमग्नौ गौणं स्याद्यज्ञसंबन्धकारितम् । इदीत्यर्थानुसाराद्वा स्वे कार्ये सोऽपि हीश्वरः ।।'' इतीन्द्र शब्दस्याप्यग्निबोधकत्वादिभिस्तांन्त्रिकैरप्यङ्गीकृतमिति न दोषः । एवं ''अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच । वचसां वाच्यमुत्तमम्'' इत्युक्तप्रकारेण भगवतः सर्वशब्दवाच्यत्वात्सर्वकर्म समाराध्यत्वमित्यैकान्त्यभङ्गाभावमुपपाद्य ''जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्या दाश्रितत्वादिह तद्योगात्'इत्यत्र ब्रह्मणस्स्वरूपेण चेतनान्तर्यामित्वेनाचेतनान्तर्यामित्वेन चोपास्यत्वेऽपि चेतनाचेतनयोर्यथ मुमुक्षूपास्यत्वाभाव उक्तः, यथा वा प्रतर्दनविद्यायामिन्द्र अनुपास्य उक्तस्तथा अग्न्यादिशरीरिणो भगवत आराधने शरीरभूतानां तेषामाराध्यत्वं नास्तीति नित्यनैमित्तिकान्तर्गताग्नीन्द्रदि शब्दोच्चारणेऽपि न पारमैकान्त्यभङ्ग इति सप्रमाणं सोदाहरणमाह ।

(सा.विः) श्रीसहस्रनामத்திலே इति । विश्वं विष्णुरिति । विश्वादि शब्दानां ''रुद्रो बहुशिराः'' इति रुद्रादिशब्दानां भगवद्वाचित्ववत्सर्वेषामपि शब्दानां योगवशेन भगवत्येव वृत्ति सम्भवादवयवशक्ते-स्तत्र पुष्कलत्वाच्च साक्षादेव भगवत्प्रतिपादनसम्भवान्न देवतान्तरसम्बन्धगन्ध इति भावः । देवर्षि पित्राद्युद्देशेन विहितकर्मसु देवर्षिपित्रादिशब्दानामवयवार्थयोगेन भगवति वृत्तावपि तत्तत्प्राकरणि-कार्थवादादिलिङ्गैः तत्तद्देवतादिपरत्वमेवागमम्यत इति देवतान्तरस्पर्शोऽवर्जनीय इत्यत्राह । -

(सा.सं:) निर्वहिக்கலாமிடத்தில் जीवमुख्यप्राणलिङ्गादिरहित स्थल इत्यर्थः । यत्र जीवादिलिङ्गमस्ति तत्र प्रतर्दनविद्यान्याय इत्याह ।

**मूः** - ''देवानृषीन्पितॄन् भगवदात्मकान् ध्यात्वा सन्तर्प्य'' என்று नित्यप्रभृतिகளில் श्रीभाष्यकारர் அருளிச் செய்தபடியே तत्तद्देवताशरीरकனாக परमात्माவை अनुसन्धित्துக்கொண்டு तत्तत्कर्मங்களை अनुष्ठिக்கை शास्त्रसिद्धமானவிடத்தில் ''उपासात्रैविध्यात्'' என்கிறபடியே प्रतर्दनविद्यादिகளில் विशेष्यமான दिव्यात्मस्वरूपத்தாலும், चेतनाचेतनविशिष्टனாகவும், परमात्माவை उपासिயா நின்றாலும் विशेषणமான चेतनाचेतनங்களில் आराध्यत्वं இல்லாதாப்போலே இவ்விடத்திலும் विशेषणமான देवर्षिपित्रादिகளை இவன் आराधिக்கிறானல்லன்.

''अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।''
''हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृत् ।।''
''ये यजन्ति पितृन्देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ।।''

என்கிறபடியே सर्वान्तर्यामिயானவனே प्रतिबुद्धனான இவனுக்கு आराध्यனாகையாலே இப்படி தெளிந்து अनुष्ठिக்கும் அவனுக்கு यथाशास्त्रम् अनुष्ठिக்கிற कैङ्कर्यங்களாலே उपायान्तरस्पर्शம் வாராதாப்போலவும்,

---

(सा.दीः) देवानृषीनित्यादिயால்- शास्त्र (बल) सिद्धமானவிடத்தில், जीवमुख्यप्राणलिङ्गादिகளுள்ளவிடத்திலென்கை. இப்படி தெளிந்து अनुष्ठिக்குமவனுக்கு आराध्यविशेषणமான चेतनाचेतनங்களால் देवतान्तरस्पर्शंவாராதென்று अन्वयம்- இங்கு अचेतनग्रहणं दृष्टान्तार्थம். இதுக்கு दृष्टान्तं- यथाशास्त्रமாக अनुष्ठिக்கிற इत्यादि ।

---

(सा.स्वाः) देवानृषीनिति - प्रभृतिशब्दத்தாலே श्रीमद्गीताभाष्यादिसङ्ग्रहமென்றபடி. अनन्यथा-सिद्धलिङ्गस्थलங்களில் योगव्युत्पत्तिயன்றிக்கே तत्तदन्तर्यामिயே अपर्यवसानवृत्त्या अभिधेयனாய்க் கொண்டு आराध्यனானபடியாலே देवतान्तरस्पर्शமில்லை என்று கருத்து- तत्तदन्तर्यामिभूत भगवदाराधनத்தில் विशेषणतया देवतान्तराराधनமும் प्रसङ्गिயாதோ? என்ன दृष्टान्तमुखத்தாலே परिहरिக்கிறார். उपासेति ஆனாலும் ''तृप्त एवैनमिन्द्रः प्रजया पशुभिः'' इत्यादिमन्त्रार्थवादादिகளிலே देवतान्तराराधनरूपत्वं தோற்றுகையாலே அதுகளுக்கு केवलभगवदाराधनरूपत्वं சொன்னது கூடுமோ? किञ्च विशेषणतया तदुच्चारणத்தில் தான் देवतान्तरसंबन्धं प्रसङ्गिயாதோ? என்ன सप्रमाणமாகவும் सदृष्टान्तமாகவும் उपपादिக்கிறார். अहं हीत्यादिना । कैङ्कर्यங்களில் उपायत्व-बुद्धिயில்லாமையாலேயும், निवेदितोपयोगादिகளில் स्वार्थत्वबुद्धिயில்லாமையாலும், उपायान्तरस्पर्शமும், प्रयोजनान्तरस्पर्शமும்.

---

(सा.प्रः) देवानृषीनित्यादिना - नित्यप्रभृतीति । गीताभाष्यादिः प्रभृतिशब्दार्थः मधुविद्यादिः प्रतर्दनविद्यादीत्यादिशब्दार्थः । एतेनोक्तस्यार्थस्य सांप्रदायिकत्वं च दर्शितम् ।

---

(सा.विः) देवानृषीनिति - उपासात्रैविध्यादाश्रितत्वादिह तद्योगादिति सूत्रे ब्रह्मणस्स्वरूपेण चेतनाचेतन-योर्यथा मुमुक्षूपास्यत्वं नास्तीति सिद्धान्तितम् तद्वदिहापि शरीरभूताग्नीन्द्रादीनां नाराध्यत्वमिति भावः । नित्यनैमित्तिकव्यतिरिक्तस्थले भगवच्छरीरतयापि देवतान्तरभजने पारमैकान्त्यभङ्गस्स्यादेवेत्याह ।

---

(सा.सं:) देवानित्यादिना । स्वरूपத்தாலும் चेतनाचेतननिविष्टனாகவும் इत्यन्तेन उपासात्रैविध्यं दर्शितम् । कथं कृते परमैकान्तिनो देवतान्तरस्पर्शदोषागम इत्यत्राह ।

**मूः - कैङ्कर्यार्थ**ங்களான **द्रव्यार्जननिवेदितोपयोगादि**களால் **प्रयोजनान्तरस्पर्श**ம் வாராதாப் போலவும், **आराध्यविशेषण**மாக **विधिबलप्राप्त**ங்களான **चेतनाचेतन**ங்களால் **देवतान्त-रस्पर्श(दोष)**ம் வாராது-

**''नारायणं परित्यज्य हृदिस्थं प्रभुमीश्वरम् । योऽन्यमर्चयते देवं परबुद्ध्या स पापभाक् ।।''**

**''यस्तु नारायणं देवं सामान्येनाभिमन्यते । स याति नरकं घोरं यावच्चन्द्रदिवाकरम् ।।''**

**''बुद्धरुद्रादिवसतिं श्मशानं शवमेव च । अटवीं राजधानीं च दूरतः परिवर्जयेत् ।।''**

**इत्यादि**களிற்படியே **देवतान्तर**ங்களிலே **परत्वबुद्धि**பண்ணுதல், **समत्वबुद्धि**பண்ணுதல், **नित्यनैमित्तिक**ங்களில் துவக்கற்ற **देवतान्तरस्थल**ங்களில் செல்லுதல் செய்யில் **परमैकान्ति**க்கு **दोषमूल**மல்லது **नित्यनैमित्तिक**ங்களில் **आराध्य**னான **सर्वान्तर्यामि**க்கு **शरीर**மாய் நிற்கிற நிலையி(னா)ல் **इत्देवतै**கள் பக்கல் **परत्वबुद्धि**யும், **साम्यबुद्धि**யும், **स्वनिष्ठत्वबुद्धि**யும், **आराध्यत्वबुद्धि**யும்,

---

(सा.दीः) निवेदितोपयोगமாவது? निवेदितप्रसादस्वीकारम् - आदिशब्दத்தால் निवेदितस्य यथेष्टविनियोगादिसङ्ग्रहम् -பின்னைதானிவருக்கு எத்தால் दोषமாம்? என்னவருளிச் செய்கிறார். नारायणं परित्यज्येत्यादिயால்- स्वनिष्ठत्वबुद्धिயாவது? भगवदशेषत्वबुद्धि - आराध्यत्वबुद्धिயாவது? இந்த कर्मம் तत्तद्देवताप्रीत्यर्थமென்னும் बुद्धि ।

---

(सा.स्वाः) இல்லாதாற்போலேயிங்கும் देवतान्तराराधनत्वबुद्धिயில்லாமையாலே देवतान्तरस्पर्शமில்லையென்று கருத்து- चेतनाचेतनங்களால் इति - अचेतनग्रहणं दृष्टान्तार्थம் अचेतनवत्कञ्चुकतुल्यர் चेतनभूतदेवர்களென்றபடி - இப்படி आराध्यत्वबुद्धिயில்லாமையாலே देवतान्तरस्पर्शமில்லையாகில் देवतान्तरस्थलங்களிலே சென்றாலும் साम्यादिबुद्ध्यादिகளிலும் देवतान्तरसंबन्धமில்லையாக प्रसङ्गियாதோ? என்ன ऐकान्त्यविरोधप्रयोजकदेवतान्तरसम्बन्धप्रयोजकाप्रयोजकங்களை இரண்டு वाक्यத்தாலே निरूपिக்கிறார். नारायणं परित्यज्येत्यादिயால். । परत्वादिबुद्धिपञ्चकமும் नित्यनैमित्तिकबहिर्भूतदेवतान्तरस्थलगमनादिகளும் पारमैकान्त्यविरोधिகளென்று கருத்து- स्वनिष्टत्वादीति । भगवदशेषत्वबुद्धियுமென்றபடி आदिशब्दத்தாலே स्वातन्त्र्यादिबुद्धि विवक्षितैயென்றபடி.

---

(सा.प्रः) एवं तर्हि ब्रह्मरुद्रादीनामपि नित्यनैमित्तिकान्तर्गतत्वेन तत्तदालयानुप्रवेश - तदाराधनादी-नामप्यैकान्त्य भञ्जकत्वं न स्यात् । भञ्जकत्वे नित्यान्तर्भावेऽपि स्यादित्यत्र तेषां भगवतोऽप्युत्कृष्टत्वबुद्धेः, तुल्यत्वबुद्धेः, नित्यनैमित्तिकान्तर्गतत्व मन्तरेणाराधनस्य च प्रत्येकमैकान्त्यभञ्जजकत्वस्य प्रमाणतोवगमान्नित्यनैमित्तिकान्तर्भूतब्रह्मरुद्रादिशब्दोच्चारणं नैकान्त्यभञ्जकमित्याह - नारायणमित्यादिना । परबुद्ध्या, परदेवतात्वप्रकारबुद्ध्या - सामान्येन, साम्येन ।

---

(सा.विः) नित्यनैमित्तिकங்களில் इति । तत्र देवतान्तरोपासनस्य निषिद्धत्वेन भगवत्प्रीति-प्रयोजनत्वाभावादनन्यप्रयोजनत्वाभावादनन्यप्रयोजनत्वादिभङ्ग इति भावः । स्वनिष्ठत्वेति - भगवदशेषत्वेनेत्यर्थः । नित्यनैमित्तिकानुष्टानस्य सांप्रदायिकत्वमाह ।

---

(सा.संः) नारायणं परित्यज्येत्यादि - बुद्धिपञ्चकस्यैवैकान्त्यविरोधित्वेनानयोस्तदभावादुपास्य-विशेषणत्वेनान्वयमात्रस्य प्रतर्दनप्राणत्रैलोक्यादिन्यायेनैकान्त्यविरोधाप्रसञ्जकत्वाच्च नैकान्त्य विरोध इत्याह அல்லது इति । तथा विनेत्यर्थः । शरीरமாய் நிற்கிற நிலையில், शरीरत्वेनैव धियमधिरूढेषु ।

**मूः - फलप्रदत्वबुद्धि**யும் இல்லாமையாலே **उपास्यविशेषण**ங்களான **प्राणवैश्वानरत्रैलोक्यादि**களால் இவனுக்கு **व्यभिचारं**வாராதாற்போலே **शास्त्रसिद्ध**ங்களான **अग्नीन्द्रादिविशेषण**ங்களாலும் இவனுக்கு **ऐकान्त्यविरोधं**வாராது- **वङ्गीपुर**த்து நம்பியும் **प्रपन्न**னுக்கு **अहोरात्रकृत्य**மான **भगवत्स-माराधन**த்தைச் சொல்லவிழிந்து

**''गायत्रीजपपर्यन्तं मन्त्राचमनपूर्वकम् ।**
**सान्ध्यं कर्माखिलं साधु समाप्य च यथाविधि ।।**
**समिदाज्यादिभिर्द्रव्यैर्मन्त्रैरपि यथोदितैः ।**
**हुत्वाऽग्नीनग्निहोत्रादावुक्तं कालमपिक्षिपन् ।।''** என்றும்,
**''ततो माध्यंदिनं कर्म स्वोदितं श्रुतिचोदितम् ।**
**स्नानादि ब्रह्मयज्ञान्तं कृत्वा खिलमतन्द्रितः ।।''** என்றும்,

---

(सा.दीः)இந்நித்யகர்ம ங்களில்तत्तदन्तर्यामिबुद्ध्या அனுஷ்டிக்கையால் देवतान्तरस्पर्शं வாராதென்னு மிடத்தை वङ्गीपुरத்து நம்பி, கூரத்தாழ்வான், भट्टர், நஞ்ஜீயருடைய वचनங்களாலும் दृढीकरिக் கிறார்- वङ्गीपुरத்து நம்பி इत्यादिवाक्यங்களால்- मन्त्रैरपि यथोदितैः, तत्तद्देवतालिङ्गकैः என்றபடி.

---

(सा.स्वाः) இனி अग्नीन्द्रादि देवतान्तरवाचकतत्तन्मन्त्रघटितवर्णाश्रमधर्मानुष्ठानத்தில் ऐकान्त्यविरोध மில்லையென்னுமிடத்தில் वङ्गिवंशेश्वरादिपूर्वाचार्यसम्प्रदायानुष्ठानानुगुण्यமும் पक्षान्तरத்தில் तद्विरोधமுமுண்டென்றருளிச்செய்கிறார். वङ्गीपुरத்து நம்பியும் इत्यादिயால்- मन्त्राचमनपूर्वकम्, ''अग्निश्च'' इत्यादिमन्त्राचमनपूर्वकமென்றபடி-

---

(सा.प्रः) एवं च नित्यनैमित्तिकान्तर्गतानां देवतान्तराणां भगवच्छरीरतयाराधनीयभगवद्विशेषणत्वाद्वा, तद्वाचकशब्दानां साक्षद्भगवद्वाचकत्वाद्वा, पारमैकान्त्यभञ्जकत्वाभावः प्रपन्नजनकूटस्थानामनेकेषां वचनानुष्ठानसिद्ध इति सर्वधा वर्णाश्रमधर्मो न त्याज्य इत्यभिप्रयन्नाह - वङ्गीपुरத்து நம்பியும் इत्यादिना । वङ्गीपुरத்து நம்பி इत्याख्याताः ''श्रीमन्तं देवराजं नृहरिमथ पुनर्देवराजं वरेण्यं श्रीमत्त्रैविक्रमार्यं तदनु च महितं देवराजार्यवर्यम् । तस्मात्त्रैविक्रमार्यं तदनु च कुलजान् देशिकान् भाष्यकारं श्रीमत्पूर्णं मुनीन्द्रं तदनु च महितं यामुनाचार्यवर्यम् ।।'' इत्यादिषु यतीन्द्रशिष्यतयोक्ता अस्माकं कूटस्थाः । अहोरात्रकृत्यமான इति - ''यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।'' इत्यादिप्रमाणात् सर्वव्यापाराणां भगवत्प्रीत्यर्थत्वावगमादहोरात्रकृत्यानां भगवदाराधनत्वोक्तिः । हुत्वाग्नीनित्यादि, अग्निहोत्रादावुक्तं कालानतिक्रमेणाग्नीन् हुत्वेत्यर्थः - ब्रह्मयज्ञान्तमिति । ''देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । -

---

(सा.विः) वङ्गीपुरத்து நம்பியும் इति । अयं भाष्यकारस्याव्यवहितशिष्यः । இழிந்து उपक्रम्य - उक्तं कालमपिक्षिपन्, उक्तकालानतिक्रमेण अग्निहोत्रादीन् हुत्वेत्यर्थः ।

---

(सा.संः) स्वनिष्ठत्वं, स्वतन्त्रत्वम् - इममेवार्थं वङ्गिवंशेश्वरकूराधिनाथ-भट्टारकाद्यभियुक्तवचनैश्च दृढीकरोति - वङ्गीपुरத்து इत्यादिना ।

मूः - ''होमं पितृक्रियां पश्चादनुयागादिकं च यत्'' என்றும் இப் प्रकारங்களிலே तत्तन्मन्त्र-पूर्वकங்களான वर्णाश्रमधर्मங்களை அருளிச் செய்தார்- भट्टரும், ஆழ்வானும் தந்தாங்கள் அருளிச் செய்த नित्यங்களிலே,

''श्रुतिस्मृत्युदितं कर्म यावच्छक्ति परात्मनः ।
आराधनत्वेनापाद्य सोर्ध्वपुण्ड्रश्च तर्पयेत् ।।'' इत्यादिகளை அருளிச்செய்தார்கள்.

பெரியஜீயரும்,

''श्रीपराशरभट्टार्यचरणौ संश्रयेमहि'' इत्यादियாலே संप्रदाय विशेषज्ञापनार्थமாக गुरुनमस्कारादिகளைப்பண்ணி,

''भगवच्चरणाम्भोजपरिचर्याविधिक्रमम् । एकान्तिभिरनुष्ठेयं नित्यं समभिदध्महे''என்று துடங்கி
''आपो हीत्यादिभिर्मन्त्रैर्वाचकैः परमात्मनः । संप्रोक्ष्यमन्त्राचमनं मन्त्रैस्तत्प्रतिपादकैः ।।
आदित्यान्तस्स्थितस्यार्घ्यं वितीर्य परमात्मनः । प्रतिपादिकया विष्णोस्सावित्र्या तं जपेद्धरिम् ।।
ध्यायञ्जप्त्वोपतिष्ठेत तमेव पुरुषोत्तमम् । नारायणात्मकान् देवानृषीन्सन्तर्पयेत्पितॄन् ।।'
என்றருளிச் செய்தார்.

भाष्यकारसंप्रदायத்திலுள்ள कुलங்களெல்லாம் இன்றறுதியாக स्वसूत्रोक्तமானபடியே तत्तद्देवतामन्त्रங்களைக்கொண்டு विवाहोपनयनादिகள் अनुष्ठिக்கவும் காணாநின்றோம்- பெரியநம்பி முதலான परमाचार्यர்களும் தந்தாம் सूत्रங்களின்படியே यज्ञादिகள் பண்ணி னார்கள் என்னுமிடம் सर्वர்க்கும் प्रसिद्धம்-

(सा.दीः) वाचकैः परमात्मनः, अपर्यवसानवृत्त्या परमात्मपर्यन्तत्वेन परमात्मनो वाचकैः என்றபடி, இப்படியே वृद्धाचारமும் இன்றளவாக நடந்துவருகிறதென்கிறார். भाष्यकारர் इत्यादियால் - कुलங்களெல்லாம், - तत्तद्वंश्यரெல்லாருமென்றபடி.-

(सा.स्वाः) संप्रदायेति । நஞ்ஜீயர் नित्यமும் भट्टार्यसंप्रदायागतமானபடி யாலே सत्संप्रदायமென்று கருத்து.

(सा.प्रः) यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञस्सन्तिष्ठते यत्पितृभ्यः स्वधाकरोत्यप्यपस्तत्पितृयज्ञस्सन्तिष्ठते यद्भूतेभ्यो बलिꣳ हरति तद्भूतयज्ञस्सन्तिष्ठते यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञस्सन्तिष्ठते यत्स्वाध्यायमधीयातैकामप्यृचं यजुस्साम वा तद्ब्रह्मयज्ञस्सन्तिष्ठते'' इत्युक्तस्य ब्रह्मयज्ञस्य - ''यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि । कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमारभेत् ।।'' इत्यादि प्रमाणाद्वैश्वदेवान्ते कर्तव्यत्वमिति भावः । तर्पणादर्वाक्=माध्याह्निकतर्पणात् पूर्वम् । होममित्यादि, वैश्वदेवान्तर्गतदेवयज्ञपितृयज्ञावित्यर्थः । पश्चाद्भुञ्जीत च स्वयमित्युक्तं भगवन्निवेदितभोजन-मनुयागशब्दार्थः । பெரியஜீயர், நம்பிள்ளை इत्याख्यातानां लोकाचार्याणामाचार्या நஞ்ஜீயர் इत्याख्याताः । परिचर्याविधिक्रमम् । विधिशब्दोऽनुष्ठानपरः ।

(सा.विः) பெரியஜீயர், लोकाचार्याचार्याः । நம்பிள்ளை संज्ञकानामाचार्याणां आचार्यां ஜீயர் इत्याख्या वेदान्त्यपरनामधेयाः । पराशरभट्टारकशिष्याः । भाष्यकारसंप्रदायத்திலுள்ள कुलங்களெல் லாம், भाष्यकारसंप्रदायस्थित श्रीवैष्णवानां सर्वेषाम् । இன்றறுதியாக, एतत्पर्यन्तम् । अनुष्ठिக்கவும், अनुष्ठानम् ।

(सा.सः) सदाचारमप्यस्मिन्नर्थे प्रमाणयति । भाष्यकारர் इत्यादिना । कुलங்களெல்லாம், तत्तद्वंश्यரெல்லாம் इत्यर्थः ।

**मूः - ஆனபின்பு भाष्यकारருடையவும், तच्छिष्य-प्रशिष्यர்களுடையவும், उपदेशानु-ष्ठानங்களிலே निष्ठैயுடையார்க்கு**

(सा.दीः) ननू पाञ्चरात्रसंहिताविशेषங்களில் प्रतिनियतமாகச்சொன்ன केवलभगवत्परमन्त्र विशेषங்களைக்கொண்டு देवतान्तरस्पर्शவாராமைக்காக क्रियाविशेषங்களைப் प्रपन्नன் अनुष्ठिक्कालो? என்னும் शङ्कैயைப் परिहरिக்கிறார். ஆனபின்பு इत्यादिயால்.

(सा.स्वाः) ஆனாலும் पाञ्चरात्रसंहिताविशेषங்களிலே प्रतिनियतமாகச்சொன்ன केवलभगवत्परमन्त्र-विशेषங்களைக்கொண்டு देवतान्तरस्पर्शவாராமைக்காக क्रियाविशेषங்களைப் प्रपन्नன் अनुष्ठिக்கவேண்டாவோ? शुद्धभगवत्परमन्त्रंகிடையாவிட்டாலன்றோ देवतान्तरसंप्रसक्तमन्त्रोपजीवनं கூடுவது? என்கிற शङ्कैயைப் परिहरिக்கிறார். ஆனபின்பு इति । उपदेशेति । இவர்களுடைய उपदेशानुष्ठानமும் सामान्यशास्त्रभगवच्छास्त्रमूलமாகையாலே तन्निष्ठருக்கு प्रतिनियताधिकारமாகச் சொல்லப்பட்ட पूर्वाचार्यपरिगृहीतमन्त्रங்களாலே क्रियाविशेषानुष्ठानंகூடாதென்று கருத்து.-

(सा.प्रः) ननु पाञ्चरात्रे ''न्यग्रोधस्याङ्कुरं क्षुत्वा तस्या नासापुटे पुनः । सिञ्चयेद्दक्षिणे सम्यगिदं विष्णु रिति ब्रुवन् ।। चतुर्थे मासि सीमन्तं पञ्चमे वाष्टमेऽपि वा । होमं पुरुषसूक्तेन कृत्वाऽऽज्यसमिदोदनैः ।। शिखास्थापनमेवंतु पश्चादुपनयेच्छिशुम् । पञ्चमे सप्तमे वातु नवमे वातु वत्सरो ।। ऋग्भि पुरुषसूक्तस्य विष्णुसूक्तस्य च क्रमात् । समिद्भिश्च घृतेनैव तैलैरन्नैश्च होमयेत् ।। ततस्तु मेखलां बद्ध्वा त्रिगुणां विष्णुनिर्मिताम् । विष्णोः कर्माणि मन्त्रेण गुरुरग्नेस्समीपतः ।। दद्याद्दण्डं तु पालाशं यो मे दण्ड इति ब्रुवन् । एवं भागवतो वेदमुपनीतोऽभ्यसेद्गुरोः ।।'' इत्यादिभिर्वैष्णवैः मन्त्रैः पुंसवनप्रभृतिविवाहपर्यन्तसंस्काराणामनुष्ठेयत्वबोधनाद्देवतान्तरवाचकपदवन्मन्त्र-युक्तनित्यनैमित्तिकादीनां पारमैकान्त्य भञ्जकत्वमेवेत्यत्र ''एवं भागवतो योगी वासुदेवपरायणः । भगवद्वंशजातस्तुकुर्यादन्यो न चार्हति ।।'' इत्यादिभिस्तत्रैव भागवतेष्वप्यधिकारिदर्शनान्न तत्सर्वेषां भागवतानामिति नित्यनैमित्तिकानां पारमैकान्त्यभञ्जकमित्याह । ஆனபின்பு इत्यादिना ।

(सा.विः) ननु श्रीपाञ्चरात्रे ''न्यग्रोधस्याङ्कुरं भित्त्वा तस्या नासापुटे पुनः । सिञ्चयेद्दक्षिणे सम्यगेवं विष्णुरिति ब्रुवन् ।। चतुर्थे मासि सीमन्त पञ्चमे वाष्टमेऽपि वा । होमं पुरुषसूक्तेन कृत्वाज्य-समिदोदनैः ।। शिखास्थापनमेवं तु पश्चादुपनयेच्छिशुम् । विष्णोः कर्माणि मन्त्रेणगुरुरग्नेस्समीपतः ।। दद्याद्दण्डं तु पालाशं यो मे दण्ड इति ब्रुवन् । एवं भागवतो वेदमुपनीतोऽभ्यसेद्गुरोः ।।'' इति वैष्णवैरेव मन्त्रैः पुंसवनप्रभृतिविवाहपर्यन्तसंस्कारविधानात् पारमैकान्त्यभङ्गाभावाय तथैव क्रियता मित्याशङ्क्य ''एवं भागवतो नित्यं वासुदेवपरायणः । भगवद्वंशजातस्तु कुर्यादन्यो न चार्हति ।।'' इति तत्रैव तदन्येषां भागवतानां निषेधदर्शनात् तदधिकारिविशेषनियतम् । न सर्वेषाम् । अतोऽन्यमन्त्रैः करणे न पारमैकान्त्य भञ्जकत्वमित्याह । ஆனபின்பு इति ।

(सा.सः) ननु किमेतैः पारमैकान्त्यभङ्गशङ्कावहैर्वैदिकैः । पाञ्चरात्रसंहिताविशेषेषु भगवत्परतया स्थितमन्त्रविशेषैरेव क्रियाविशेषाः क्रियन्तामित्यत्राह । ஆனபின்பு इत्यादिना ।

**मूः - आगमसिद्धान्तानुवर्ति**களான **संहिताविशेष**ங்களில் **प्रतिनियत**மாகச்சொல்லும் **मन्त्रविशेष**ங்களைக்கொண்டு **क्रियाविशेष**ங்கள் **अनुष्ठि**க்கவொண்ணாது. **अधिका(रि**களுக்கு**) रादि**களுக்கு **अनुरूप**மாக

(सा.दीः) आगमसिद्धान्तமாவது? शाखान्तर-सूत्रान्तरंபோலே श्रीपाञ्चरात्रத்தில் सिद्धान्तभेदம் पूर्वाचारமில்லாமையாலென்று वाक्यशेषம்- ஆனால் आगमसिद्धान्तादिनिष्ठர்க்கு वैदिकपरिगृहीतवेदोक्तधर्मानुष्ठानமில்லாமையால் எங்ஙனம் मोक्षप्राप्ति? என்னவருளிச் செய்கிறார். अधिकारिகளுக்கு इत्यादिயால். श्रीपाञ्चरात्रशास्त्रம் अधिकारानुरूपமாக आगमसिद्धान्तादिभेदेन चतुर्धा विभक्तமாயிருக்கும்படியுமென்கை.

(सा.स्वाः) आगमेति - पाञ्चरात्रं चतुर्विधसिद्धान्तात्मकम् । அதில் आगमसिद्धान्तமென்று ஒரு सिद्धान्तமென்றபடி - இப்படி आगमसिद्धान्तानुवर्तिகளான इत्यादिना सिद्धान्तभेदமுண்டானதாகச் சொன்னது கூடுமோ? पाञ्चरात्रशास्त्रं सर्वाधिकारिसाधारणமாய் एकरूपமன்றோ? अधिकारिभेदनियतचतुर्विधसिद्धान्तात्मकமானாலும் सिद्धान्तान्तरத்தில் சொன்ன मन्त्रादिகள் अन्यसिद्धान्तिகளுக்கும் नानावेदोक्ताङ्गोपसंहारन्यायத்தாலே उपजीव्यங்களாகையாலே आगमसिद्धान्तसंहिताविशेषोक्त-भगवत्परमन्त्रादिகள் सर्वसिद्धान्तिகளுக்கும் अविरुद्धங்களாகையால் अग्नीन्द्रादिमन्त्रघटितकर्मानुष्ठानं पारमैकान्त्यविरुद्धமாகாதோ? किञ्च आगमसिद्धान्तोक्तभगवत्परमन्त्रादिகள் प्रतिनियताधिकारங்களாகில் अग्नीन्द्रादिघटितवैदिकदेवतान्तरमन्त्रसाध्याराधनाङ्गकमोक्षोपायरहितागमसिद्धान्तसंहिता-विशेषनिष्ठருக்கு मोक्षपुरुषार्थहानिயே प्रसङ्गियாதோ? என்னவருளிச்செய்கிறார். अधिकारिகளுக்கு इति । श्रीपाञ्चरात्ररक्षैயில் ''सदागमादिसिद्धान्तचतुष्के सत्पदप्रद'' इति सत्पदवाच्य मोक्षहेतुत्वाभिधानात् ।

(सा.प्रः) नन्वेवं पाञ्चरात्रोक्तधर्माणं रामानुजसिद्धान्तस्थैरस्वीकार्यत्वोक्तिरनुचिता । भाष्यकारैरेव श्रीपाञ्चरात्राधिकरणे श्रीपाञ्चरात्रस्यात्यन्तं मुमुक्षूपादेयत्वसमर्थनादपसिद्धान्तप्रसङ्गादित्यत्र ''आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् । मन्त्रसिद्धान्तसंज्ञं हि सिद्धिमोक्षप्रदं नृणाम् ।। तन्त्रसिद्धान्त संज्ञं हि चतुर्वर्गफलप्रदम् ।। तन्त्रान्तरं च सिद्धान्तं चतुर्वर्गफलप्रदम् । नान्यो विमुक्तये पन्थाः मुक्त्वाश्रमविधिं सुखम् । तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ।।'' इत्यादि श्रीपाञ्चरात्रवचनानुगुण्येन पाञ्चरात्रचतुर्विध्यस्य तदुक्ताभिगमनादीनां नित्यनैमित्तिकाविरोधस्य तत्तत्सिद्धान्तनिष्ठानां वर्णाश्रमाद्यङ्गकब्रह्मविद्यया मोक्षप्राप्तेश्च प्रबन्धान्तरे प्रतिपादनात् नापसिद्धान्त इत्यभिप्रयन्नाह । अधिकारादिகளுக்கு इत्यीदना ।

(सा.विः) नन्वागमादिसिद्धान्तधर्माणां रामानुजमतनिष्ठैरपरिग्राह्यतैव स्यात् । तत्तन्त्रनिष्ठानां वेदविरुद्धाचारत्वेन तेषां मोक्षश्च न स्यादित्यत्राह । अधिकारिகளுக்கு इति ।

(सा.सः) आगमसिद्धान्तो नाम शाखान्तर-सूत्रान्तरवच्छ्रीपाञ्चरात्रे सिद्धान्तभेदः । ஒண்ணாது इत्यनन्तरं पूर्वाचाराभावादिति भावः । तर्ह्यागमसिद्धान्तानां वेदोक्तधर्मानुष्ठानाभावात् कथं मोक्षप्राप्तिरित्याह । अधिकारिகளுக்கு इति ।

**मूः - चतुर्विधपञ्चरात्रं विभक्त**மாய் நிற்கும் நிலையும் **वचनविरोध**மில்லாதவிடத்தில் **''अनुक्तमन्यतो ग्राह्यम्''**என்கிற **न्यायं** நடக்கும்படியும், நாலு **आश्रम**த்திலும் **ब्रह्मविद्यै**யும் **मोक्षलाभ**முமுண்டென்று **शारीरकादि**களிலே **समर्थि**த்தாற்போலே **आगमसिद्धान्तादि**கள் நாலிலும் **साक्षान्मोक्षोपाय**மும், **मोक्षप्राप्ति**யும் உண்டென்றும், **श्रीपाञ्चरात्ररक्षै**யிலேயும் **उपपादि**த்தோம்.

(सा.दीः) அதில் शास्त्रங்களில் व्यवस्थितமாக विधिத்தபடியொழிய தந்தாம் रुच्यनुगुणமாக सर्वकर्मங்களையும் நடத்தினால் प्रायश्चित्तादिயும் विस्तरेण विधिக்கப்பட்டதென்கிறார்.

(सा.स्वाः) ''आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् । मन्त्रसंज्ञं हि सिद्धान्तं सिद्धिमोक्षफलप्रदम् ।। तन्त्रसंज्ञं हि सिद्धान्तं चतुर्वर्गफलप्रदम् । तन्त्रान्तरं तु सिद्धान्तं वाञ्छितार्थफलप्रदम् ।।'' इति हयग्रीवसंहितायामभिधानात् - '' प्रदक्षिणप्रणामादिराद्यान्तेऽन्यत्र केवलम् । विहितं नार्चनं कुर्याद्राजराष्ट्रभयावहम् ।।'' इति पाद्मेऽभिधानात् । ''तन्त्रेणैकेन कर्तव्यं कर्षणादिषु नारद । यत्तन्त्रेण समारब्धं तत्तन्त्रेणैव कारयेत् ।। अनुक्ताँश्चान्यतन्त्रेषु निरीक्ष्यान्यत्र योजयेत् । विशेषांश्च मुनिश्रेष्ठ त्वन्यथा राष्ट्रनाशकृत् ।।'' इति नारदीयेऽभिधानाच्च । ''गोदानं च विपर्यासं मन्त्राणां च महामते । ध्यानानां चैव मुद्राणां देवतानां तथैव च ।। अन्येषामेवमादीनां व्यत्यासं न समाचरेत् ।।'' इति पारमेश्वरेऽभिधानाच्च । ''ततस्सिद्धान्तसाङ्कर्यं नाचर्तव्यं कृतात्मभिः । यद्यदिष्टतमं लोके पूर्वसिद्धाविरोधि तत् ।। प्रतिग्राह्य यथान्योऽन्यं विरुद्धं सन्त्यजेद्बुधः ।'' इत्यभिधानाच्चेत्यादि प्रकरणे बहुप्रमाणोपपादन पूर्वकं व्यवस्थापितமென்றபடி- शारीरकादिகளிலே इति युक्तिगर्भोक्तिः । आश्रमान्तरविहित धर्मरूपाङ्गवैकल्ये अपि स्वविहितकर्माङ्गकब्रह्मविद्यान्वयமும், तत्फल मोक्षलाभமும் उपपादितமானாப்போலே तत्तत्सिद्धान्तिகளுக்கும், तत्तत्सिद्धान्तोक्तमन्त्रकर्माङ्ग कमोक्षोपायान्वयமும், तत्तत्फललाभமும், समर्थिக்கக்குறையில்லையென்று கருத்து- आदिशब्देन श्रीगीताभाष्यादिसङ्ग्रहः ।

(सा.विः) ''आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् । मन्त्रसिद्धान्तसंज्ञं हि सिद्धिमोक्षप्रदं नृणाम् ।। तन्त्रसिद्धान्तसंज्ञं हि चतुर्वर्गफलप्रदम् । तन्त्रान्तरं च सिद्धान्तं चतुर्वर्गफलप्रदम् ।। नान्यो विमुक्तये पन्थाः मुक्त्वाश्रमविधिं सुखम् ।। तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ।।'' इति पाञ्चरात्रं चतुर्विध्येन विभज्य तत्तदधिकारानुगुण्येन धर्माः प्रतिपादिताः । तेषु यथाधिकारं मिश्रयजनं कुर्वतामप्यविरोधस्थले ''अनुक्तमन्यतो ग्राह्यम्'' इति न्यायेन अभिगमनादिधर्माणां ततस्सङ्ग्रहे न विरोधः । शाखाप्रतिनियतधर्मानुष्ठायिनामिव न मोक्षविरोधोऽपीति श्रीपाञ्चरात्ररक्षायामुपपादितमिति भावः । एवं शास्त्रमर्यादामनङ्गीकृत्य स्वरुचिमात्रेण पारमैकान्त्यभङ्गस्स्यादिति पाञ्चरात्रधर्मानुष्ठाने - ''स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः । अज्ञानादथवा लोभात्त्यागेन पतितो भवेत् ।। स्वगृह्ये विद्यमाने यः परगृह्योक्तमाचरेत् । भ्रूणहत्यासमंश्च तस्य स्वगृह्यस्यावमानतः ।।'' इत्युक्तरीत्या-

(सा.सं:) चतुर्विधपञ्चरात्रமும் इति । आगमसिद्धान्त, मन्त्रसिद्धान्त, तन्त्रसिद्धान्त, तन्त्रान्तरसिद्धान्त-भेदाच्चतुर्विधत्वम् ।

**मूः - आगमसिद्धान्तानुवर्ति**களான **संहिताविशेष**ங்களில் **प्रतिनियत**மாகச்சொல்லும் **मन्त्रविशेष**ங் களைக்கொண்டு **क्रियाविशेष**ங்கள் **अनुष्ठि**க்கவொண்ணாது. **अधिका(रि**களுக்கு**) रादि**களுக்கு **अनुरूप**மாக

(सा.दीः) आगमसिद्धान्तமாவது? शाखान्तर-सूत्रान्तरंபோலே श्रीपाञ्चरात्रத்தில் सिद्धान्तभेदம் पूर्वाचारமில்லாமையாலென்று वाक्यशेषம்- ஆனால் आगमसिद्धान्तादिनिष्ठர்க்கு वैदिकपरि गृहीतवेदोक्तधर्मानुष्ठानமில்லாமையால் எங்ஙனம் मोक्षप्राप्ति? என்னவருளிச் செய்கிறார். अधिकारिகளுக்கு इत्यादिயால். श्रीपाञ्चरात्रशास्त्रம் अधिकारानुरूपமாக आगमसिद्धान्तादिभेदेन चतुर्धा विभक्तமாயிருக்கும்படியுமென்கை.

(सा.स्वाः) आगमेति - पाञ्चरात्रं चतुर्विधसिद्धान्तात्मकम् । அதில் आगमसिद्धान्तமென்று ஒரு सिद्धान्तமென்றபடி - இப்படி आगमसिद्धान्तानुवर्तिகளான इत्यादिना सिद्धान्तभेदமுண்டானதாகச் சொன்னது கூடுமோ? पाञ्चरात्रशास्त्रं सर्वाधिकारिसाधारणமாய் एकरूपமன்றோ? अधिकारिभेदनि-यतचतुर्विधसिद्धान्तात्मकமானாலும் सिद्धान्तान्तरத்தில் சொன்ன मन्त्रादिகள் अन्यसिद्धान्तिகளுக்கும் नानावेदोक्ताङ्गोपसंहारन्यायத்தாலே उपजीव्यங்களாகையாலே आगमसिद्धान्तसंहिताविशेषोक्त-भगवत्परमन्त्रादिகள் सर्वसिद्धान्तिகளுக்கும் अविरुद्धங்களாகையால் अग्नीन्द्रादिमन्त्रघटितकर्मानुष्ठानं पारमैकान्त्यविरुद्धமாகாதோ? किञ्च आगमसिद्धान्तोक्तभगवत्परमन्त्रादिகள் प्रतिनियता-धिकारங்களாகில் अग्नीन्द्रादिघटितवैदिकदेवतान्तरमन्त्रसाध्याराधनाङ्गकमोक्षोपायरहितागमसिद्धान्तसंहिता-विशेषनिष्ठருக்கு मोक्षपुरुषार्थहानिயே प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார். अधिकारिகளுக்கு इति । श्रीपाञ्चरात्ररक्षैயில் "सदागमादिसिद्धान्तचतुष्के सत्पदप्रद" इति सत्पदवाच्य मोक्षहेतुत्वाभिधानात् ।

(सा.प्रः) नन्वेवं पाञ्चरात्रोक्तधर्माणं रामानुजसिद्धान्तस्थैरस्वीकार्यत्वोक्तिरनुचिता । भाष्यकारैरेव श्रीपाञ्चरात्राधिकरणे श्रीपाञ्चरात्रस्यात्यन्तं मुमुक्षूपादेयत्वसमर्थनादपसिद्धान्तप्रसङ्गादित्यत्र "आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् । मन्त्रसिद्धान्तसंज्ञं हि सिद्धिमोक्षप्रदं नृणाम् ।। तन्त्रसिद्धान्त संज्ञं हि चतुर्वर्गफलप्रदम् ।। तन्त्रान्तरं च सिद्धान्तं चतुर्वर्गफलप्रदम् । नान्यो विमुक्तये पन्थाः मुक्त्वाश्रमविधिं सुखम् । तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ।।" इत्यादि श्रीपाञ्चरात्रवचनानुगुण्येन पाञ्चरात्रचतुर्विध्यस्य तदुक्ताभिगमनादीनां नित्यनैमित्तिकाविरोधस्य तत्तत्सिद्धान्तनिष्ठानां वर्णाश्रमाद्यङ्गकब्रह्मविद्यया मोक्षप्राप्तेश्च प्रबन्धान्तरे प्रतिपादनात् नापसिद्धान्त इत्यभिप्रयन्नाह । अधिकारादिகளுக்கு इत्यीदना ।

(सा.विः) नन्वागमादिसिद्धान्तधर्माणां रामानुजमतनिष्ठैरपरिग्राह्यतैव स्यात् । तत्तन्त्रनिष्ठानां वेदविरुद्धाचारत्वेन तेषां मोक्षश्च न स्यादित्यत्राह । अधिकारिகளுக்கு इति ।

(सा.सं:) आगमसिद्धान्तो नाम शाखान्तर-सूत्रान्तरवच्छ्रीपाञ्चरात्रे सिद्धान्तभेदः । ஒண்ணாது इत्यनन्तरं पूर्वाचाराभावादिति भावः । तर्ह्यागमसिद्धान्तानां वेदोक्तधर्मानुष्ठानाभावात् कथं मोक्ष प्राप्तिरित्याह । अधिकारिகளுக்கு इति ।

**मूः - चतुर्विधपञ्चरात्रं विभक्त**மாய் நிற்கும் நிலையும் **वचनविरोध**மில்லாதவிடத்தில் **''अनुक्तमन्यतो ग्राह्यम्''**என்கிற **न्यायं** நடக்கும்படியும், நாலு **आश्रम**த்திலும் **ब्रह्मविद्यै**யும் **मोक्षलाभ**முமுண்டென்று **शारीरकादि**களிலே **समर्थि**த்தாற்போலே **आगमसिद्धान्तादि**கள் நாலிலும் **साक्षान्मोक्षोपाय**மும், **मोक्षप्राप्ति**யும் உண்டென்றும், **श्रीपाञ्चरात्ररक्षै**யிலேயும் **उपपादि**த்தோம்.

(सा.दीः) அதில் शास्त्रங்களில் व्यवस्थितமாக विधिத்தபடியொழிய தந்தாம் रुच्यनुगुणமாக सर्वकर्मங்களையும் நடத்தினால் प्रायश्चित्तादिயும் विस्तरेण विधिக்கப்பட்டதென்கிறார்.

(सा.स्वाः) ''आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् । मन्त्रसंज्ञं हि सिद्धान्तं सिद्धिमोक्षफलप्रदम् ।। तन्त्रसंज्ञं हि सिद्धान्तं चतुर्वर्गफलप्रदम् । तन्त्रान्तरं तु सिद्धान्तं वाञ्छितार्थफलप्रदम् ।।'' इति हयग्रीवसंहितायामभिधानात् - '' प्रदक्षिणप्रणामादिराद्यान्तेऽन्यत्र केवलम् । विहितं नार्चनं कुर्याद्राजराष्ट्रभयावहम् ।।'' इति पाद्मेऽभिधानात् । ''तन्त्रेणैकेन कर्तव्यं कर्षणादिषु नारद । यत्तन्त्रेण समारब्धं तत्तन्त्रेणैव कारयेत् ।। अनुक्ताँश्चान्यतन्त्रेषु निरीक्ष्यान्यत्र योजयेत् । विशेषांश्च मुनिश्रेष्ठ त्वन्यथा राष्ट्रनाशकृत् ।।'' इति नारदीयेऽभिधानाच्च । ''गोदानं च विपर्यासं मन्त्राणां च महामते । ध्यानानां चैव मुद्राणां देवतानां तथैव च ।। अन्येषामेवमादीनां व्यत्यासं न समाचरेत् ।।'' इति पारमेश्वरेऽभिधानाच्च । ''ततस्सिद्धान्तसाङ्कर्यं नाचर्तव्यं कृतात्मभिः । यद्यदिष्टतमं लोके पूर्वसिद्धाविरोधि तत् ।। प्रतिग्राह्य यथान्योऽन्यं विरुद्धं सन्त्यजेद्बुधः ।'' इत्यभिधानाच्चेत्यादि प्रकरणे बहुप्रमाणोपपादन पूर्वकं व्यवस्थापितமென்றபடி- शारीरकादिகளிலே इति युक्तिगर्भोक्तिः । आश्रमान्तरविहित धर्मरूपाङ्गवैकल्ये अपि स्वविहितकर्माङ्गकब्रह्मविद्यान्वयமும், तत्फल मोक्षलाभமும் उपपादितமானாப்போலே तत्तत्सिद्धान्तिகளுக்கும், तत्तत्सिद्धान्तोक्तमन्त्रकर्माङ्ग कमोक्षोपायान्वयமும், तत्तत्फललाभமும், समर्थिக்கக்குறையில்லையென்று கருத்து- आदिशब्देन श्रीगीताभाष्यादिसङ्ग्रहः ।

(सा.विः) ''आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् । मन्त्रसिद्धान्तसंज्ञं हि सिद्धिमोक्षप्रदं नृणाम् ।। तन्त्रसिद्धान्तसंज्ञं हि चतुर्वर्गफलप्रदम् । तन्त्रान्तरं च सिद्धान्तं चतुर्वर्गफलप्रदम् ।। नान्यो विमुक्तये पन्थाः मुक्त्वाश्रमविधिं सुखम् ।। तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ।।'' इति पाञ्चरात्रं चतुर्विध्येन विभज्य तत्तदधिकारानुगुण्येन धर्माः प्रतिपादिताः । तेषु यथाधिकारं मिश्रयजनं कुर्वतामप्यविरोधस्थले ''अनुक्तमन्यतो ग्राह्यम्'' इति न्यायेन अभिगमनादिधर्माणां ततस्सङ्ग्रहे न विरोधः । शाखाप्रतिनियतधर्मानुष्ठायिनामिव न मोक्षविरोधोऽपीति श्रीपाञ्चरात्ररक्षायामुपपादितमिति भावः । एवं शास्त्रमर्यादामनङ्गीकृत्य स्वरुचिमात्रेण पारमैकान्त्यभङ्गस्स्यादिति पाञ्चरात्रधर्मानुष्ठाने - ''स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः । अज्ञानादथवा लोभात्त्यागेन पतितो भवेत् ।। स्वगृह्ये विद्यमाने यः परगृह्योक्तमाचरेत् । भ्रूणहत्यासमंश्च तस्य स्वगृह्यस्यावमानतः ।।'' इत्युक्तरीत्या-

(सा.संः) चतुर्विधपञ्चरात्रமும் इति । आगमसिद्धान्त, मन्त्रसिद्धान्त, तन्त्रसिद्धान्त, तन्त्रान्तरसिद्धान्त-भेदाच्चतुर्विधत्वम् ।

**मूः** - இப் शास्त्र(த்தில்)ங்களில் **व्यवस्थित**மாக **विधि**த்தபடியொழியத்தந்தாமுக்கு **रुचि**த்த **मन्त्र**ங்களைக்கொண்டு **सर्वकर्म**ங்களையும் **अनुष्ठि**த்தால் **प्रायश्चित्तादि**களும் பரக்கச்சொல்லப் பட்டது. ஆனபின்பு **मुक्त**னாமளவும் **स्वाधिकारानुगुण**மாக **शास्त्रं**சொன்ன கட்டளையன்றிக்கே **कैङ्कर्यं**பண்ணவிரகில்லை- இப்படி **प्रपन्न**னுக்கும் **शास्त्रवश्य**னாய் **शास्त्रोक्तकैङ्कर्य**மே பண்ண வேண்டுகையாலே **विधिनिषेधलङ्घनपक्ष**மும்'

---

(सा.दीः) இப் शास्त्रங்களிலென்று துடங்கி-இனி आदेहपातं शास्त्रवश्यतै இவனுக்குத்தவிரா தென்று निगमिக்கிறார். ஆனபின்பு इत्यादिயால். இப்படி शास्त्रवश्यत्वसाधनத்தால் फलिத்த अर्थத்தைச்சொல்லுகிறார். இப்படி प्रपन्नेत्यादिயால். विधिनिषेधलङ्घनपक्षமாவது? यथेष्टाचरणम् -

---

(सा.स्वाः) இனி मन्त्रसाङ्कर्यத்தில் निषेधमात्रமன்றிக்கே प्रत्यवाय प्रायश्चित्तोपदेशமும் विरोधिக்குமென்றருளிச்செய்கிறார். இப் शास्त्रத்தில் इति "शास्त्रमन्त्रक्रियादीनां मूर्तीनां भवनस्य च । देशिकस्याभिजातस्य यथापूर्वं परिग्रहः ।। तथैव यावत्कालं तु नाचर्तव्यं तदन्यथा । विपरीते कृते चात्र राजराष्ट्राद्यनर्थकृत् ।। ततस्समाचरेद्यत्नात्प्रतिष्ठां प्राक्प्रकारतः ।" इति पारमेश्वरादौ प्रोक्तமென்று கருத்து- இப்படி प्रपन्नனுக்கு आदेहपातं शास्त्रवश्यतास्थापनத்தை निगमिக்கிறார். ஆனபின்பு इति । இப்படியானாலும் भगवत्पक्षமும் कतिपयाचार्यसङ्गृहीतமானாப்போலே स्वरूपत्यागादिपक्षமும் कतिपयाचार्यसङ्गृहीतமானபடியாலே இது उपादेयமன்றென்கை கூடுமோ? भगवत्पक्षமும் अलेपकர் சொல்லுகிற सर्वधर्मत्यागवचनविरुद्धமாகையாலே शास्त्रसंप्रदायविरोधமும் तुल्यமன்றோ? என்ன उक्तयुक्तिயினாலே தானே उक्तानुक्तविरुद्धसर्वपक्षங்களும் अनुपादेयங் களென்றருளிச் செய்கிறார். இப்படி प्रपन्नனுக்கு इति-இப்படி, उक्तप्रकारेण । भगवच्छास्त्रमूल-श्रीभाष्यकारादिसंप्रदायोक्तिயாலே என்றபடி- सत्त्वस्थர்க்கு इति । अस्मत्पक्षं सत्तर्कन्यायानुगृहीतशास्त्र-संप्रदायानुगुणமாகையாலே पक्षान्तरங்கள் तद्विरुद्धங்களாகையாலே सत्त्वस्थர்க்கு अनुपादेयங்கள். तत्पक्षनिष्ठர் केवलतयानिष्ठரென்று கருத்து- विधिनिषेधेति । विधिनिषेधलङ्घनपक्षமும்.

---

(सा.प्रः) उक्तार्थानङ्गीकारे "स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः । अज्ञानादथवा लोभात्त्यागेन पतितो भवेत् ।। स्वगृह्ये विद्यमाने यः परगृह्योक्तमाचरेत् । भ्रूणहत्त्यासमं तस्य स्वगृह्यस्यावमानतः ।।" इत्याद्यनेकवि धप्रत्यवायं सूचयन्नामोक्षं शास्त्रानुगुण्येनैव कैङ्कर्यं कार्यमित्याह । இப் शास्त्रங்களிலே इत्यादिना । विधिनिषेधलङ्घनपक्षமும், विहितनिषिद्धत्यागपक्षமும் इति ।

---

(सा.विः) महान् प्रत्यवायस्तन्निवृत्त्यर्थं प्रायश्चित्तादिकं च स्यादित्याह । இப் शास्त्रங்களில் इति । प्रायश्चित्तादीत्यादिशब्देन पुनस्स्वसूत्रोक्तविधानेन कर्मानुष्ठानं च विवक्षितम् । एवं तत्तत्पक्ष प्रतिक्षेपफलितमर्थमाह । இப்படி प्रपन्नனுக்கும் इति । विधिनिषेधलङ्घनपक्षमिति । विधिलङ्घनं, विहितत्यागः । निषेधलङ्घनं, निषिद्धानुष्ठानं चेति पक्ष इति भावः ।

---

(सा.सं:) இப் शास्त्रங்களிலே, सिद्धान्तचतुष्टयात्मक पञ्चरात्रशास्त्र एव वैदिकेऽपि प्रपन्ने इममर्थं निगमयति ।-ஆனபின்பு इति । इत्थं शास्त्रीयसरणेरेवानुवर्तनीयत्वसमर्थनेन पक्षान्तराणां प्रतिक्षिप्तत्वमाह ।- இப்படி इति । विधिनिषेधलङ्घनपक्षे कृत्याकरणमकृत्यकरणं च ।

**मूः - विहितनिषिद्धत्यागपक्ष**மும், **वर्णाश्रमधर्म**ங்கள் **औपाधिक**ங்களாகையாலே **स्वरूपज्ञानं** பிறந்தவனுக்கு **त्याज्य**ங்கள் என்கிற **पक्ष**மும், இவை செய்யவுமாம், தவிரவுமாம், என்கிற **पक्ष**மும், இவை தவிர்ந்தாலும் உகப்பிழக்குமத்தனையே வேறொரு **प्रत्यवाय**மில்லை என்கிற **पक्ष**மும், இவை **अनुष्ठि**யாத போது **लोकविरोधमात्र**மே **प्रत्यवाय**மென்கிற **पक्ष**மும், மற்றும் இப்புடைகளிலுள்ள **पक्ष**ங்களெல்லாம் **संयङ्न्यायानुगृहीतशास्त्रसंप्रदायविरुद्ध**ங்களானபடியாலே **सत्त्वस्थ**ர்க்கு **अनुपादेय**ங்கள்.

(सा.दीः) विहितनिषिद्धत्यागपक्षமாவது? இரண்டையும் त्यजिக்கை. वर्णाश्रमेत्यादि । இப் पक्षத்தில் वर्णाश्रमानुबन्धिயல்லாத सत्यवचनादिसामान्यधर्मங்கள் उपादेयங்களாம். இவை செய்யவும் इत्यादि । இவை, वर्णाश्रमधर्मங்கள். तृतीयचतुर्थपक्षங்களில் निषिद्धं त्याज्यम् । உகப்பிழக்கும், भगवत्प्रीतिயை யிழக்குமென்கை-புடை, प्रकारமென்றபடி- प्रपन्नனுக்கு भगवच्छास्त्रादिகளில் प्रपन्नत्वமடியாக वैदिककर्मங்களை निषेधिத்து आचारभेदं विधिத்ததில்லையோ? என்னவருளிச் செய்கிறார்.

(सा.स्वाः) यथेष्ट सञ्चारपक्षமுமென்றபடி- विहितनिषिद्धत्यागपक्षமும், विहितनिषिद्धयो-स्त्यागपक्षமுமென்றபடி - புடை, प्रकारமென்றபடி-ஆனாலும், प्रपन्नனுக்கு प्रपत्तिशास्त्रங்களிலே சில वैदिकधर्मங்களை निषेधिத்து अपूर्वமாக சில अभिगमनादिகளை विधिக்கக் காண்கையால் सर्वधर्मस्वरूपत्यागं கூடாதே? என்னவருளிச்செய்கிறார்-

(सा.प्रः) "दग्धाखिलाधिकारत्वाद् ब्रह्मज्ञानाग्निना मुनिः । वर्तमानश्श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः" इत्युक्तेश्शास्त्रवश्यत्वाभावः प्रथमपक्षः । विहिताननुष्ठानं निषिद्धाननुष्ठानं च द्वितीयपक्षः । "एकशय्यासनम्" इत्यारभ्य "नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैस्सह । आरनालं न सेवेत कदाचिद्भगवत्परः ।। नान्यं देवं नमस्कुर्यान्नान्यदायतनं विशेत् । आद्यं कर्माभिगमनमुपादानं ततः परम् ।। इज्या च पश्चात्स्वाध्यायस्ततो यागस्ततः परम् ।। अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ।। अष्टाविंशतिमेवाथ जपेन्न्यासादिकं द्विजः ।। मन्त्ररत्नं जपेद्भक्त्या यावज्जीवं द्विजोत्तमः । मुमुक्षुर्नित्यमुक्तश्च मन्त्ररत्नं सदा जपेत् ।। द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् । अच्छिद्रपञ्चकालज्ञस्स तु भागवतस्स्मृतः ।।" इत्यादौ प्रपन्नानां त्याज्यतया कर्तव्यतया च क्रियाविशेषाणां प्रतिपादनाद्विशेषविधौसामान्य निवृत्ति न्यायेन स्मार्तनिवर्त्यत्वादेवेत्यत्र सामान्यतोऽपि वचनतः प्राप्तस्य .कण्ठोक्त्या-

(सा.विः) विहितनिषिद्धत्यागமும் इति । विहितत्यागः, नित्यनैमित्तिकानुष्ठान त्यागः । निषिद्धत्यागः । निषिद्धपरदारगमनादिवर्जनमिति पक्षः । वर्णाश्रमधर्मங்கள் इति । वर्णाश्रमधर्माणां त्याज्यत्वेऽपि सत्यवचनादिसामान्यधर्मा अनुष्ठेया इति पक्षः । இவை, एते वर्णाश्रमधर्माः । தவிரவுமாம், त्यक्तव्या वा स्युः । செய்யவுமாம், अनुष्ठेया वा स्युरिति पक्षश्च । உகப்பிழக்குமத்தனை, भगवतः प्रीत्यभावमात्रम् । வேறொரு प्रत्यवाय முமில்லை, पृथङ् निग्रहो नास्तीति पक्षश्च । लोकविरुद्धमात्रமே प्रत्यवायம், लोकगर्हणमेव प्रत्यवायः । ननु ततोऽन्यदनिष्टमिति पक्षः । மற்றுமிப் புடைகளிலுமுள்ள पक्षங்களெல்லாம், एतत्प्रभृतिषु विद्यमानावान्तरभेदाश्च वर्णाश्रमधर्मेष्वेव स्वाधि-कारोचिता अपि केचन त्याज्याः । केचनानुष्ठेया इत्यादिपक्षा इत्यर्थः । ननु, प्रपन्नानां संन्यासि-नामिव प्राचीनधर्मान्निषिद्ध्य विलक्षणधर्माणां भगवद्भागवताराधनादीनां विधानादेव प्राचीनधर्मपरित्यागो न दोषायेत्यत्र संन्यासिनां गार्हस्थ्याश्रमप्रयुक्तधर्मनिषेधेऽपि सन्ध्यावन्दनादिनिषेधाभावादिह प्रपन्नत्वेन -

(सा.संः) विहितनिषिद्धत्यागपक्षे तु न निषिद्धानुष्ठानम् । किं तु कृत्याकरणमात्रम-ननु केषुचित्कतिपयकर्मस्वरूपत्यागपूर्वकं कर्मान्तरविधानवत्प्रपन्नस्य च भागवतत्वोपाधिना वैष्णवधर्मशास्त्रेषु कर्मविधानात्सामान्यशास्त्रीयनित्यकर्मलोपस्स्यादित्यत्राह ।

**मूः - सन्न्यासाश्रमस्थ**ர்க்குப் பண்டுள்ளவை சிலவற்றை **निषेधि**த்துப் புதிதாக சிலவற்றை **विधि**க்குமாப்போலே **भागवतत्व** மடியாகச் சிலவற்றை **निषेधि**த்துச் சிலவற்றை **अपूर्व**மாக **विधि**த்தாலும்,

**''सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु''**

**इत्यादि**களாலே **अवश्यकर्तव्य**ங்களாகச்சொல்லப்பட்ட **कर्म**ங்களைவிடவொண்ணாது. **धर्मशास्त्रसूत्रभेद**ங்களிற்போலே-

(सा.दीः) सन्न्यासाश्रमेत्यादियால்- विशेषங்களை विधिத்து சிலவற்றை निषेधिத்தாலும் साधारणமான सन्ध्यावन्दनादिகளைவிடவொண்ணாதென்கை- ஆகிலும் प्रपन्नனுக்கு भगवच्छास्त्रादिகள் சொன்ன सन्ध्योपासनाभेदमनुष्ठेयமாகாதோ? என்ன அது तत्तच्छास्त्रावलम्बिகளுக்கே अनुष्ठेयமென்கிறார்- धर्मशास्त्रेत्यादियால் आपस्तम्बबोधायनादिसूत्रभेदங்களிலும் मन्वादिகளிலும் சொல்லும் आचारभेदस्तत्तत्संप्रदायस्थनियतமாமாப்போலே.

(सा.स्वाः) सन्न्यासेति - वैशेषिकविधिनिषेधं सामान्यविधिप्राप्तेतरधर्मबाधकமன்று- अन्यथा सामान्यविधिसिद्धमालाकरणादिधर्मस्यापि परित्यागं प्रसङ्गिக்குமென்று கருத்து. सन्ध्योपासनादिकमावश्यकமானாலும் शुद्धभगवन्मन्त्रसाध्यभगवच्छास्त्रसंहिताविशेषादिविहित सन्ध्योपासनादिभेदத்தைப் प्रपन्नன் अनुष्ठिக்கலாகாதோ? என்னவருளிச்செய்கிறார். धर्मशास्त्रेति । मन्वादिस्मृतिகளிலும், आपस्तम्बादिसूत्रங்களிலும், विहिताचारचौलादिधर्मभेदங்களைப் போலேயென்றபடி.

(सा.प्रः) निषेधाभावे नहि वचनविरोधे न्यायः प्रवर्तते इति न्यायान्निवृत्तिर्न स्यादेवेति सोदाहरणमाह । सन्यासाश्रमस्थர்க்கு इत्यादिना । नन्वेवं स्वगृह्योक्तानामपरित्याज्यत्वे तत्रोक्तमन्त्राणामप्यपरित्याज्य त्वात् ''सान्ध्यं कर्माखिलं यत्तत्स्नानाचमनपूर्वकम् । कुर्यादष्टाक्षरेणैव नित्यं भागवतोत्तमः ।।'' इत्यादिनां मूलमन्त्रेण सन्ध्याविधायकशास्त्राणामनुष्ठानलक्षणाप्रामाण्यं स्यादित्यत्र ''स्वगृह्ये विद्यमाने यः परगृह्योक्तमाचरेत् । भ्रूणहत्यासमं तस्य स्वगृह्यस्यावमानतः ।।'' इत्याद्यनुगुण्येनाधिकारिविशेष समुच्चित्यानुष्ठान संभवान्नाप्रामाण्यप्रसङ्ग इत्याह । धर्मशास्त्रेत्यादिना ।

(सा.विः) प्राकृतावस्थानिवृत्त्या तत्प्रयुक्तकाम्यकर्माणां देवतान्तरभजनादीनां च निषेधेऽपि गार्हस्थाश्रमस्य ब्राह्मणादिवर्णस्य च निवृत्त्यभावात्तत्प्रयुक्तधर्मा अवर्जनीया एवेत्याह - संन्यासाश्रमस्थர்க்கு इति । பண்டுள்ள, पूर्वं विद्यमानान् - புதிதாக, नूतनत्वेन-ननु ''भगवद्वंशजातस्तु कुर्यादन्यो न चार्हति'' इत्यत्र प्रपन्नोऽपि भगवद्वंशज एव तदन्येषामेव तन्निषेधः । अतस्संहिताभेदरीत्यैव सन्ध्यावन्दनादिकं किं न स्यादित्यत आह । धर्मशास्त्रसूत्रेति । मन्वादिधर्मशास्त्रेषु आपस्तम्बादिसूत्रे च प्रतिनियततयोक्त आचारो यथाव्यवस्थितस्तथेहापि तत्तच्छास्त्रावलंबिनामेव तत्तदाचारः ।

(सा.संः) संन्यासेति । - ननु सामान्यतस्सन्ध्यादित्यागे हि ''सन्ध्याहीनः'' इत्युक्तापत्तिः ? संहिताद्युक्तविधया प्रपन्नस्य सन्ध्या अस्त्वित्यत्राह । धर्मशास्त्रेति । श्रुतिस्मृत्युक्तं प्रपन्नेनाप्यनुष्ठेयं चेत् ''दैवतान्यभिगच्छेत्तु'' इत्याद्युक्तदेवतान्तरभजनमपि कार्यं स्यादित्यत्राह ।

**मूः** - **भगवच्छास्त्रसंहिताभेद**ங்களிலும், **इतिहासपुराण**ங்களிலும் சொல்லும் **सन्ध्योपासनभेद**ங்க(ளை)ளவ்வோ **शास्त्र**ங்களிலேயிழிந்தவர்கள் **अनुष्ठि**க்கக் கடவர்கள். **''दैवतान्यभिगच्छेत्तु''** என்றும் **''देवस्थानप्रणामनम्''** என்றும் இப்புடைகளிலே**धर्मशास्त्रेतिहासादि**களிற்சொன்ன **आचार**மும், **परमैकान्ति**க்கு **शास्त्रबल**த்தாலே **भगवद्विषय**த்திலே **नियतम्** ।

(सा.दीः) ननु प्रपन्नனுக்கு श्रुतिस्मृत्युक्तकर्मங்கள் अनुष्ठेयங்களாகில் ''दैवतान्यभिगच्छेत्तु'' इत्यादिகளில் विहितமான देवतान्तरभजनமும் कर्तव्यமாகாதோ? என்னவருளிச்செய்கிறார். दैवतानीत्यादिயால் - இந்த धर्मशास्त्रवचनं प्रपन्नविषयத்தில் भगवदभिगमनादिना चरितार्थமாகையால் अग्निहोत्रादिகள் போலே अनन्यथासिद्धமாகாமையால்-

(सा.स्वाः) उपासनभेदங்களை इति - उपासनप्रकारभेदங்களே என்றபடி-இழிந்தவர்கள் इति - वैकल्पिकங்களிலே पूर्वाचार परिग्रहமே व्यवस्थापकமென்று கருத்து-இப்படி प्रपन्नன் शास्त्रवश्यனாகில் ''दैवतान्यभिगच्छेत्तु - देवस्थानप्रणामनम्'' என்று धर्मशास्त्रादिகளிலே சொல்லுகிற देवतान्तरनमस्कारादिகளும் प्रपन्नனுக்கு प्रसङ्गिயாதோ? என்னவருளிச்செய்கிறார். दैवतानीति । एकादश्युपवासविधानं श्रीवैष्णवविषयத்தில் शुद्धैकादश्युपवासத்தில் पर्यवसिக்கிறாப் போலே सामान्यतो देवताभिगमनादिविधानமும் प्रपन्नविषयத்தில் देवतान्तरभजनं निषिद्धமாகையாலே भगवदभिगमनादिகளிலே पर्यवसिக்கையாலே अग्निहोत्रादिवदनन्यथासिद्धविधिसिद्धமல்லாமையாலே अन्तर्यामिदृष्ट्यापि देवतान्तराभिगमनादि प्रसङ्गமில்லையென்று கருத்து- இப்படியாகில் प्रपन्नविषयத்தில் सामान्यशास्त्रसङ्कोचத்தாலே विरोधமில்லையோ? என்னவருளிச்செய்கிறார்.

(सा.प्रः) नन्वेवं सति ''आद्यं कर्माभिगमनम्'' इत्यादिना ''अच्छिद्रं पञ्चकालज्ञस्स तु भागवतः स्मृतः'' इत्यादिना च भागवतत्वमधिकृत्य अपूर्वतया विहितस्याभिगमननस्य तत्रैव ''देवतान्यभिगच्छेत्तु'' इत्यादिभिस्सर्वदेवताभिगमनरूपत्वावगमाद्देवतान्तरस्याप्यभिगन्तव्यत्वापत्त्या पारमैकान्त्यभङ्गप्रसङ्ग इत्यत्र सामान्यस्य देवताशब्दस्य विशेषवाचिप्राकरणिकभगवच्छब्दार्थे पर्यवसानस्य न्याय्यत्वान्न कोऽपि विरोध इत्याह । दैवतान्यभिगच्छेत्तुஎன்றும் इत्यादिना । ननु भागवतैस्सह सन्ध्याकालेषु-

(सा.विः) नान्येषाम् । पारमैकान्त्यभङ्गस्य परिहृतत्वात् । प्रपन्नानां विशेषविधायकप्रमाणाभावात् । स्वेच्छामात्रेण भगवद्वंश्यत्वं स्वीकृत्य अन्यशब्दस्य सङ्कोचकरणायोगात् । आपोहिष्ठेत्यादि मन्त्रैरिति । देवतान्तरमन्त्राणामेव तत्तन्नित्येषु सङ्गहीतत्वाच्चेति भावः । ननु वैदिकधर्मानुष्ठाने ''दैवतान्यभिगच्छेत्तु'' इति श्रुति स्मृतीतिहासादिषु विहितत्वाद्देवतान्तराभिगमनमपि स्यादित्याशङ्क्य पारमैकान्त्यानुरोधेन तच्छास्त्रं भगवद्विषये उपसंहार्यमित्याह - दैवतान्यभिगच्छेत्तु इति । ननु ''सन्ध्याकालेषु जप्तव्यम्'' इति सन्ध्यावन्दनकाले अष्टाक्षरजपविधानात् ।

(सा.संः) दैवतानीति । नान्यं देवं नमस्कुर्यात् । बुद्धरुद्रादिवसतिम् । प्रतिबुद्धवर्जं सेवं तु'' इत्यादि-शास्त्रशब्दविवक्षितम् । ननु ''तस्मादष्टाक्षरम्'' इत्यादेः नित्यनैमित्तिकापवादकता किं न स्यादित्यत्राह ।

मूः - ஆகையாலே ஒரு शास्त्रத்துக்கும் विरोधமில்லை,
''तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः ।
सन्ध्याकालेषु जप्तव्यं सततं चात्मशुद्धये ।।''
என்று श्रीवैष्णवधर्मशास्त्रங்களிற் சொன்னதுவும்
''द्वयमर्थानुसन्धानेन सह सदैवं वक्ता'' என்று गद्यத்தில் அருளிச்செய்ததுவும், மற்றும் இப்புடைகளிலுள்ளவையெல்லாம் अवश्यकर्तव्यங்களான नित्यनैमित्तिकங்களுக்கு विरोधं வாராதபடி அவற்றுக்குப் போக்கி மிக்க कालத்திலேயாகக்கடவது.

---

(सा.दीः) अन्तर्यामिपर्यन्तமாகவும் देवतान्तराभिगमानाद्यापादकமன்றென்றபடி. ननु ''तस्मादष्टाक्षरं मन्त्रम् - सन्ध्याकालेषु जप्तव्यम्'' इत्यादिविधियால் सन्ध्याकालादिகளில் அது नित्यनैमित्तिकங்களுக்கு अपवादமாகாதோ? என்னவருளிச்செய்கிறார். तस्मादष्टाक्षरमित्यादियால்.

---

(सा.स्वाः) ஆகையால் इति । सामान्यशास्त्रங்களுக்கும் ईषत्सङ्कोचंசொன்னாலும் सर्वात्मना बाधकமில்லாமையாலே सर्वधर्मपरित्यागपक्षத்தில் प्रपन्नविषये विशेषविधिகளுக்கு अत्यन्तबाधेन विरोधंபோலே ஒரு शास्त्रविरोधமில்லையென்று கருத்து-ஆனாலும் प्रपन्नனுக்கு सन्ध्योपासनादि-धर्मசொன்னது கூடுமோ? ''तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः । सन्ध्याकालेषु जप्तव्यं सततं चात्मशुद्धये ।।'' द्वयमर्थानुसन्धानेन सह सदैवं वक्ता'' इत्यादिகளிலே तत्तत्कालத்திலும், सर्वकालத்திலும், मन्त्रजपादिविधानं विरोधिயாதோ? என்னவருளிச்செய்கிறார். तस्मादिति । மற்றுமிப்புடைகளில் इति । ''गुरोर्नाम सदा जपेत्'' इत्यादिகளிலுமென்றபடி. अवश्येति साभिप्रायम् । तस्मादष्टाक्षरमित्यादिना विहितमन्त्रजपमनुज्ञैயாகையாலே अवश्यं कर्तव्य-नित्यनैमित्तिका-विरुद्धकालத்திலேயாகக் கடவதென்று கருத்து. இந்த जपमनुज्ञाकैङ्कर्यமன்றாகில் ''सततं-

---

(सा.प्रः) विशिष्याष्टाक्षरस्य जप्यत्वोक्तेरष्टाक्षरस्य द्वयस्य च सर्वदा जप्यत्वोक्तेश्च सर्वस्य कालस्य जपावरुद्धत्वान्न नित्यनैमित्तिकानुष्ठानस्य कालस्सेत्स्यतीत्यत्र श्रौतस्मार्तानवरुद्धकाल एव जपकर्तव्यत्वस्य वचानादेव सिद्धेः ''सन्ध्याहीनस्स्वगृह्ये विद्यमानेऽपि'' इत्यादिविरोधप्रसङ्गरूपन्यायानुग्रहात्सं-प्रदायानुगुण्यात् ''द्वयमर्थानुसन्धानेन सह सदैवं वक्ता'' इत्यादि वक्तुर्भाष्यकारस्याचारानुगुण्याच्च श्रौतस्मार्तानवरुद्धसन्ध्याकालपरत्वं तदनवरुद्धसर्वकाल परत्वं च स्वीकार्यमित्याह । तस्मादित्यादिना - ननु ब्रह्मचर्येणेत्याद्युक्त ऋणत्रय-

---

(सा.विः) सन्ध्यावन्दनानुष्ठाननिवृत्तेः ''द्वयमर्थानुसन्धानेन सह सदैवं वक्ता'' इति सर्वदा द्वयानु-सन्धानस्योक्तत्वाच्च । नित्यकर्मानुष्ठाननिवृत्तिरित्याशङ्क्य नित्यकर्मानुष्ठानानवरुद्धकाल एव सर्वदा जप्तव्यत्वमित्यभिप्रायात्सन्ध्यावन्दनकालेषु जप्तव्यमिति सन्ध्यावन्दनानन्तरं जप्तव्यमित्यभिप्रायाच्च न विरोध इत्याह । तस्मादष्टाक्षरमिति । एवं च सति वेदान्ताचार्यैरपि ''सकलं कालं द्वयेन क्षिपन्'' इत्युक्तत्वात्सन्ध्यावन्दनादिकर्मसु तात्पर्यं नास्तीति कस्यचिद्विप्रलम्भकस्य जिह्ममिदमेव वाक्यं प्रतिनिबध्नाति । அவற்றுக்குப் போக்கிமிக்க कालத்திலே इति ।

---

(सा.सं:) तस्मादिति । उक्तार्थे प्रमाणं दर्शयति ।

मूः - ''श्रौतस्मार्ताविरुद्धेषु कालेषु जपमाचरेत्''
என்று नारदादिகளும் சொன்னார்கள்.
''हुत्वाऽग्नीनग्निहोत्रादावुक्तं कालम (पि) विक्षिपन्''
என்று वङ्गीपुरத்து நம்பி அருளிச்செய்தார். भाष्यकारர் अन्तिमदशैயிலும் வருந்தியெழுந்திருந்து सन्ध्याकालத்திலே जलाञ्जलिप्रक्षेपं பண்ணியருளினார்.

(सा.दीः)இவ் अर्थத்தில் प्रमाणंகாட்டுகிறார்- श्रौतस्मार्तेत्यादि । पूर्वसम्मतिயையும் காட்டுகிறார். अग्निहोत्रादाविति । இதில் श्रीभाष्यकारादिवृद्धाचारமுமுண்டென்கிறார்- श्रीभाष्यकारர் इत्यादिயால். வருந்தி, प्रयासப்பட்டென்கை. औपाधिकत्वेन वर्णाश्रमधर्मत्यागத்தினுடைய असंभवத்தை दोषान्तरकथनार्थमुपक्षेपिக்கிறார்.

(सा.स्वाः) चात्मशुद्धये - सह सदैवं वक्ता'' इत्याद्यज्ञासमभिव्याहारமும் अवश्यकर्तव्यங்களான इति विशेषणोपादानமும் व्यर्थமாகப் प्रसङ्गिக்கும். இந்த अर्थं न्यायसिद्धमात्रமன்றிக்கே वचनத்தாலும் व्यवस्थापितமென்றருளிச்செய்கிறார்- श्रौतेति । ஆனாலும் न्यायத்தாலும் वचनத்தாலும் आर्षवचनத்துக்கு व्यवस्थैகூடினாலும் गद्यத்திலே ''सह सदैवं वक्ता'' என்று श्रीभाष्यकारர் அருளிச்செய்கையாலே संप्रदायविरोधं प्रसङ्गिயாதோ? என்ன तदव्यवहितशिष्यரான वङ्गीपुरத்து நம்பி विशिष्याग्निहोत्रादिधर्ममनुष्ठेयமென்று சொல்லுகையாலே भाष्यकारोक्तिயும் नित्यनैमित्तिकानवरुद्धकाले द्वयवचनविषयैஎன்றருளிச்செய்கிறார்- अग्निहोत्रादाविति । श्रीभाष्यकारोक्तिविरोधे तच्छिष्याद्युक्ति यथाकथञ्चिन्नेयैயன்றோ? என்னவருளிச்செய்கிறார்- भाष्यकारர் इति । उक्ति अनुष्ठानार्थैயாகையாலே अनुष्ठानविरोधे उक्ति अन्यथासिद्धैஎன்று கருத்து- अन्तिमदशैயில் इति । अशक्तिदशैயாகையால் त्यागं பண்ணவேண்டியிருக்க तदानीमनुष्ठानमत्यावश्यकत्व द्योतकமென்றபடி - வருந்தி=प्रयासப்பட்டு - இப்படி देवतान्तरमन्त्रघटित धर्मं पारमैकान्त्य भञ्जकமாகையாலே तद्घटितधर्मं त्याज्यமென்கிற पक्षத்தை शास्त्र-संप्रदायादिविरोधத்தாலே निराकरिத்து तत्प्रसक्तानुप्रसक्तचोद्यங்களையும் परिहरिத்து वर्णाश्रमधर्मस्वरूपं शरीरेन्द्रियाद्यौ-पाधिकமாகையாலே आत्मस्वरूपप्रयुक्तமல்லாமையால் त्याज्यமென்கிற प्राङ्निरस्तपक्षத்தில் सिंहावलोकनन्यायத்தாலே अनुष्ठानविरोधादिदूषणமுமருளிச்செய்கிறார்.

(सा.प्रः) निवृत्तिवद्वर्णाश्रमौपाधिकनित्यनैमित्तिक निवृत्तिः किं न स्यादित्यत्र ''यस्त्वेवं ब्राह्मणो विद्यात् - तस्य देवा असन् वशे - स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति - देवर्षिभूतात्मनृणां पितॄणाम्'' इत्यादिवद्विशिष्य निवर्तकाभावेऽप्यौपाधिकत्वमात्रेण त्याज्यत्वं प्रतिबन्द्या परिहरन् प्रभावव्यवस्थाधिकारोक्तं ''केशवार्चा गृहे यस्य न तिष्ठति महीपतेः । तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं हि तत् ।। यो मोहादथवाऽऽलस्यादकृत्वा केशवार्चनम् । भुङ्क्ते स याति नरकान् सूकरेष्वपि जायते ।।'' इत्यादिभिरुक्ताहारनियमம், ''तस्मै देयं ततो ग्राह्यम्'' इत्युक्तोपादाननियमम्,-

(सा.विः) तेषामुपयुक्तकालं विनाधिककाल इत्यर्थः । வருந்தி எழுந்திருந்து, श्रमेण स्थित्वा जलप्रक्षेपं, अर्घ्य प्रदानम् - दोषाभावे सति तादृशदशायामप्यवैकल्येन न तादृशमनुष्ठानं क्रियेतेति भावः । सिंहावलोकनन्यायेन औपाधिकतया वर्णाश्रमधर्मास्त्यक्त्वा इति पक्षे विशिष्य दोषं लङ्घयितुं तं पक्षमुपक्षिपति ।

(सा.संः) श्रौतेत्यादिना । नित्यादेर्वर्णाद्युपाधिमद्देहाद्युपाधिकत्वेन त्याज्यत्वे उक्ते बाधकमाह ।

**मू:** - ஆகையால் **वर्णाश्रमधर्म**ங்கள் **औपाधिक**ங்களென்று **त्यजि**க்கை **पूर्वानुष्ठानादिविरुद्धम्** । இப்படி **त्यजि**க்கில் **देहेन्द्रियाद्युपाधि**களையொழிய **मालाकरणदीपारोपणादिविशेषकैङ्कर्य**ங்களும் **अनुष्ठि**க்கவொண்ணாமையால் அவையுமெல்லாம் **औपाधिक**ங்களாய்த் **त्याज्य**ங்களாம். அவை **अनुष्ठि**க்க **आशै**ப்படில் அவற்றுக்கு **योग्यतापादक**ங்களான **शौचाचारसंस्कारादि**களையும் விடவொண்ணாது. ஆனபின்பு,

**''आहार-ग्र(गृ)ह-मन्त्रार्थ-जात्यादिनियमैर्युतः ।**

---

(सा.दीः) ஆகையால் वर्णेत्यादि । विपक्षத்தில் बाधकமருளிச்செய்கிறார். இப்படி त्यजिக்கில் इत्यादिயால். शक्तिमान् अधिकारिயாகையால், पाण्यादिमाने शक्तனாகையாலென்கை. साधित्த अर्थத்தை कारिकैயால் सङ्गृह्यகாட்டுகிறார். आहारेत्यादिயால் । आहारनियमமாவது- देशकालसम्पर्कजात्यादिदुष्टங்களான अन्नங்களை परिग्रहिயாமை. गृहनियमமாவது-

---

(सा.स्वाः) ஆகையால் इति । ஆகையால் श्रीभाष्यकारர் अर्घ्यप्रदानंசெய்தருளுகையால். अनुष्ठानादीति । आदिशब्देन उक्तिविरोधं सङ्ग्रहिக்கப்படுகிறது. पूर्वानुष्ठानादि विरोधमभ्युपगम्यापि त्यजिக்கில் बाधकமருளிச்செய்கிறார். இப்படி इति । இந்த बाधकத்துக்கு समाधानமே वर्णाश्रमधर्मத்துக்கும் समाधानமென்றருளிச்செய்கிறார்- அவையும் इति । योग्यतेति - आज्ञानुज्ञयोर-नुष्ठाने युक्त्यविशेषे अपि अकरणे अनर्हताद्यापादकतया आज्ञायामवश्यानुष्ठेयतैயென்று கருத்து. आचारेति । शौचादिकमाचारः । गर्भाधानादिक्रिया संस्कारः । आदिशब्देन सन्ध्यादयो गृह्यन्ते । இப்படி अनुज्ञायोग्यतापादकங்களான नित्यनैमित्तिकங்கள் अनष्ठेयங்களென்றது கூடுமோ? कृत्स्नानुष्ठानमवश्यமன்றோ? आश्रमान्तरस्थர்க்கும் योग्यतापादकौपासनादिकमनुष्ठेयமாக प्रसङ्गिயாதோ? स्वर्गाद्यर्थकाम्यधर्मமும் भगवत्प्रीणनமாகையாலே कैङ्कर्यरूपतयाऽनुष्ठेयமாக प्रसङ्गिயாதோ? इत्यादि-शङ्कैகளைப் परिहरित्துக்கொண்டு उक्तार्थத்தைக் कारिकैயால் सङ्ग्रहिக்கிறார்- ஆனபின்பு इत्यादिना । वर्णाश्रमधर्ममवश्यमनुष्ठेयமான பின்பு என்றபடி. आहारेति । आहारनियमः, ''जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिः इत्युक्तसात्त्विकाहारनियमः । गृहनियमः, पतिताद्यनधिष्ठिते गृहे वासः । अथवा - ग्रहः, ग्रहणम् ।

---

(सा.प्रः) ''आपो हीत्यादिभिर्मन्त्रैः'' इत्युक्तं मन्त्रनियमम्, ''अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः'' इत्युक्तं मन्त्रार्थनियमं, ''वैदिकं ब्राह्मणानां तु राज्ञां वैदिकतान्त्रिकम् । तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकं तु वा ।।'' इत्युक्तस्वजात्यनुगुणकर्मनियमं, ''न प्रदोषे इरिं पश्येत्'' इत्युक्तं कालनियमं च अविस्मरणाय दर्शयन् क्रियमाणं सर्वं कैवलभगवत्कैङ्कर्यरूपमनुसन्दधीतेत्याह- ஆகையால் इत्यादिना । एवं प्रमाणतर्काभ्यां शास्त्रीया परित्याज्यत्वमुक्त्वा -

---

(सा.विः) ஆகையால் इति । पूर्वानुष्ठानविरोध एव दोष इति भावः । विपक्षे बाधकमप्याह । இப்படி त्यजिக்கில் इति । ஆசைப்படில்=आशां स्वीकरोति चेत् । ननु कात्स्न्येन नित्यनैमित्तिकाना-मनुज्ञाकैङ्कर्याणां चानुष्ठानं कर्तुमशक्यमित्याशङ्क्य प्रागुक्तं स्मारयति-आहारग्रहेति । -

---

(सा.सं:) ஆகையால் इत्यादिना । साधितेऽर्थे सङ्ग्रहकारिकां प्रागुक्तमेव स्मारयति । आहारेति ।

**मूः - कुर्याल्लक्ष्मीशकैङ्कर्यं शक्त्याऽनन्यप्रयोजनः ॥**
**मङ्गल्य सूत्रवस्त्रादीन् संरक्षति यथा वधूः ।**
**तथा प्रपन्नः शास्त्रीयपतिकैङ्कर्यपद्धतिम् ॥**
**यद्वन्मङ्गल्यसूत्रादेस्त्यागे संरक्षणेऽपि वा ।**
**रक्षेन्निरोधैर्भोगैर्वा पतिस्तद्वदिहापि नः ॥-**

(सा.दीः) भागवतोत्तरदेशापरित्यागादि । मन्त्रनियमं, देवतान्तरमन्त्रपरित्यागம் । अर्थनियमं, कुलराषण्डपतिताद्यर्थापरिग्रहः । जातिनियमமாவது? जात्यन्तराचारपरिहारம் । आदिशब्दத்தால் आश्रमादिपरिहारம் । लक्ष्मीशपदेन लक्ष्मीविशिष्टனே कैङ्कर्य प्रतिसंबन्धी नान्यனென்று தோற்றுகிறது. शक्त्या, यथाशक्तिயென்றபடி- स्वधर्मानुष्ठानमवश्य परिपालनीयமென்கிறார்- मङ्गल्यसूत्रेति । मङ्गल्य सूत्रादि पतिसंबन्ध सूचकम् । मङ्गल्य सूत्रपरित्यागத்தில் पति எப்படி दण्डித்து रक्षिக்கும். संरक्षणத்தில் इष्टप्रदानத்தால் எப்படியவளை रक्षिக்கும் அப்படியே शास्त्रीयकैङ्कर्यத்தினுடைய परित्यागसंरक्षणங்களில் ईश्वरனும் செய்யுமென்கை- इह, सदाचारविषये । पतिः, ईश्वरः । तद्वत्, शिक्षैயாலும் इष्टप्रदानத்தாலும் रक्षकனுமாமென்கை.

(सा.स्वाः) सदाचार्यदिव रहस्यादिकं ग्राह्यमिति नियमः । मन्त्रनियमः, देवतान्तरमन्त्रकाम्यमन्त्रवर्जं मूलमन्त्रादिजप एव कार्यः । अर्थनियमः, कुलटादिभ्योऽपरिग्रहः । जातिनियमः, ''ब्राह्मण आयुधं सङ्गृह्णीयात् । न स्वरः प्रणवोऽङ्गानि'' इत्युक्तेः । आदिशब्दाद्वर्णाश्रमादि नियमः । एतादृशनियम-युक्तस्सन् - शक्त्या, यथाशक्ति । अनन्यप्रयोजनः, भगवत्प्रीत्येक प्रयोजनः । नतु स्वरूपविरुद्ध स्वर्गादि प्रयोजनः - लक्ष्मीशकैङ्कर्यं, नतु देवतान्तरकैङ्कर्यं वा लक्ष्मीविनिर्मुक्तभगवन्मात्रकैङ्कर्यं वा कुर्यादित्यर्थः । ननु सुखादिप्रयोजनाभावे कथं कैङ्कर्यमनुष्ठेयं स्यादित्याशङ्कां श्लोकद्वयेन लौकिकदृष्टान्त प्रदर्शनपूर्वकं परिहरति । मङ्गल्येति । वधूरिति । पतिप्रीत्येक प्रयोजनेति शेषः । तथेति । रक्षतीत्यनुषङ्गः । वधूः पतिप्रीत्येक प्रयोजना सती यथा मङ्गल्यसूत्रवस्त्रादीन् पतिसंबन्धसूचकान् रक्षति । तथा प्रपन्नोऽपि स्वामिप्रीत्येकप्रयोजनस्सन् शास्त्रीयपतिकैङ्कर्यपद्धतिं शास्त्रमन्तरेण बद्धदशायां पतिप्रीणनस्य ज्ञातुमशक्यत्वादिति भावः । रक्षतीत्यर्थः । यद्वत्, यथा मङ्गल्यसूत्रादेस्त्यागे । निरोधैः, उचितदण्डनैः वधूं पतिर्यथा रक्षेत् । मङ्गल्यसूत्रादेस्संरक्षणे उचितभोगैर्यथा वा संरक्षेत्तद्वदिहापि शास्त्रीय कैङ्कर्यत्यागरक्षणयोरपि । नः, अस्मान् - पतिः, सर्वस्वामी श्रियःपतिः । उचितदण्डनोचित भोग प्रदानाभ्यां रक्षतीत्यर्थः । ஆகையால் अकरणத்தில் दण्डनरूपबाधकंவருகையாலும்.

(सा.प्रः) तत्त्यागानुष्ठानयोश्शिष्टगर्हा प्रशंसाफलकत्वाच्चात्याज्यत्वं लोकन्यायसिद्धमित्यभिप्रयन्नाह । मङ्गल्यसूत्रेत्यादिश्लोकद्वयेन । भोगैर्निरुन्ध्यात् । भोगैर्हाषयेत् ।

(सा.विः) व्याख्यातम् । सर्वधर्मानुष्ठानमवश्यं परिपालनीयमिति लौकिक दृष्टान्तेन द्वाभ्यां श्लोकाभ्या माह । मङ्गल्येति । संरक्षणे रक्षेत् । त्यागे निरुन्ध्यादित्यन्वयः । भोगैर्निरुन्ध्यात् । भोगहानिं कुर्यादित्यर्थः ।

(सा.संः) स्वधर्मानुष्ठानस्य अवश्यपरिपालनीयतां दृष्टान्ततो द्वाभ्यां दर्शयति । मङ्गल्येति संरक्षणतदभावाभ्यां इष्टानिष्टयोः प्रदर्शकम् । यद्वदिति । संरक्षणे रक्षेत् । त्यागे भोगैर्निरुन्ध्यात् । भोगहीनां कुर्यादित्यर्थः ।

**मूः - अवज्ञार्थमनर्थाय भक्तजन्मादि चिन्तनम् ।**
**शास्त्रव्यवस्थामात्रार्थं न तु तद्दुष्यति क्वचित् ।।**
**अत एव हि शास्त्रेषु तत्तज्ज्ञात्यैव दर्शिताः ।**
**धर्मव्याधतुलाधारशबरीविदुरादयः ।।**

---

(सा.दीः) शास्त्रीयनियमங்கள் अनुष्ठेयமாகில் तदर्थமாக श्रीभागवतருடைய जन्मादिनिरूपणं प्रसङ्गியாதோ? என்னவருளிச்செய்கிறார். अवज्ञार्थमिति । आचारव्यवस्थापकரான ऋषिகளும் अत एव धर्मव्याधादिகளை तत्तज्ज्ञात्या निर्देशिத்தார்களென்கிறார்- अत एव हीति । ज्ञानिகளாகையாலவர்களுக்கு मांसविक्रयादिनिषेधलङ्घनத்தில் दोषமில்லையென்னும் शङ्कैயை स्वधर्मानुष्ठानत्वेन परिजिहीर्षुக்களாய் वैश्यत्वादिना दर्शिப்பித்தார்களென்கை. धर्मव्याधனென்று व्याधனாகவும், तुलाधारனென்று वैश्यனாகவும், शबरीயென்று निषादिயாகவும், विदुरனென்று क्षूत्रत्वेनவும் சொன்னார்களிறேயென்கை.

---

(सा.स्वाः) करणத்தில் पतिप्रीति तद्गुणानुभववृद्ध्यादिभोगं सिद्धिக்கையாலும், शास्त्रीयकैङ्कर्यमवश्य-मनुष्ठेयமென்று கருத்து. जात्यादिनियमैर्युत इत्युक्तमनुपपन्नम् । ''यश्शूद्रं भगवद्भक्तं निषादं श्वपचं तथा । वीक्षते जातिसामान्यात् स याति नरकं नरः ।।'' इति भागवतविषये जातिनिरूपणस्य नरकहेतुत्वोक्तेरित्यत आह - अवज्ञार्थमिति । अवज्ञार्थं भक्तजन्मादिचिन्तनमेव, जात्यादि चिन्तनमेवानर्थाय । शास्त्रव्यवस्थार्थं । तत्, जात्यादिचिन्तनम् । नतु, क्वचिदपि न दुष्यतीत्यर्थः । एवं व्यवस्थायां प्रमाणमाह । अत एवहीति । अत एव हि, शास्त्रव्यवस्थार्थं जात्यादिचिन्तनस्यादोषत्वादेव हि । शास्त्रेषु पुराणादिषु - धर्मव्याधादयः जातिख्यापनपूर्वकमेव दर्शिताः । तेषां वृत्तिरपि स्वस्वजात्यनुगुणैव तत्र दर्शितेत्याह ।

---

(सा.प्रः) भोगहीनां कुर्यादित्यर्थः । ननु जात्यादिनियमैर्युत इति भागवतोत्पत्तिनिरूपणं ''स याति नरकं नरः'' इत्युक्तप्रकारेण अनर्थपर्यवसायीत्यत्र ''मद्भक्तं श्रोत्रियं वापि निषादं श्वपचं तथा । वीक्षते जातिसामान्यात् स याति नरकं नरः ।।'' इति तत्पूर्वांश एव शूद्रत्व, निषादत्व, श्वपचत्वाद्यु-क्तिनयादवमन्तव्यत्वज्ञापनार्थं जात्युक्तिर्दोषायेति दर्शयन् धर्मव्याधाद्युपाख्यानेष्वपि तत्तज्ज्ञात्यैव व्यवहारं तु तत्तज्ज्ञात्यनुगुणवृत्तिनियमं सोदाहरणमाह । अवज्ञार्थमित्यादिना ।

---

(सा.विः) ननु जात्यादिनियमेन ''वैदिकं ब्राह्मणानां स्याद्राज्ञां वैदिकतान्त्रिकम्'' इत्याद्युक्तम् । तथाचोपदेशाद्यर्थमज्ञातविषये जातिपरीक्षणं कर्तव्यम् । तच्च ''मद्भक्तं श्रोत्रियं वापि निषादं श्वपचं तथा । वीक्षते जातिसामान्यात् स याति नरकं नरः ।। वैष्णवोत्पत्तिचिन्तनम्'' इत्यादिभिः प्रतिषिद्धम् । तत्कथं व्यवस्थानं संभवतीत्यत्राह - अवज्ञार्थमिति । शास्त्रीयव्यवस्थासिद्ध्यर्थं जात्यादिप्रदर्शनं दृष्टं चेत्याह । अत एव हि शास्त्रेष्विति । ''उवाच धर्मसूक्ष्माणि वैश्यो धर्मार्थतत्त्ववित् । व्याधः परमधर्मात्मा'' इत्यादिना जातिर्दर्शितेति भावः ।

---

(सा.सं:) जात्यादिनियमैर्युतः तयैव वर्तने भागवतेष्वयं ब्राह्मणः अयं शूद्रः इति तत्तदनुगुणयैव प्रवृत्तिनिवृत्त्याभाव्यमिति जन्मादिनिरूपणरूपापचारः प्रसज्येतेत्यत्राह । अवज्ञार्थमिति । उक्तव्यवस्था-सिद्ध्यर्थमेव जात्यैव कीर्तनं तत्र तत्र दृष्टमित्याह । अत एव हीति । तेषां वृत्तिरपि स्वस्वजात्यनुगुणैव तत्र तत्रेतिहासे दर्शितेत्याह ।

मूः - **स्वजात्यनुगुणैवैषां वृत्तिरप्यैतिहासिकी ।**
**विशेषविधिसिद्धं तु तद्बलात् तत्र युज्यते ॥**
**देशकालाधिकार्यादिविशेषेषु व्यवस्थिताः ।**
**न धर्माः प्राप्तिमर्हन्ति देशकालान्तरादिषु ॥**

(सा.दीः) स्वजात्यनुगुणेति । धर्मव्याधादिகளுக்கு इतिहासத்தில் श्रूयमाणமான वृत्तिயும் स्वस्वजात्यनुगुणैயாகவேயிருக்கும்- क्वचिद्विदुरादिகளில் भक्तियोगादिनिष्ठै ब्रह्ममेधादि विशेषங்கேட்கப்படுமாகில் तद्बलात्=विशेषविधिसिद्धत्वத்தாலே युक्तமென்று अङ्गीकार्यமென்கிறார். । विशेषेति । विदुरादिகளில் विशेषाचारदर्शनத்தைக்கொண்டு इदानीन्तनருக்கும் तादृशधर्मप्राप्तिயாகக்கடவது? என்னவருளிச் செய்கிறார்- देशकालेति । देशविशेष कालविशेषादिகளில் व्यवस्थितமான धर्मம் अन्यदेशकालाधि-कार्यादिகளில் வரக்கூடாதென்கை- देशान्तरத்தில் अव्यवस्थितधर्मं देशान्तरத்தில் अनुष्ठिக்கப் படாதிறே- नर्मदोत्तरदेशस्थரில் दृष्टமான उपाकृतिनियमं तद्दक्षिणदेशस्थரில் காணாமையால்.

(सा.स्वाः) स्वजात्यनुगुणेति - ऐतिहासिकी, इतिहासप्रोक्तावृत्तिरपि । स्वजात्यनुगुणा, मांसविक्रयादि वचनात् । एवकारेण सन्देहप्रश्नेऽपि ''शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे'' इति प्रणवाद्यनुच्चारणान्मर्यादातिलङ्घनं न कृतमिति द्योत्यते । ननूपाख्यानेऽपि विदुरस्य ब्राह्मणधर्मब्रह्ममध-संस्कारश्रवणं विरुध्येतेत्यत्राह । विशेषेति । आकाशवाण्या तत्र ब्रह्ममेधोऽनुशिष्ट इति विशेषविधिसिद्धम् । तत्तु विशेषविधिबलात्तत्रैव युज्यते । पाण्डवानां स्त्रीसाधारण्यवद्व्यक्तिविशेषनियतो धर्म इति भावः । ननु क्वचिद्दर्शनमात्रेण ब्रह्ममेधः अन्यत्रापि शूद्रभागवते स्यादित्यत्राह । देशेति । देशविशेषव्यवस्थिता धर्माः=कटके उपाकर्मवर्जनादयः । कालविशेषे व्यवस्थिताः अल्पद्वादश्यादिषु आमध्याह्न-कर्मणामपकृष्यानुष्ठानादिकम् । अधिकारि विशेषे व्यवस्थितधर्माः=आतुरेषु स्नानानुकल्पाः । यथा अन्यदेशेषु अन्यकालेषु अनातुराधिकारिषु च -

(सा.प्रः) विशेषविधिसिद्धमिति । अशरीरि वाक्यादिसिद्धसंस्कारविशेषादित्यर्थः । तत्र दृष्टान्त इत्युच्यते । देशकालेत्यादिना । ''इत्थं तत्राश्वमेधेन तोषय स्वजनार्दनम् । एकेनैवाश्वमेधेन तत्सहस्रं कृतं भवेत् ॥'' इत्युक्तास्सत्यव्रतक्षेत्रादि गता विशेषा यथा देशान्तरे न स्युर्यथा च ''दिवा च शुक्लपक्षश्च'' इत्याद्युक्तकालविशेषगता विशेषा नेतरकालेषु भवन्ति ।

(सा.विः) ऐतिहासिकी, इतिहासप्रोक्ता । वृत्तिरपि स्वजात्यनुगुणैव - तुलाधारस्य वैश्यत्वान्मांस-विक्रयस्तस्योचितः । मार्गमाहिषादिमांसविक्रीणनं व्याधस्याप्युचितमेवेति भावः । ननूपाख्याने विदुरस्य कथं ब्रह्ममेधसंस्कारोक्तिरत आह । विशेषविधिसिद्धं त्विति । अशरीरवाक्तत्र विशेषविधिरिति भावः । देशकालेति । यथा ''विष्ण्वालयसमीपस्थान् विष्णुसेवार्थमागतान् । चण्डालान् पतितान् वापि स्पृष्ट्वा न स्नानमाचरेत् ॥'' इत्यादिदेशकालादिभेदेन विहितधर्मव्यवस्थायाः नातिप्रसङ्गः ।

(सा.सं:) स्वजातीति । वृत्तिः । मांसविक्रयादिरूपा - अनुगुणैवेत्येवकारेण कृतेऽपि विशेषप्रश्ने ''शूद्रयोनावहं जातः'' इति प्रणवाद्यनुच्चारणान्मर्यादालङ्घनमकृतमिति द्योत्यते । ननूपाख्याने विदुरस्य ब्रह्ममेधसंस्कारो धर्मराजेन कृत इति श्रूयते । तादृशं कथमित्यत्राह । विशेषेति । विशेषविधिः, आकाशवाण्या ब्रह्ममेधो विहित इति तद्बलादित्यर्थः । तत्र, तत्रैव युज्यते । नान्यत्रेत्यर्थः । ननु क्वचिद्दृष्टमन्यत्रापि प्रसजेदित्यत आह । देशेति । श्रीविदुरादिषु विशेषविधिसिद्धमन्यत्र न प्राप्नोतीत्यर्थः । एवं मर्यादामजानन्तः केवलं भ्राम्यन्तीत्याह ।

मूः - केचित् तत्तदुपाख्यानतात्पर्यग्रहणाक्षमाः ।

कलिकोलाहलक्रीडां वर्धयन्ति रमापतेः ।।

''मातृभिः पितृभिश्चैताः पतिभिर्देवरैस्तथा ।

पूज्या भूषयितव्याश्च बहु कल्याणमीप्सुभिः ।।''

(सा.दीः) कृत युगத்தில் मधुपर्के गवालम्भं कलियुगத்திலில்லை. शास्त्र तात्पर्यग्रहणासमर्थர் சிலர் शास्त्रव्यवस्थैயைக்கழிக்கப்பார்ப்பர்களென்கிறார்- केचिदिति । भगवானுக்கு कलिकोलाहलத் தாலுண்டான क्रीडैயையென்று अन्वयம். ननु ''स च पूज्यो यथा ह्यहं'' என்று निकृष्टजातीयரிலும் शास्त्रव्यवस्थैயைத்தவிர்ந்து ब्राह्मणजातीयரும் मुख्यமான पूजै பண்ணவேண்டாவோ? என்னவருளிச்செய்கிறார்- मातृभिरित्यादि ।

(सा.स्वाः) क्वचिद्दर्शनमात्रेण न प्राप्नुमर्हन्ति । तथा विदुरादिषु विशिष्य विहितधर्मा नान्यत्र प्राप्नुवन्तीत्यर्थः । एवं चेत् केषाञ्चित्संप्रदायेषु भागवतत्वमात्रेण शूद्रत्वाद्यवगम इति कथनं कथमित्यत्राह केचिदिति । केचित्, अल्पश्रुततया तत्तदुपाख्यानतात्पर्यग्रहणाक्षमास्सन्तः कलिकोलाहलक्रीडां वर्धयन्ति । मर्यादाभञ्जनेन लीलारसमुत्पादयन्तीत्यर्थः । ननु ''सच पूज्यो यथा ह्यहम्'' इति भागवतम्लेच्छस्यापि पूज्यत्वोक्तिः कथं घटत इत्यत्र स्मृतिवचनेन दृष्टान्तप्रदर्शन-पूर्वकं परिहारमाह- मातृभिरित्यादिना । एताः, दुहितरः- मातृभिः पतिभिर्देवरैश्च पूज्या भूषयितव्याश्चेति यथोक्तम् ।

(सा.प्रः) यथा वा ''अपायाद्विरतश्शश्वत्'' इत्याद्युक्ताः ''अथोपायप्रसक्तोऽपि'' इत्याद्युक्ताश्च प्रपन्नाधिकारिगता विशेषा नेतरेषां भवतीत्यर्थः । यथा वा ''एतत्समस्तपापानां प्रायश्चित्तं मनीषिभिः । निर्णीतं भगवद्भक्तपादोदकनिषेवणम्'' इत्याद्युक्ताभक्ति कृता विशेषा नेतरेषां भवन्ति, तथा विदुरादिगतास्संस्कारादिविशेषा नेतरेषां भवन्तीत्यर्थः । नन्वेवं तर्हि ''स च पूज्यो यथा ह्यहम्'' इति विष्णुवत्पूज्यत्वोक्तिः कथमित्यत्र ''मान्या निम्नेन'' इत्युक्तरीत्या यथायोग्यं पूज्यत्वपरं तदपि सोदाहरणमाह । मातृभिरित्यादिना ।

(सा.विः) तथात्राप्यशरीरवाक्यसिद्धधर्मस्य व्यक्तिविशेषनियतत्वान्नातिप्रसङ्ग इति भावः । एवं मर्यादामजानन्तो भ्रान्ताः कलिकोलाहलक्रीडां भगवतो वर्धयन्तीत्याह । केचित्तत्तदुपाख्यानेति । मर्यादाभञ्जनेन जातिसङ्करं कृत्वा कलिकोलाहलं वर्धयन्ति, कलिमाहात्म्यमेव तदिति भावः । ननु ''न च पूज्यो यथा ह्यहम्'' इति म्लेच्छादिसाधारण्येन कथं पूज्यत्वोक्तिरित्यत्र सदृष्टान्तं परिहारमाह । मातृभिरिति । एताः दुहितरः ।

(सा.संः) केचिदिति । तात्पर्यं, भगवद्भक्तमाहात्म्यविशेषमात्रप्रख्यापनम् । क्रीडां वर्धयन्ति, मर्यादा भञ्जनेन लीलां सकलजनविषयामुत्पादयन्ति । ननु ''न च पूज्यो यथा ह्यहम्'' इति पूज्यता म्लेच्छादि साधारण्येन प्रतिपाद्यते, तत्कथमित्यत्राह । मातृभिरित्यादि श्लोकत्रयेण । पत्युर्मातृभिस्तथैव पितृभिः पत्युरनुजाः पतिभिरित्युच्यन्ते । पत्युरग्रजा देवराः ।

**मूः- ''जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।**
**तानि कृत्याहतानीव विनश्यन्ति समन्ततः ।।''**
**एवमादिषु पूजोक्तिर्यथौचित्यान्नियम्यते ।**
**भक्तम्लेच्छादिपूजोक्तिरेवमेव नियम्यताम् ।।**

**इந் नियमங்களெல்லாம் संप्रतिपन्नशिष्टानुष्ठान परम्परैயாலும் सिद्धங்கள். ஆகையால் தன் वर्णाश्रमादिகளுக்கடைத்த नियमங்களோடே-**

---

(सा.दीः) जामिகள், மணவாட்டிப் பெண்கள்- स्नुषाः என்கை ''जामिःस्वसृकुलस्त्रियोः'' इति निघण्टुः । जामिகள் श्वश्वादिகளால் पूजनीयரென்று शास्त्रத்தில் சொல்லும். அவர்களுடைய पूजैயெப்படி औचित्यத்தாலே नियमिக்கப்படுகிறது. அப்படியே अपकृष्टजातीयரில் पूजैயும் औचित्यத்தாலே नियमिக்கப்பட்டிருக்குமென்கை. मात्रादिभिः जामयः पूज्याः என்னுமிடத்தில் पूजैயாவது? वहुमानமே- अर्घ्यादिभिराराधनமன்று- அப்படியே இங்கும் पूजनं बहुमानरूप மே என்று नियमिக்கப்படும். இது शिष्टानुष्ठानத்தாலும் सिद्धமென்கிறார். இந்-नियमங்களெல்லாம் इत्यादि । उत्कृष्टजातीपர் अपकृष्टजातीयரை पूजिக்கும் नियमम्, இன்ன முண்டான नियमान्तरங்களு மென்கை. संप्रतिपन्नशब्दத்தால் सर्वसंप्रतिपत्तिसूचितम् । अन्येषां शिष्टत्वमाभिमानिकமென்று கருத்து. परमप्रकृतத்தை उपसंहरिக்கிறார்- ஆகையால் इत्यादिயால்

---

(सा.स्वाः) यथा वा जामयः=स्नुषाः अप्रतिपूजिताः यानि गेहानि शपन्ति तानि गेहानि कृत्याहतानीव समन्ततः विनश्यन्तीत्येवमादिषु पूज्यत्वोक्तिर्वन्दनीयत्वं नाचष्टे । किंतु आदरणीयत्वमाचष्टे । तद्वदत्रापि भक्तम्लेच्छादिपूजोक्तिरपि एवमेवेति नियम्यतामित्यर्थः । ஆனாலும் இந்नियमங்களுக்கு एकदेशिகளான சில शिष्टानुष्ठानமில்லாமையால் प्रत्युत नियमातिलङ्घनमेतदनुष्ठान सिद्धமாகையாலும் उक्तनियमानुष्ठानं सिद्धिக்குமோ? என்னவருளிச்செய்கிறார்- இந் नियमங்களெல்லாம் इति । संप्रतिपन्नेति । सर्वसंप्रतिपन्न-श्रीयामुनाचार्य, श्रीभाष्यकार, श्रीवत्साङ्कमिश्रादिशिष्टाचारापेक्षया सर्वा-संप्रतिपन्नशिष्टताकैकदेश्याचारो न प्रमाणமென்று கருத்து. परम्परैயாலும் इति । स्मृतीतिहासादिकமே पर्याप्तम् । अथापि शिष्टाचारமுமிந் नियमத்தில் प्रमाणமுண்டென்று கருத்து- இனி वर्णाश्रमनियममौपाधिकமானாலும் परमैकान्तिक்கு अवश्यं कर्तव्यமென்று निगमिக்கிறார்- ஆகையால் इति । ஆனாலும் अनन्यप्रयोजनः लक्ष्मीशकैङ्कर्यं कुर्यादिति विशेषिக்கவேணுமோ?

---

(सा.प्रः) जामयः, स्नुषाः । गेहानि, कुटुम्बानि । आहारग्रहेत्यादिना स्वोक्तनियमानां परम्परया प्राप्तशिष्टाचारसिद्धिं दर्शयन्नुक्तहेतुभिस्तत्तद्वर्णाश्रमोचित मेव कैङ्कर्यं सर्वैर्भागवतैः कार्यमित्याह - இந் नियमங்களெல்லாம் इत्यादिना । एवं च परमैकान्तिकृतकैङ्कर्ये तदितरकृतकैङ्कर्यात् वैलक्षण्यं तदुभय स्वरूपप्रदर्शनेन ज्ञापयन्-

---

(सा.विः) जामयः, स्नुषाः । पूर्वस्मिन् वचने पूज्या इत्युक्तम् । परस्मिन् वचने अप्रतिपूजिता इत्युक्तम् । तत्रौचित्याद्यथादरविषयतया पूजोक्तिर्नियम्यते । नतु मातृपित्रादिभिः प्रणामाराधनादि कार्यमित्युच्यते । तद्वदत्रापि ''मान्या निम्नेन चेतसा'' इत्युक्तप्रकारेण मान्यत्वपरैव पूजो-क्तिर्नियन्तव्येत्याह एवमादिष्विति । एतादृशनियमाः संप्रदायसिद्धा एवेत्याह இந் नियमங்களெல் லாம் इति । वर्णाश्रमधर्मकर्तव्यतामुपसंहरति ஆகையால் इति । அடைத்த नियमங்களோட, स्वीकृत नियमैस्सह । एवं क्रियमाणकैङ्कर्यस्य प्रपन्नसंबन्धिनः इतरकृताद्वैलक्षण्यं दर्शयंस्तदवान्तरविभागमाह-

---

(सा.सः) जामयः, स्नुषाः - परमप्रकृतमुपसंहरति- ஆகையால் इति ।

मूः - भगवत्कैङ्कर्यं பண்ணுகை परमैकान्तित्वविरुद्धமன்று-
साक्षाल्लक्ष्मीपतावेव कृतं कैङ्कर्यमञ्जसा ।
सारकल्क विभागेन द्विधा सद्भिरुदीर्यते ।।
कृतकृत्यस्य कैङ्कर्यं यदनन्यप्रयोजनम् ।
गुर्वादिरक्षणार्थं वा तत् सारं संप्रचक्षते ।।
डम्भार्थं परपीडार्थं तन्निरोधार्थमेव वा ।
प्रयोजनान्तरार्थं वा कैङ्कर्यं कल्क इष्यते ।।

---

(सा.दीः) இப்படி नियमयुक्तரால் श्रियः पतिविषयத்தில் பண்ணும் कैङ्कर्यंதானும் द्विविधமென்கிறார். साक्षादिति । अञ्जसा, निश्चयेन । सारமென்றும் कल्कமென்றும் பிரிவில் सारத்தைக்காட்டுகிறார். कृतकृत्यस्येति । कृतकृत्यனென்று प्रपन्नன் । गुर्वादिरक्षणार्थं वा । वाशब्दश्चार्थे । कल्कத்தைக் காட்டுகிறார்- डम्भार्थमित्यादि । तन्निरोधार्थமென்றது. तन्मरणार्थமென்றபடி. இஸ் सारकल्ककैङ्कर्यங் களில் भगवत्प्रीतिवैषम्यத்தைக்காட்டுகிறார்.

---

(सा.स्वाः) प्रयोजनान्तरार्थकैङ्कर्यமும் स्वामिप्रीणनமாகையாலே कैङ्कर्यமாகையால் वैरूप्यமன்றிக்கே சொல்லவேண்டியிருக்க अनन्य प्रयोजनः என்று विशेषिக்கை अनुपपन्नமன்றோ? என்ன भगवत्कैङ्कर्यமே द्विविधமென்று विभागंபண்ணி सारकैङ्कर्याभिप्रायतया अनन्यप्रयोजनः என்று சொன்னதென்றருளிச்செய்கிறார்- साक्षादिति । लक्ष्मीपतावेव साक्षात्कृतं कैङ्कर्यं सारकल्कविभागेन अञ्जसा निर्णयेन द्विधा सद्भिरुदीर्यते - देवतान्तरकैङ्कर्यस्य तु सदा कल्कतया एकरूपत्वमिति भावः- सारलक्षणमाह । कृतकृत्यस्येति । स्पष्टम् । कल्कलक्षणमाह । डम्भार्थमिति - कल्कः, असारमित्यर्थः । परपीडार्थमिति, अभिचारादिकमित्यर्थः । तन्निरोधार्थं, तस्य=परस्य भगवत्कैङ्कर्यनिरोधार्थमित्यर्थः । ஆனாலும் द्विविधமென்று निर्णयिக்கக்கூடுமோ? कैङ्कर्यफलமான भगवत्प्रीति एकरूपैயாகையாலே सारासारविभागंகூடாதே? किञ्चित्प्रयोजनान्तरार्थ कैङ्कर्यंதான் सारமென்று निश्चयिக்கலாகாதோ?

---

(सा.प्रः) परमैकान्तिकृतस्य भगवन्निरतिशयप्रीतिविषयत्वमितरकृतस्य तदभावं तत्रापि प्रपत्त्यङ्गत्वाभावात्तस्य त्यागशब्दार्थत्वं चाह साक्षादित्यादिना । कल्कः, ऋजीषम् ।

---

(सा.विः) सारकल्केति । कषायादौ मूलिकारसे गृहीते केवलकाष्ठं कल्कम् । कषायात्सारः तद्वदिति भावः । डम्भार्थं परपीडार्थं, परस्य=शत्रोः व्याध्यर्थं भगवत्कैङ्कर्यम् । तन्निरोधार्थमिति । शत्रुनिरोधार्थम् । परेण कैङ्कर्ये क्रियमाणे तन्निरोधार्थमिति वा । प्रयोजनान्तरार्थमिति ऐश्वर्यपुत्राद्यर्थम् । एतत्सर्वं कल्कमिति भावः ।

---

(सा.सं:) एवं नियमयुक्ततया श्रियः पतिविषये कायं कैङ्कर्यमपि द्वेधा । तत्र सारः परिग्राह्यः, कल्कस्त्याज्यः । "तान्येव भावोपहतानि कल्कः" इत्युक्तत्वादिति भावेनाह । साक्षादिति द्वाभ्याम् - कृतकृत्यः, अनुष्ठितोपायः - भगवत्प्रीतिमन्तरेण प्रयोजनमनुद्दिश्य कृतमनन्य प्रयोजनम् - ख्यात्याद्यर्थं यत्तड्डम्भार्थं परस्य व्याध्यादिपीडा सिद्ध्यर्थम् । यद्वा, परः=प्रयोजनान्तरपरः- तस्य व्याध्यादिपीडानिवृत्त्यर्थम् । तस्य, परस्य निरोधः, मरणम् । तदर्थं यदभिचारादीत्यर्थः । प्रयोजनान्तरं, पशुपुत्रादि । तत्सर्वं कल्क इत्यर्थः । सारवत्कल्कमपि कथं प्रतिगृह्णाति भगवानिति प्रश्ने प्रतिग्रहे वैषम्यमाह ।

मूः - **परमैकान्ति**களல்லாதார் பண்ணும் **कैङ्कर्य**த்தை **सर्वेश्वर**ன் திருவடிகளாலே கைக் கொள்ளுமென்னுமிடத்தையும், **परमैकान्ति**கள் பண்ணும் **कैङ्कर्य**த்தைத் திருமுடியாலே கைக்கொள்ளுமென்னுமிடத்தையும்,

"**तत्सर्वं देवदेवस्य चरणावुपतिष्ठते**" என்றும்,

"**याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः ।**

**ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ।।**" என்றும்

**श्रीवेदव्यासभगवान्** அருளிச்செய்தார். இப்படியிவன் **भगवदाज्ञै**யாலே **अनुष्ठि**க்கிற **नित्यनैमित्तिक**ங்களும், **भगवदनुज्ञै**யாலே இவனுகப்பே **प्रयोजन**மாக **अनुष्ठि**க்கிற ஏற்றமான **कैङ्कर्य**ங்களும், இப் **प्रपत्ति**யோடு துவக்கற்று நின்றநிலை **सर्वधर्मान् परित्यज्य**என்கிற **विधान**த்தாலே **सिद्ध**மாயிற்று.

"**अतश्शक्यानि सर्वाणि न प्रपत्त्यर्थमाचरेत् । अशक्येषु च सामर्थ्यं न तदर्थं समार्जयेत् ।।**

---

(सा.दीः) परमैकान्तीत्यादिயால்- परित्यज्यவுக்கு विधिपक्षத்தில் प्रपत्तिயின் नैरपेक्ष्यविधिயே उचितமென்னும் अर्थத்தை निगमिக்கிறார் இப்படி இவன் इत्यादिயால் - ஏற்றமான, व्यतिरिक्तமானவென்கை. இந்த अर्थसिद्धिயால் फलिத்த अर्थத்தைக் காட்டுகிறார். अतश्शक्यानीति । இந்த योजनैயில் आकिञ्चन्यरूपமான अधिकारं सिद्धिக்கும்படியைக் காட்டுகிறார்.

---

(सा.स्वाः) अतिशयितभगवत्प्रीतिसाधनं सारமென்னில் அதுக்கு प्रमाणமுண்டோ? என்னவருளிச் செய்கிறார். परमैकान्तिகள் इति । परमैकान्तिகள், प्रयोजनान्तराभिसन्धिயில்லாதா ரென்றபடி-திருமுடியாலே கைகொள்ளுகிறதுவும், திருவடிகளாலே கைகொள்ளுகிறதுவும், प्रीतितारतम्यத்தாலேயிறே என்று கருத்து- वेदव्यासेति । कर्तृवैलक्षण्येन तदुक्तिविरुद्धानामना- दरणीयत्वंதோற்றுகிறது. इयता प्रबन्धेन समर्थितनैरपेक्ष्यविधिपक्षத்தை उपसंहरिக்கிறார் - இப்படி इति -ஏற்றமான, व्यतिरिक्तமானவென்றபடி - परित्यज्यஎன்கிறது. धर्मनैरपेक्ष्यविधिயாகில் प्रपत्तिக்கு नैरपेक्ष्यं सिद्धिத்தாலும் अधिकारिக்கு शक्यसर्वकैङ्कर्यादि कर्तव्यமாகையால் अनुष्ठानத்தில் वैषम्य सिद्धिயாமையாலே विधिवैय्यर्थ्यं प्रसङ्गिயாதோ? என்ன नैरपेक्ष्यविधिफलितानुष्ठानवैषम्य- मुपपादिக்கிறார்- अतश्शक्यानीति । नैरपेक्ष्यविधिயில்லையாகில் विद्यान्तरन्यायத்தாலே अङ्गत्वं प्रसङ्गिக்கையால் प्रपत्त्यर्थमिति सङ्कल्प्य कर्तव्यं स्यात् என்று अनुष्ठानवैषम्य மென்று கருத்து - अशक्येषु चेति । काम्यकर्मங்களில் अशक्याङ्गेषु सामर्थ्यसम्पादनंபோலே अङ्गत्वपक्षத்தில் अशक्यங்களில் सामर्थ्यं सम्पादनीयम् ।

---

(सा.प्रः) एवं नैरपेक्ष्यविधेः किं फलमित्याह । अतश्शक्यानीत्यादिना । अनुष्ठीयमानेषु भरन्यासार्थत्व बुद्धि निवृत्तिः फलमित्यर्थः ।

---

(सा.विः) "तान्येव भावोपहतानि कल्कः" इति स्मारितम् । एवंप्रकारेण सर्वविधीनां त्यागविधिना बाधाभावं वदन् नैरपेक्ष्यविधिपक्षमुपसंहरति இப்படி இவன் इति । ஏற்றமான कैङ्कर्यங்களும், अधिक कैङ्कर्याणि । प्रपत्तिயோடே துவக்கற்று நின்றநிலை, प्रपत्त्या सम्बन्धराहित्येन यथा सिद्ध्यन्ति तादृशस्थितिः । फलितमर्थमाह । अतश्शक्यानीति । अतः, परित्यज्येत्यस्य प्रपत्तिनैरपेक्ष्यविधिपरत्वोक्तेश्शक्यानि क्रियमाणान्यपि न प्रपत्त्यर्थं कुर्यात् । अनङ्गत्वादेव तदर्थं सामर्थ्यमपि न संपादयेत् । किन्तु यथाशक्ति कैङ्कर्यतया कुर्यादित्यर्थः । अस्यां योजनायां विधिनिरूपक नियोज्योऽधिकारी कुत्र प्रतिपत्तव्य इत्याकाङ्क्षायामाह

---

(सा.सं:) परमैकान्तीति - परित्यज्येत्यस्य विधित्वपक्षे प्रपत्तिनैरपेक्ष्ये विधिरेवोचित इत्यर्थं निगमयति । இப்படி इति । इत्थं विधिबलफलितं दर्शयति । अत इति । सामर्थ्यं, योग्यताम् । विधिपक्षे आकिञ्चन्यसिद्धिस्थलं दर्शयति ।

**मूः - இந்த योजनैயில் अधिकारமான आकिञ्चन्यமும் शोकियாதே கொள்ளென்று தேற்று விக்கிற वाक्यத்தாலே सूचितम् - अनुवादपक्षத்தில் தன் अशक्तियாலே கழிந்தவையொழிய शक्यமாய்ச் செய்கிற आज्ञानुपालनादिகளும், प्रपत्तिயில் துவக்கொண்ணாதென்னுமிடமும், एकशब्दத்தாலே विवक्षितமாகக்கடவது. இப்पक्षத்தில் मा शुचः என்கிற वाक्यं सर्वधर्मान् परित्यज्य என்று उक्तமான अधिकारத்தை**

(सा.दीः) இந்த योजनैயில் इत्यादि - अनुवादपक्षத்திலிங்கு अधिकारं सिद्धिக்கையில் प्रपत्तिயின் नैरपेक्ष्यमेकशब्दத்தில் विवक्षितமென்கிறார். अनुवादपक्षத்தில் इत्यादि - இவ் अनुवादपक्षத்தில் एकशब्दத்தில் தானே नैरपेक्ष्यं सिद्धिக்கையால் मा शुचः என்கிற वाक्यத்தின் तात्पर्यத்தை வெளியிடுகிறார் - இப்पक्षத்தில் इत्यादि । त्यागविधिपक्षத்துக்கு இன்னம் अर्थान्तरங்களுண் டென்று காட்டுகிறார்.

(सा.स्वाः) नैरपेक्ष्यपक्षத்தில் प्रपत्त्यर्थमशक्येषु सामर्थ्यं न संपादनीयமென்றபடி. இந்த नैरपेक्ष्यविधिயில் आकिञ्चन्यादिरूपाधिकारवाचकशब्दமில்லாமையாலே चरमश्लोकத்தில் अधिकारालाभं प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார்- இந்த योजनैயில் इति । இப்படியாகில் पूर्वं சொன்ன अनुवादपक्षத்தில் परित्यज्य என்கிற पदं अधिकारपरமாகையால் नैरपेक्ष्यसिद्धि எங்ஙனே? अनुवादसामर्थ्यத்தாலே अशक्यनैरपेक्ष्यै सिद्धமென்னிலானாலும் शक्यनैरपेक्ष्यं सिद्धिக்கவில்லையே? என்னவருளிச் செய்கிறார் - अनुनादपक्षத்தில் इति । अनुवादपक्षத்தில் परित्यज्यपदं अधिकारपदமாகையால் मा शुचः என்கிற वाक्यमधिकारपरமென்று पूर्वं சொல்லுகையால் पुनरुक्ति வாராதோ? मा शुचः என்கிறது परित्यज्यपदोक्ताधिकारव्यक्तीकरणार्थமாகையால் पुनरुक्तिदोषமில்லையென்னில் அந்த व्यक्तीकरणத்துக்கு प्रयोजनातिशयமுண்டோ? என்னவருளிச் செய்கிறார் - இப்पक्षத்தில் इति । अधिकारव्यक्तीकरणमुखेन-

(सा.प्रः) नन्वस्मिन् पक्षे विधिनिरूपकनियोज्यभूतोऽधिकारी कुत्र प्रतिपत्तव्य इत्याकाङ्क्षायामाह- இந்த योजनैயில் इत्यादिना । नन्वेवं तर्हि त्यागानुवादपक्षे सर्वधर्मान् परित्यज्येत्यस्याधिकारिपरत्वान्मा शुच इत्यस्य नैरर्थक्यप्रसङ्गो नैरपेक्ष्यबोधासिद्धिश्चेत्यत्राह - अनुवादपक्षத்தில் इत्यादिना । एकशब्देन नैरपेक्ष्यं बोध्यमिति भावः ।

(सा.विः) இந்த योजनैயிலே इति । शोकिயாதே கொள்ளென்று தோற்றுவிக்கிற, अशोचन्मामा- श्रयेत्येवं ज्ञापकवाक्येन । मा शुच इत्यनेनेति भावः । ननु त्यागानुवादपक्षे सर्वधर्मान् परित्यज्येत्यस्या- धिकारपरत्वान्मा शुच इति व्यर्थम्, नैरपेक्ष्यासिद्धिश्चेत्यत्राह अनुवादपक्षத்தில் इति । अशक्ति யாலே கழிந்தவையொழிய, अशक्त्या त्यक्तानि विहाय - शक्यமாய்ச் செய்கிற अज्ञानुपालनादि களும், शक्यतयानुष्ठीयमानानि । प्रपत्तिயில் துவக்கொண்ணாதென்னுமிடம், प्रपत्तिसंबन्धर- हितानीत्येतत् । एकशब्दத்திலே विवक्षितम्, नैरपेक्ष्यं तत्र सिद्धमिति भावः । मा शुच इत्यस्य वैय्यर्थ्यं परिहरति இப்पक्षத்தில் इति ।

(सा.संः) இந்த इति । अनुवादपक्षे त्याज्येत्यत्रैवाधिकारसिद्ध्या नैरपेक्ष्य सिद्धिस्थलं दर्शयति अनुवादेति । अनुवादपक्षे मा शुच इत्यनेन सूचितानन्यांश्चार्थान् दर्शयति இப்पक्षத்தில் इति ।

**मूः** - **व्यक्त**மாக்கிக் கொண்டு மேலுள்ள **निर्भरत्वादि**களை முன்னிட்டு **उत्तरकाल**த்திலிருக்கக் கடவ படியையெல்லாம் **उपलक्षि**க்கிறது. **त्यागविधिपक्ष**த்துக்கு **प्रमाणविरोधं** வாராதபடி இன்னமும் சில **गति**களுண்டு.

**"आत्माशक्यवृथायासनिवारणमिहापि वा ।**

---

(सा.दीः) त्यागविधीत्यादि - गतिகள், गमनिकैகள் - आत्माशक्येति - தனக்கு शक्यமான उपायान्तरங்களிலிவ் अधिकारिயினுடைய व्यर्थप्रयासத்தைத் திருப்புகை परित्यज्यவுக்கு अर्थம்.

---

(सा.स्वाः) मा शुचः என்கிற वाक्यमुत्तरकालीननैर्भर्योपलक्षकமென்று கருத்து. नैरपेक्ष्यविधिप्रकारनि-रूपणमतिविस्तृतமாகையாலே आत्माशक्येत्यादिग्रन्थமும் पूर्वशेषமென்று भ्रान्ति வாராமைக்காக विधिपक्षத்தில் समीचीनयोजनान्तरங்களுண்டென்று उपक्षेपिக்கிறார்- त्यागविधीति । गतिகள், प्रकारங்களென்றபடி. उपक्षिप्तार्थங்களை कारिकात्रयத்தாலே सङ्ग्रहिக்கிறார்- आत्माशक्येति । अपि वा, अथवा । इह, परित्यज्येत्यत्र- आत्माशक्येषु, स्वस्याशक्यभक्त्यादिषु । वृथाया स निवारणं, व्यर्थोद्योगनिवारणं विवक्षितमिति शेषः । यद्वा, उत्तरार्थे विद्यमाननियम्यतामिति क्रियापद-स्यानुषङ्गः । अशक्यसर्वधर्मसाधनार्थप्रयासं परित्यज्येत्यर्थः । ननु परैस्स्वरूपत्यागविधिपक्षे परीत्युपसर्गस्य लज्ञानुतापादित्यागार्थकतया सार्थक्यस्योक्तत्वादस्मिन् पक्षे परीत्युपसर्गवैय्यर्थ्यमित्यत्राह ।

---

(सा.प्रः) निर्भरत्वादीति । साधनान्तरप्रवृत्त्यभावादिरादिशब्दार्थः । निर्भरत्वादिज्ञापनद्वारा भगवत्प्रीत्यैकफलकैङ्कर्यकर्तव्यताज्ञापनपर इत्यपरः । एवं प्रमाणान्तराप्राप्ततद्विरुद्धनैरपेक्ष्यविधित्वमुपपाद्य तद्वदेवाशक्यानुष्ठानविषयकयत्नत्यागो वा, तच्छक्त्यापादककर्मानुष्ठानेच्छात्यागो वा, उपायान्तरान्वया सहत्वं वा, परित्यज्येत्यनेन विधातुं योग्यमिति श्लोकत्रयेण सङ्गृह्य तान् श्लोकान् व्याख्याति । त्यागविधिपक्षத்துக்கு इत्यादिना । आत्माशक्येत्यादिना श्लोकेन । "परि என்கிற उपसर्गத்தாலே पातकादिகளை விடுமாப்போலே रुचिवासनैயோடும் लज्ञैயோடும் கூட மருவலிடாமல் விட வேணுமென்கிறது" इत्यस्याशक्यानुष्ठानविषये रुचिवासनाभिस्सह त्यागे तात्पर्यमित्युक्तम् ।

---

(सा.विः) उपलक्षिக்கிறது, वाक्यमुपलक्षयतीति संबन्धः । एवं नैरपेक्ष्यविधिपक्षमुपपाद्य त्यागविधिपक्षे प्रकारान्तराणि संभवन्ति । अशक्यानुष्ठानविषयकयत्नत्यागो वा, तच्छक्त्यापादककर्मानुष्ठानेच्छा-त्यागो वा, उपायान्तरान्वया सहत्वं वा, परित्यज्येत्यनेन विधातुं योग्यमिति श्लोकत्रयेण तच्छ्लोकान् व्याचष्टे । त्यागविधिपक्षத்துக்கு इति । இன்னமும், इतोऽप्यधिकाः । आत्माशक्येति - आत्मा-शक्येषु, स्वासाध्येषु । वृथायासः, व्यर्थोद्योगः - अशक्यसर्वधर्मसाधनार्थवृथायासं परित्यज्येत्यर्थः । परैः, स्वरूपत्यागपक्षे लज्ञानुतापरुचिवासनाभयैश्च सह त्यागपरत्वस्योक्तत्वादिहापि तथा स्वीकारे बाधकाभाव इत्यभिप्रेत्याह । इहापि वेति ।

---

(सा.संः) இருக்கக்கடவப்படியை इत्यनेन "कदा पुनः" इत्याद्युक्तविधया रक्षणावसरप्रती-क्षणरूपदत्ताननतोक्ता - त्यागविधिपक्ष एव सर्वप्रमाणाविरोधो यथा सिद्ध्यति तथा निर्वाहान्तरानाह । आत्माशक्येत्यादिकारिकात्रयेण । स्वाशक्यभक्त्यादिविषयव्यर्थोद्योगत्यागो वा । इहापि, अशक्यवृथायासत्यागवत्यधिकारिण्यपि । परैस्त्याज्येति स्वरूपत्यागविधिपक्षे लज्ञानुतापादित्यागार्थकः परिइत्यंश इत्युक्तः ।

**मूः - लज्जापुरस्सरत्यागवादोऽप्यत्र नियम्यताम् ।।**
**स्व(स)दुष्करेषु धर्मेषु कुशकाशावलम्बतः ।।**
**आशालेशानुवृत्तिर्वा त्यागोक्त्या विनिवार्यते ।।**
**अविशिष्टफलत्वेन विकल्पो यश्च सूत्रितः ।।**

---

(सा.दीः) लज्जेति । उपायान्तरங்களில் लज्जापुरस्सरत्यागமுமிவ் अधिकारिபக்கலாமென்கை. स्वदुष्करेष्वपि इति । தனக்கு अशक्यங்களான उपायान्तरங்களில் कुशकाशावलम्बनन्यायेन வரும் आशालेशத்திலுடைய अनुवर्तनं தான் परित्यज्येति त्यागोक्तियால் निवर्तिக்கப்படுகிறதென்கை अविशिष्टेति । "विकल्पोऽविशिष्टफलत्वात्" என்கிற सूत्रத்தால் विकल्पिக்கப்பட்ட.

---

(सा.स्वाः) लज्जेति । अत्र, आत्माशक्यवृथायासनिवारणरूपार्थे । लज्जापुरस्सराः, लज्जा=अशक्यारम्भं कृत्वा सर्वं वृथा कृतमिति लज्जा पुरस्सराः पुनःपुनश्चिन्ता सन्तापादयः, तेषां त्यागवेदोऽपि नियम्यताम् । उपसर्गमहिम्ना प्रवेश्यतामित्यर्थः । लज्जानुतापादिभिस्सह शक्यवृथायासं परित्यज्येति फलितार्थः । एतावत्पर्यन्तमेकोऽर्थः अर्थान्तरमाह । सुदुष्करेष्विति । स्वदुष्करेष्विति कश्चित्पाठः । अत्यन्तदुष्करेषु स्वस्य दुष्करेषु धर्मेषु । विषयसप्तमी । தனக்கு दुष्करங்கள் इत्याद्युत्तरविवरणानुसारात्स्वदुष्करेष्वित्येव पाठस्समीचीनः । कुशकाशावलम्बतः, प्रवाहेणाकृष्यमाणस्य अत्यन्तासाधक कुशकाशावलम्बन-वद्योगाभ्यासं प्राणायामादिशिक्षया शनैश्शनैरहं साधयेयमिति सिसाधयिषारूपाशालेशानुवृत्तिर्वा त्यागोक्त्या विनिवार्यते । विनीत्युपसर्गार्थः । सुदुष्करधर्मविषयककुशकाशावलम्बनकल्पोपायाभासपरिग्रह जनिताशालेशं परित्यज्येत्यर्थः । तृतीयं कल्पमाह-अविशिष्टेति । अविशिष्टफलत्वेनेति पूर्वश्लोकस्थधर्मेष्वित्यस्यानुषङ्गः ।

---

(सा.प्रः) सुदुष्करेष्विति । यथा महानदीप्रवाहेण नीयमानस्य कुशकाशावलम्बनं नोत्तारणाय भवति, एवमेवाकिञ्चनस्य भक्तियोगोपायभूतकर्मयोगतद्धेतूपादानमपि नोत्तारणाय भवतीति तद्विषया-शालेशानिवृत्तिर्वा त्यागशब्दार्थ इत्यर्थः । अविशिष्टेत्यादि ।

---

(सा.विः) अशक्यारम्भं कृत्वा सर्वं वृथा जातमिति लज्जा-पुरस्सरशब्देन पुनः पुनश्चिन्ता-सन्तापादिर्विवक्षितः । न सर्वोऽपि परीत्युपसर्गार्थ इति भावः । अत्र परीत्युपसर्गे लज्जादित्यागविधिरपि । नियम्यतां, स्वीक्रियतामित्यर्थः । अयमेकः कल्पः - कल्पान्तरमाह । सुदुष्करेष्विति । कुशका-शावलम्बतः, प्रवाहेणाकृष्टस्य कुशकाशावलम्बनं यथा न कार्यक्षमं तथा कार्यासमर्थत्वादुपायाभास इत्यर्थः । आशालेशानुवृत्तिर्वा, योगाभ्यासं प्राणायामादिशिक्षया शनैश्शनैरहं साधयेयमित्याशा विधानं वा । त्यागोक्त्या विनिवार्यते, निषिध्यत इत्पर्थः । सर्वधर्मान् परित्यज्य, अभ्यासेन यत्किञ्चिद्धर्मान् साधयेयमित्याशां परित्यज्येत्यर्थः । तृतीयकल्पमाह-अविशिष्टेति ।

---

(सा.संः) स एव लज्जापुरस्सरत्यागवादः । सोऽपि वा । अत्र, त्यज्येत्यत्र । नियम्यतां लज्जादिभिस्सहाशक्यविषयवृथायास परित्यागो वा विधेयोऽस्त्वित्यर्थः । सुखेन दुस्साधेषु भक्त्यादिषु विषये या आशालेशानुवृत्तिः सा कुशकाशावलम्बनकल्पा तस्याः परित्यागो वा विधेय इत्याह - सुदुष्करेष्विति । "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रितविकल्पप्रदर्शनमुखेन ब्रह्मास्त्रन्यायसूचनं वात्र त्यागविधाविष्टमित्याह । अविशिष्टेति - अयं भावः । "भक्त्या परमया वापि प्रपत्त्यावा" इत्यविशिष्टफलत्वकृतविकल्पं पुरस्कृत्य-

**मूः - तन्मुखेनापि वाऽत्रेष्टं ब्रह्मास्त्रन्यायसूचनम् ।। ।।''**

**अशक्यத்திலே प्रवृत्तனைத்தவிர் என்கையும், -**

(सा.दीः) उपायान्तरங்களினுடைய परिग्रहத்தில் ब्रह्मास्त्रन्यायத்தால் विरोधंவருமென்று सूचिக்கிறது परित्यज्यஎன்னுமது. आत्माशक्येत्यादिश्लोकत्रयத்தின் अर्थங்களை वाक्यत्रयத்தால் सङ्क्षिप्य क्रमेण காட்டுகிறார்- अशक्यத்திலே इत्यादियால்-தவிரவென்கையுமென்றளவும். आत्मशक्येति वचनार्थம்

(सा.स्वाः) धर्मेषु, मोक्षोपायेषु दहरादिविद्यासु - यः विकल्पः सूत्रितश्च । ''विकल्पोऽविशिष्टफलत्वात्'' इति । चकारात् ''भक्त्या परमया वापि प्रपत्त्या वा महामते । प्राप्योऽहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः ।।'' इति विधिः गृह्यते । तन्मुखेन, विकल्पविषयोपायान्तरमुखेन- क्षणकालसाध्यतया अविश्वासेनोपायान्तरमेलनेन प्रपत्त्यनुष्ठाने ब्रह्मास्त्रन्यायेन विरोधो भवेदिति सूचनं वात्र परित्यज्येत्यत्र विवक्षितमिति शेषः । उपायान्तरमेलनं परित्यज्येत्यर्थः- परीत्युपसर्गेण भक्त्याद्यङ्गगतिचिन्तनाद्यङ्गमेलनेऽपि विरोध इति तदपि परित्यज्येति फलितार्थः । இப்படி विधिपक्षத்தில் योजनात्रयं சொன்னது கூடுமோ? इदं कुरु इदं मा कुरुஎன்கிறதன்றோ विध्यर्थம் अशक्यத்தில் आयासமும் आशैயும் स्वत एव निवृत्तமாகையாலே निवृत्ति विधिக்க வேண்டாவே? वस्तु सुन्दरताधीनाशालेशानुवृत्तिதான்विधेयैயோ? ब्रह्मास्त्रन्यायसूचनंதான் विध्यर्थமோ? என்ன उक्तकारिकार्थத்தைத்தெரிவிக்கிறார்- अशक्यத்திலே इत्यादिना।தவிர, त्यजஎன்றபடி- இது प्रथमकारिकार्थம்.

(सा.प्रः) ''विकल्पोऽविशिष्टफलत्वात्'' इत्युक्तन्यायेन परस्परनिरपेक्षतया वैकल्पिकयोरुभयोरनुष्ठानं विश्वासाभावादेवेत्यङ्गिस्वरूपनिर्वर्तक विश्वासघटनाद्यङ्ग सिद्ध्यापत्त्योपायान्तरत्यागोपस्थापनद्वारा त्यागशब्दस्य नैरपेक्ष्यबोधकत्वं वेत्यर्थः । ''सकलाङ्गोपसंहारे काम्यं कर्म प्रसिद्ध्यति'' इति न्यायादिति भावः ।

(सा.विः) विद्यासु दहरशाण्डिल्यादिषु । अविशिष्टफलत्वेन, मोक्षरूपफलाविशेषेण । विकल्पो यस्सूत्रितः, विकल्पोऽविशिष्टफलत्वादिति सूत्रोक्तः- तन्मुखेन, सूत्र प्रदर्शनमुखेन । सर्वधर्मान् परित्यज्येत्युक्ते यथा विद्याविशेषाः परस्परनिरपेक्षा एव फलसाधकास्तथेयमपि । एवं च अल्पत्वादस्या विद्यान्तरं सहायी क्रियतामिति बुद्धिकरणे प्रपत्तावितराङ्गानपेक्षस्वभावायामस्यां विश्वासशैथिल्याद् ब्रह्मास्त्रन्यायसूचनं वात्र त्यागविधाविष्टमिति भावः । कारिकादर्पणे तु ''विद्या विकल्पविधानाद्यथा परस्परनैरपेक्ष्यं तथा विद्यात्वाविशेषात्प्रपत्तावपि विद्यान्तराङ्गभूतगतिचिन्तनाद्यपेक्षावश्यंभावात्प्रस्तुतप्रपत्तावपि इतराङ्गमेलनापेक्षायां विश्वासशैथिल्येन प्रपत्ति प्रच्युत्या ब्रह्मास्त्रन्यायाद्दृढीकरणाय विद्यान्तराङ्गानि गतिचिन्तनादीनि परित्यज्येत्यर्थ इति त्यागविधिर्योज्यत इति भावः'' इति व्याख्यातम् । प्रवृत्तனை, प्रवृत्तस्य । தவிர்க்கையும், निवर्तनम् । अयं प्रथमश्लोकार्थः ।

(सा.सं:) भक्त्यङ्गगतिचिन्तनादे ब्रह्मविद्यात्वेन प्रसक्तावपि प्राप्तानितराङ्गमेलने प्रपत्ति प्रच्युत्यापत्त्या अत्र ब्रह्मास्त्रन्यायदृढीकरणाय विद्यान्तराङ्गगतिचिन्तनादिपरित्यागो वात्र विधीयत इति कारिकात्रयार्थमपि वाक्यत्रयेण संक्षिप्याह । अशक्यத்திலே इत्यादिना ।

**मूः - தனக்கு दुष्करங்களில் अभिनिवेशமுடையவனை இதுவேண்டா என்கையும், विकल्पित्त உपायान्तरங்களிலே ஒன்றை இங்கே கூட்டில் ब्रह्मास्त्र(बन्ध)न्यायத்தாலே विरोधिக்குமென்று கழிக்கையும் विधिप्रकारங்கள்-**

**''अतोऽशक्ताधिका(रि)रत्वमाकिञ्चन्य पुरस्क्रिया ।**

(सा.दीः) தனக்கு दुष्करங்களில் इत्यादियால் स्वदुष्करेषुஎன்று श्लोकार्थம்- विकल्पित्त इत्यादियால் अविशिष्टेति श्लोकार्थம் காட்டப்பட்டது. अनन्तरं सर्वधर्मान् परित्यज्यவென்றதுக்குத் தாமருளிச் செய்த अर्थविशेषங்களையெல்லாம் कारिकाद्वयेनानुक्रमिக்கிறார்- अतोऽशक्ताधिकारित्वमित्यादि - अतः, एवं निर्णीतत्वात् என்கை. अशक्ताधिकारित्वम्, उपायान्तरेष्वशक्तனிதுக்கு अधिकारि என்னு மத்தை सर्वधर्मान्परित्यज्य स्थितस्त्वमित्यशक्तस्यानुवादः । विधिपक्षे अर्थपञ्चकத்தை क्रमेणகாட்டுகிறார். अकिञ्चन्यपुरस्क्रियेत्यादियால் - नैरपेक्ष्यத்தை முன்னிட்டுக் கொண்டு कार्पण्यविधिயென்று अर्थம்

(सा.स्वाः) தனக்கு इत्यादि வேண்டா इत्यन्तं द्वितीयकारिकार्थம் । प्रथमकारिकैயில் आयासपदं प्रयत्नपरமென்றும், द्वितीयकारिकैயில் आशालेशानुवृत्तिपदं तत्कृतत्यागयत्नरूपाभिनिवेशपर மென்று கருத்து. विकल्पित्त इत्यादितृतीयकारिकार्थம். ब्रह्मास्त्रन्यायसूचनपदं तत्कृतत्यागपरமென்று கருத்து. மூன்று योजनैயும் इदं मा कुरुஎன்கிற विधिप्रकारभेदமென்று கருத்து. இப்படிनानाविधமாக परित्यज्यपदத்துக்கு अर्थवर्णनंபண்ணினது கூடுமோ? இந்த अर्थங்களெல்லாம் सत्सम्प्रदायसिद्धங் களன்றோ? என்ன उक्तार्थங்களை कारिकाद्वयத்தால் सङ्ग्रहिயா நின்றுகொண்டு இவையே सत्सम्प्रदायसिद्धங்களென்றருளிச்செய்கிறார். अतोऽशक्ताधिकारत्वमित्यादिना । स्पष्टम् ।

(सा.प्रः) एवं सर्वधर्मान् परित्यज्येत्यस्य इयता प्रबन्धेनोक्तानर्थान् सुखानुसन्धानाय श्लोकाभ्यां सङ्गृह्य दर्शयति - अतो शक्तेत्यादिना ।

(सा.विः) सुदुष्करங்களாய் கழிந்துநிற்கிற நிலத்திலே, सुदुष्करतया त्यक्तेष्वशक्येषु विषये । अभिनिवेशமுடையவனை, अभ्यासादिना शनैश्शनैस्साधयेयमित्यभिनिवेशवन्तं प्रति । இது வேண்டா, शक्त्यापादनमपि मास्त्विति । अयं द्वितीयश्लोकार्थः । विकल्पित्त उपायान्तरங்களிலே ஒன்றை, एकम्இங்கே கூட்டில், इह संसृज्यते चेत् । ब्रह्मास्त्रन्यायத்தாலே विरोधिக்கும், यथा हनूमन्तं लङ्कायां ब्रह्मास्त्रेण बदध्वा तस्मिन्नविश्वासाद्रज्जुभिरपि बन्धनकरणे ब्रह्मास्त्रं तदविश्वासाद्वृथा जातं, तथा स्यादिति । கழிக்கையும், निवारणमपीति तृतीयश्लोकार्थः । आदित आरभ्योक्तान् धर्मत्यागशब्दार्थान् श्लोकद्वयेन सङ्गृह्णाति - अतो शक्तेति । अतः, परपक्षाणां निरस्तत्वात् । अशक्ताधिकारित्वं सर्वधर्मान् परित्यज्य स्थितः त्वमित्यनुवादपक्षार्थः । विधिपक्षे पञ्च प्रकाराः । तत्राकिञ्चन्यपुरस्क्रिया, सर्वधर्मान् परित्यज्येत्यनेन ''अकिञ्चनोऽनन्यगतिः'' इति प्रकारेण आकिञ्चन्यमनुसन्दधानः । शरणं व्रजेति कार्पण्याङ्गविशिष्टप्रपत्तिर्विधीयत इत्येकः पक्षः इत्यर्थः ।

(सा.सः) अनुवाद-विधिपक्षयोस्त्यज्येत्यस्य साधुसम्मतानर्थान् द्वाभ्यां सङ्गृह्णाति । अत इत्यादिना अनुवाद पक्षे फलितार्थः । अशक्ताधिकारत्वं विधिपक्षे पञ्चधा निर्वाह उच्यते । आकिञ्चन्येत्यादिना । आकिञ्चन्यपुरस्क्रिया, कार्पण्यं पुरस्कृत्य शरणं व्रजेदिति विधिः । अङ्गतया कार्पण्यविधिरित्यर्थः ।

मूः - अनङ्गभावो धर्माणामशक्यारम्भवारणम् ।।
तत्प्रत्याशाप्रशमनं ब्रह्मास्त्रन्यायसूचनम् ।
सर्वधर्मपरित्यागशब्दार्था(र्थ) स्साधुसम्मतः (ताः) ।।
देवतान्तरधर्मादित्यागोक्तिरविरोधिनी ।।
उपासकेऽपि तुल्यत्वादिह सा न विशेषि(का) ता ।।

(सा.दीः) अनङ्गभावो धर्माणं, स्ववर्णाश्रमधर्मங்களை प्रपत्त्यङ्गत्वेन परिग्रஹியாதே என்றபடி. अशक्यारम्भवारणम्, अशक्यங்களில் प्रवृत्तिं वर्जयित्वा என்று अर्थம். तत्प्रत्याशाप्रशमनम्, அவ் अशक्यங்களில் आशैயைவிட்டென்றபடி- ब्रह्मास्त्रन्यायसूचनं, विकल्पितोपायान्तर परिग्रहத்தில் ब्रह्मास्त्रन्यायेन विरोधंவருகையாலத்தை விட்டென்றபடி- सर्वधर्मपरित्यागविषयशब्दः, सर्वधर्मान् परित्यज्यஎன்னும் शब्दः । तस्यार्थः । एवं साधुभिर्निर्व्यूढः என்றபடி- देवतान्तरेति । देवतान्तरधर्मங்களினுடைய त्यागத்தை இங்கே अविरोधाद्विवक्षिக்கலாமாகிலுமிவ் अर्थம் उपासकனுக்கும் तुल्यமாகையாலிது இங்கு विशिष्यानुसन्धेयமன்றென்று கருத்து. இனி स्थलान्तरங்களிற் சொன்ன उपायत्यागத்துக்குமிப்படியே अर्थनिष्कर्षம் பண்ணிக்கொள்வதென்கிறார்.

(सा.स्वाः) साधुसम्मताः என்கையாலே स्वरूपत्यागादियोजनान्तरं साधुसम्मत மன்றென்றும் கருத்து. सर्वधर्मत्यागशब्दத்துக்கு देवतान्तरधर्मादित्यागம் अर्थமாகலாகாதோ? அப்போது प्रमाणान्तर विरोधமில்லையே? என்னவருளிச்செய்கிறார். देवतान्तरेति । इह, अकिञ्चनं प्रतिसाधनतया प्रपत्तिविधौ । सा, देवतान्तरधर्मादित्यागोक्तिः । न विशेषिका, न व्यावर्तिका, न प्रयोजनवतीत्यर्थः । இப்படி இங்கு सर्वधर्मान् परित्यज्य என்கிற वाक्यத்துக்குப் பொருள் சொன்னது கூடுமோ?

(सा.प्रः) नन्वेवमपि देवतान्तराराधन, काम्यभगवदाराधनादीनां च प्रपन्नैरवश्यं त्यक्तव्यत्वासर्वधर्मान् परित्यज्येत्यस्य तद्विधित्वे प्रमाणान्तरविरोधाभावाच्च तदेव विधेयं किं न स्यादित्यत्र तादृशत्यागस्य भक्त-प्रपन्नसाधारणतया ''नान्यदेवं नमस्कुर्यात्'' इत्यादिसिद्धस्यात्र विधानवैय्यर्थ्यात्तदनु-पपन्नमित्याह । देवतान्तरेत्यादिना । सर्वधर्मानित्यत्रोक्तार्थं वचनान्तरेऽप्यतिदिशति । उपायेत्यादिना ।

(सा.विः) अनङ्गभावो धर्माणां इतीतरविद्यासाम्यात्प्राप्तधर्मनैरपेक्ष्यविशिष्टविधिरिति द्वितीयः पक्षः । अशक्यारम्भवारणम्, अशक्येषु दुर्बुद्ध्या यत्नं मा कुर्विति अशक्त्या यत्नत्यागविशिष्टविधिरिति तृतीयः पक्षः- तत्प्रत्याशाप्रशमनं, तेषामशक्यत्वेऽपि कतिपयेषु यथाकथञ्चिच्छक्तिसम्पा द्यानुष्ठेय मित्याशालेशं मा कुर्वित्याशालेशनिवृत्तिविशिष्टविधिरिति चतुर्थः पक्षः- ब्रह्मास्त्रन्याय सूचनं, स्वतन्त्रविद्यायाः विद्यान्तरसहायकरणे ब्रह्मास्त्रन्यायस्स्यादिति तत्त्यागविशिष्टविधिरिति पञ्चमः पक्षः । इत्थं सर्वधर्मत्यागशब्दार्थास्साधुसम्मताः - ननु देवतान्तरधर्माणामपि त्याज्यत्वात्तत्त्यागोक्तिः किमिति सूत्त (नात्र!) स्वीक्रियत इत्यत्राह । देवतान्तरधर्मादीति । आदिशब्देन काम्यभगवद्धर्मसङ्ग्रहः । अविरोधिनी, यद्यप्यनुकूले - तथापि इह सा, देवतान्तरधर्मत्यागोक्तिः । न विशेषिका । न व्यावर्तिका । कुतः? उपासकेऽपि तुल्यत्वादिह विशिष्य न विधेयेति भावः । ''उपायापाय सन्त्यागी'' इत्यत्रापि एवमेव त्यागशब्दार्थो निर्वाह्य इत्यत्राह । उपायापायेति ।

(सा.सं:) धर्माणां, गतिचिन्तनादीनाम् । विधिपक्षे पक्षान्तरसम्भवमिह तद्विवक्षानौचित्यं चाह । देवतेति । देवतान्तरोपासनादित्यागविधिर्यद्यप्यविरोधिनी । तथापि । सा, उक्तिः । न विशेषिका, उपासकान्न व्यावर्तका । एवं त्यागोक्तिस्थले क्वचिदपि स्वरूपत्यागो नार्थ इत्याह-

**मूः - ''उपायापायसंत्यागी'' इत्यादिகளிற் சொன்ன उपायत्यागமும் இப்प्रकारங்களிலே निर्वाह्यம். ''மூண்டாலு மரியதனில் முயல வேண்டா**

(सा.दीः) उपायापायेत्यादिயால் । तत्रापि उपायान् संत्यज्य என்றதுக்கு अनुवादेनவாகிலும். नैरपेक्ष्याद्यर्थங்களை विवक्षित्தாகிலும், निर्वहिக்கக்கடவதென்கை.

सर्वधर्मान् परित्यज्य என்னு மதுக்கு पूर्वोक्तषडर्थवर्णनपूर्वकं भगवच्छरणागतिயைப் பண்ண வேண்டுமென்கிறார்- மூண்டாலும் इत्यादिயால். மூண்டாலு மரியதனில் முயல வேண்டா, இத்தால் अशक्यारम्भवारणं சொல்லப்பட்டது.

(सा.स्वाः) प्रकरणान्तरத்திலே ''उपायापायसंत्यागी'' इत्यादौ उपायापायत्यागपूर्वकशरणवरणविधौ स्वरूपत्यागात्मकापायत्यागविधिसमभिव्याहारத்தாலே उपायत्यागपदं स्वरूपत्यागपरமென்று சொல்ல வேண்டுகையாலே तदैककण्ठ्येन இங்கு स्वरूपत्यागपरமென்று சொல்ல வேண்டாவோ? என்னவருளிச் செய்கிறார்- उपायेति । श्रीलक्ष्मीतन्त्रे लक्ष्म्या पृष्टो भगवानुवाच, ''उपायश्चाप्यपायश्च'' इत्यारभ्य ''उपायापायसंत्यागी मध्यमां वृत्तिमास्थितः । मामेकं शरणं प्राप्य मामेवान्ते समश्नुते ।। षडङ्गं तमुपायं च शृणु मे'' इत्यादौ என்றபடி. उपायापायसंत्यागी इत्यादिகளில் उपायत्यागं स्वरूपत्यागமானாலும் बहुप्रमाणान्तरविरोधापत्त्या अपायत्यागसम-भिव्याहृतोपायत्यागமும் उक्तप्रकारेणैव निर्वाह्यமென்று கருத்து.

இப்படி सर्वधर्मान् परित्यज्य என்று सकृत्प्रयुक्तवाक्यத்துக்கு अनेकार्यपरत्वं சொன்னது கூடுமோ? वक्ताவுக்கு लोकத்திலே एकार्थத்திலே தானே तात्पर्यं காணவில்லையோ? अनेकार्थपरत्वे वाक्यभेदமும் प्रसङ्गिயாதோ? என்ன लोकத்திலே अल्पज्ञवाक्यங்களில் तात्पर्य-नियमமானாலும் सर्वज्ञवाक्यத்தில் प्रमाणान्तराणुगुण्येन ''शर्करां पादजिह्वाभ्यामक्षिरोगी विवर्जयेत्'' इतिवदनेकार्थपरत्वं கூடுமென்றும் विशिष्टैकार्थरूपप्रपदनविधिपरतया वाक्यभेददोषமில்லையென்றும் திருவுள்ளம் பற்றி ஒரு பாட்டாலே सर्वधर्मत्यागशब्दार्थங்களை सङ्ग्रहिக்கிறார்- மூண்டாலும் इति - அரியதனில், अशक्यத்தில், மூண்டாலும், दुष्करोपायान्तरे प्रथमं प्रवर्तिத்தாலும் - முயல வேண்டா, द्वितीयादिप्रवृत्ति வேண்டா.

(सा.प्रः) प्रथमपादे स्वोक्तार्थानां स्त्रीशूद्राद्यनुसन्धानाय द्रमिडगाथया तान् सङ्गृह्याह । மூண்டாலும் इत्यादिना । மூண்டாலுமரியதனில் முயல வேண்டா, प्रवर्तमानोऽप्यशक्ये न प्रवर्तेथाः । एतेनाशक्यारम्भवारणमित्येतदुक्तम् ।

(सा.विः) इत्थमुक्तानर्थान् द्रमिडगाथयाऽपि सङ्गृह्णाति । மூண்டாலும் इत्यादिना । மூண்டாலும், प्रवृत्तावपि । அரியதனில், अशक्ये । முயல வேண்டா, आयासवान्न भवेत् । एतेनाशक्यारम्भवारण-मित्येतदुक्तम् ।

(सा.सं:) उपायेति । अनुवादेन वा, नैरपेक्ष्याद्यर्थविधानेन वा । तत्रापि निर्वाहस्य युक्तत्वादित्यर्थः ।

उक्तविधया त्यज्येत्यस्य षडर्थसङ्ग्रहेण प्रथमपादार्थं भगवत्युपकारस्मरणरूपया गाथया सङ्गृह्णाति । மூண்டாலும் इति । अशक्योपाये प्रथमं प्रवृत्तावपि नोत्तरमपि प्रवर्तितव्यम् । दुश्शकोपाये सिसाधयिषात्याग एव ज्ञानसामीचीन्यम् ।

**मूः - ईश्वराधीन**மாக வரும் **कर्तृत्वं**தானும் **ज्ञातृत्वमात्र**மென்னில் **पुरुषार्थसंपादनरुचि**யும் **तदुपाय प्रवृत्ति**யும் தவிர **प्रसङ्गि**க்கும். **ज्ञान**மும் அதின் **अवस्थाविशेष**மான **इच्छै**யுமேயுள்ளது. வேறொரு **व्यापार**மில்லையென்னிலும் **दृष्टादृष्टार्थ**ங்களானவொரு **उपाय**ங்களையும் **स्वयंप्रयोजन**மான **कैङ्कर्य**ங்களையும் **अनुष्ठि**க்க விரகில்லை. ஆகையால் **ज्ञानचिकीर्षा प्रयत्न**ங்கள் மூன்றும் **आत्मा**வுக்குண்டு.

---

(सा.दीः) அது स्वाधीनமாகையாலோ? அது प्रयत्नाश्रयत्व रूपமன்று. ज्ञातृत्व मात्रமாகையாலோ? என்று विकल्पित्து आद्यकल्पद्वयத்தை निरसित्து तृतीयपक्षத்தை दूषिக்கிறார். ईश्वराधीन मित्यादियால். इच्छाभावात्पुरुषार्थ सम्पादन रुचिதவிறும். प्रयत्नाभावात्तदुपाय प्रवृत्तिதவிறுமென்கை. ईश्वराधीनकर्तृत्वத்தை निगमिக்கிறார். ஆகையாலென்று-இனி प्रसङ्गात् इந்த कर्तृत्व स्वरूपशिक्षार्थं चिकीर्षाप्रयत्नங்கள் ज्ञानादन्यங்களென்கிற नैय्यायिकपक्षத்தை निरसिக்கிறார்.

---

(सा.स्वाः) यद्वा, இப்படிभगवदत्यन्त पारतन्त्र्यमङ्गीकरिத்து तत्कार्यமான कर्तृवलेशंகூமக்கிரானென்று சொன்னது கூடுமோ? तदपेक्षया कर्तृत्वமில்லையென்றாதல் भगवदधीन स्वतन्त्रकर्तृत्व முண்டென்றாதல் கொள்ளலாகாதோ? என்ன उक्तार्थத்துக்கு बाधकமருளிச்செய்கிறார். இவனுக்கு इति वाक्यद्वयத்தாலே. कर्तृत्वமில்லையென்றால் प्रकृत्यविद्यादि कर्तृत्वसिद्धान्ततुल्यமா மென்று சொன்னது கூடுமோ? भवत्सिद्धान्तத்திலேயும் ''जनयन्ती गुँ सरूपाम्'' என்று प्रकृत्याद्यचेतनத்துக்கும் कर्तृत्वं சொல்லவில்லையோ? प्रयत्नाश्रयत्व रूप कर्तृत्वं चेतनैकान्तम् । क्रियाश्रयत्वरूपकर्तृत्वं प्रकृत्यादि साधारणமென்னில் ஆனாலும் चेतनैकान्तமாக कर्तृत्वंவேண்டு மாகில் ज्ञानाश्रयत्वं वा ज्ञानपूर्वक चिकीर्षाश्रयत्वं वा कर्तृत्व மென்று சொல்லலாகாதோ? अतिरिक्त प्रयत्नमङ्गीकरिக்க வேண்டுமோ? என்னவருளிச் செய்கிறார். ईश्वराधीनமாக इत्यादिமூன்று वाक्यத்தாலே.

---

(सा.प्रः) तयोरपि पक्षयोरनेकदोषदुष्टत्वात्स्वोक्तं भगवदधीनयत्नवत्त्वमेव कर्तृत्वमिति वदन् प्रसङ्गादिच्छा यत्नयोर्ज्ञानावस्था विशेषत्वं चाह । ईश्वराधीनेत्यादिना ।

---

(सा.विः) उतेच्छाश्रयत्व रूपमात्रम्? उभयथापि दोष एवेत्याह । ईश्वराधीनமான इति । पुरुषार्थसम्पादनरुचि्யும் इति । इच्छा अङ्गीकारे पुरुषार्थ संपादनरुच्यभावात्प्रवृत्तिर्न स्यादिति भावः । नन्विच्छाश्रयत्वरूपमेव कर्तृत्वम् । नत्वतिरिक्त यत्नाश्रयत्व मस्तीत्युक्तौ यत्नानभ्युपगमे प्रवृत्तिर्न स्यात् । अतः प्रयत्नाश्रयत्वरूपकर्तृत्वमभ्युपगन्तव्यमित्यभिप्रेत्याह । ज्ञानமும் அதின் अवस्थाविशेषமுமான इति । इच्छैயுமே, इच्छैव । प्रवृत्त्यभावेन किञ्चिदपिकार्यं सिद्ध्येदित्याह । दृष्टादृष्टेति । प्रसङ्गाच्चिकीर्षा प्रयत्नयोः ज्ञानातिरिक्तत्वपक्षं दूषयति ।

---

(सा.संः) नियाम्यविरहे नियन्त्रत्वासिद्धेः कर्तृत्वविरहिणो नियाम्यत्वायोगात्परतन्त्राणां कर्तृत्वासम्भवाच्च सर्वात्मनियन्ता एक एवेत्यर्थासिद्ध्या निरीश्वरसिद्धान्तापत्तिरिति भावः । कर्तृत्वस्वरूपशिक्षार्थं चिकीर्षा प्रयत्नयोः ज्ञानादन्यत्वपक्षं निराकरोति ।

मूः - இதில் **चिकीर्षा प्रयत्न**ங்கள் **ज्ञान**த்தினுடைய **अवस्थाविशेष**ங்களென்னுமிடத்தை **वेदार्थसङ्ग्रह**த்தில் அருளிச்செய்த **लाघवयुक्ति**யாலே கண்டுகொள்வது, **क्रियाश्रयत्वरूप**மான **कर्तृत्वं चेतनसाधारणम्** ।

(सा.दीः) இதில்चिकीर्षेत्यादिயால். लाघवयुक्तिயாலென்றது ज्ञानावस्थाविशेषமாகக் கொண்டால் लाघवமுண்டு. अन्यथा गुणान्तरकल्पनागौरव प्रसङ्गात्என்றபடி. ''रथो गच्छति'' इत्यादिகளில் अचित् साधारणமாகையால் कर्तृत्वं ज्ञानावस्थाविशेषமென்பதெங்ஙனே? என்ன कर्तृत्वंதான் द्विविधम् । क्रियाश्रयत्वं प्रयत्नाश्रयत्वமுமென்று. அதில் क्रियाश्रयत्वरूप कर्तृत्वमचेतनத்துக்கும் கூடுமென்கிறார். क्रियाश्रयत्वमित्यादिயால்- धात्वर्थ क्रियाश्रयत्वமென்றபடி.

(सा.स्वाः) இப்படியாகில் ज्ञानातिरिक्तेच्छा प्रयत्नங்களில்லையென்கிற भवत्सिद्धान्त हानिவாராதோ? என்னவருளிச்செய்கிறார். இதில் इति । இப்படிआत्माவுக்கு ज्ञानचिकीर्षा प्रयत्नाश्रयत्वरूपं कर्तृत्वமென்னில் ''जनयन्तीम्''என்றும் ''रथो गच्छति''என்றும் लोकवेदங்களிலே अचेतनकर्तृत्व निर्देशத்துக்கு गतिயெதென்ன? அருளிச்செய்கிறார். क्रियाश्रयत्वமான इति वाक्य द्वयத்தாலே. இப்படி प्रयत्नं बुद्धिपरिणामமென்றால் प्रयत्नत्वं दुर्वचமன்றோ?

(सा.प्रः) वेदार्थ सङ्ग्रहத்தில் इति । ''विषय ज्ञानानि सुखदुःखमध्यस्थ साधारणानि । तानि च विषय विशेषाधीन विशेषणानि भवन्ति । येन विषयविशेषणविशेषितं ज्ञानंसुखस्य जनकमित्यभिमतं तद्विषयज्ञानसुखं तदतिरेकि पदार्थान्तरं नोपलभ्यते । तेनैव सुखित्व व्यवहारोपपत्तेश्च'' इत्युक्तरीत्या यत्नादेर्घटात् परस्यैव स्फुटं ज्ञानाद्भेदानुपलम्भाद्बुद्ध्यादि पदार्थानां षण्णामनन्तानां तदवान्तरविशेषाणां च पदार्थान्तराणां कल्पनादपि ''अविनाशीवारेयमात्मनुच्छित्तिधर्मा पञ्चेन्द्रियस्य पुरुषस्य यदेवास्य बहिश्श्रुतं तेनास्य क्षरति प्रज्ञाधृतिः पादादिवोदकम्'' इत्मादिश्श्रुतिभि र्नित्यतया निर्गमनप्रवेशादिमत्तवाचावगतस्य धर्मभूतज्ञानस्यैव क्रमिकानेकावस्था स्वीकार्यौचित्यात्तस्यैव भयत्व शोकत्वादिवत्सुखत्व, दुःखत्वेच्छाद्वेषत्व, प्रयत्नत्वावस्था सवीकारे ''घटं जानातीतिव्यव-हारोपपत्तिवत्सुख्यति, दुःख्यति, इच्छति, द्वेष्टि, प्रयतते'' इत्यादिव्यवहाराणामप्युपपत्तेरेक निष्ठक्रमिकावस्थात्वबाधक युगपदुपलम्बादेरभावात् ''धर्मिकल्पनातो वरं धर्मकल्पनम्'' इति न्यायेन लाघवात् पदार्थान्तरकल्पने गौरवाच्चयत्नादयो ज्ञानावस्थाविशेषा एवेत्यर्थः । एवं तर्हि रथो गच्छतीत्यादिषु प्रतिपन्नं कर्तृत्वं व्याहन्येतेत्यत्राह । क्रियाश्रयत्वेत्यादिना । नन्वेवं तर्हि जानाति सुख्यति स्वपितीत्यादिभिः कर्तरिविहित प्रत्ययान्तैश्चेतनाभिधानं नोपपद्यते ।

(सा.विः) पक्षं दूषयति । இதில் इति । नित्यस्य धर्मभूतज्ञानस्यैव परिणामरूपा इच्छाप्रयत्नादयः । कार्यभूतावस्था विशेषा इति भावः । अतिरिक्तत्वपक्षे गौरवमेव दूषणं सूचितम् । एवं तर्हि रथो गच्छतीत्यादौ कर्तृत्वं न स्यात् । अचेतनस्य प्रयत्नाभावादित्यत्राह । क्रियाश्रयेति ।

(सा.सं:) இதில் इति । चिकीर्षा, इदमहङ्कुर्यामिति धीः । स्वकार्ये स्वशरीरादि नियमनप्रकार विशेष बिषयिणी धीः प्रयत्नः । चिकीर्षा प्रयत्नयोः ज्ञानावस्था विशेषत्वोक्तौ लाघवमस्ति, अन्यथा गुणान्तर कल्पना गौरवप्रसङ्ग इति लाघवयुक्तिर्ज्ञेया । प्रयत्नस्य चेतनैकाश्रयत्वात्तदपि ज्ञानावस्था विशेषत्वमित्यभिप्रायेणाह । क्रियाश्रयत्वेति ।

**मूः - प्रयत्नाश्रयत्वरूपமான कर्तृत्वं चेतनैकान्तम् । प्रयत्नமாவது? शरीरादि प्रेरणाहेतुவான बुद्धिविशेषम् । ज्ञानमात्रத்துக்கு आश्रयமானபோதும் भोगमात्रத்துக்கு आश्रयமானபோதும் क्रियाश्रयत्वमात्रமான कर्तृत्वமேயுள்ளது. ஒன்றைத் தன் बुद्धियாலே उत्पादिக்கும்போது प्रयत्नाश्रयत्वरूपமான कर्तृत्वम् ।**

(सा.दीः) प्रयत्नशब्दार्थத்தைக் காட்டுகிறார். प्रयत्नமாவது इत्यादियால். क्रियाश्रयत्वरूपकर्तृत्वं चेतनाचेतन साधारणமென்றத்தைக் காட்டுகிறார். ज्ञानमात्रத்துக்கு इत्यादियால். ज्ञाताभोक्ताவென்று कर्तृव्यवहारமிறே? प्रयत्नाश्रयत्वरूपकर्तृत्वத்துக்கு स्थलமருளிச்செய்கிறார். ஒன்றைத்தான் इत्यादियால். बुद्धियாலே, इच्छैயாலே என்கை. इन्त प्रयत्नाश्रयत्वरूपकर्तृत्वமும்-

(सा.स्वाः) ज्ञानातिरिक्तगुणत्वமென்னில் अतिरिक्तगुणत्वानङ्गीकारादसम्भवமன்றோ? जाति विशेषமென்னில் अपसिद्धान्तமன்றோ? என்னவருளிச்செய்கிறார். प्रयत्नமாவது इति । साक्षाच्छ-रीरादि प्रेरणहेत्ववस्थावद्बुद्धित्वं प्रयत्नत्वமென்று கருத்து. இப்படி आत्माவுக்கு ज्ञानादि त्रिकाश्रायत्वं कर्तृत्वமென்றால் ज्ञानभोगदशैகளிலே "जानाति । भुङ्क्ते" इत्यीद कर्तृनिर्देशத்துக்கு गतिயெது? என்னவருளிச் செய்கிறார்.ज्ञानमात्रத்துக்கு इति । तदभिप्रायम्அந்த निर्देशமென்று கருத்து. இனி प्रयत्नाश्रयत्वरूपकर्तृत्वम् எந்த कालத்திலே? என்னவருளிச்செய்கிறார். ஒன்றை इति । இப்படி आत्माவுக்கு विलक्षणकर्तृत्वமுண்டானாலும் उपायकर्तृत्वं स्वरूपविरुद्धமாகையாலே फलदशैயில் कर्तृत्वं स्वरूपानुगुणமாகையால் कैङ्कर्यदशैயிலேயே-

(सा.प्रः) तदानीं यत्नाश्रयत्वादित्यत्र तत्र क्रियाश्रयत्वमात्रं कर्तृत्वं यत्रेदं करवाणीति सङ्कल्पपूर्वकं किञ्चित्करोति । तदा यत्नाश्रयत्वमिति विभागमाह । ज्ञानमात्रத்துக்கு इत्यादिना । नन्वेवमपि स्वतोऽनन्यार्ह शेषतयैवानुसन्दधतः-

(सा.विः) कर्तृत्वं तावद्द्विविधम् । क्रियाश्रयत्वं प्रयत्नाश्रयत्वं चेति । तत्र क्रियाश्रयत्वं नाम? धात्वर्थाश्रयत्वम् । तद्धि सामान्यरूपम् यत्नरूपधात्वर्थविशेषाश्रयत्वं तु विशेषरूपम् । अतः क्रियाश्रयत्वरूपकर्तृत्वं चेतनाचेतन साधारणम् । प्रयत्नाश्रयत्वलक्षण कर्तृत्वं चेतनासाधारणमिति भावः । प्रयत्न स्वरूपमाह । प्रयत्नமாவது इति । बुद्धिविशेषमिति । ज्ञानावस्थारूपमिति भावः । ननु जानाति सुख्यति स्वपितीत्यादिषु कर्तृत्वं न स्यात् । तथाहि जानातीत्यादौ न तावद्यत्नाश्रयत्वम् । यत्नस्य ज्ञानावस्थाविशेषरूपत्वेन ज्ञानमात्रत्वाभावात् । ज्ञानाश्रायत्वं हि तत्र प्रतीयते । तत्र कथं कर्तृत्वम्? तथा सुख्यति इत्यत्रापि सुखादेश्च यत्नभिन्नज्ञानावस्थाविशेषरूपत्वेन यत्नरूपत्वाभावात् । स्वपि तीत्यत्रापि स्वाप स्य ज्ञानविरह रूपस्य यत्नरूपत्वाभावादित्याशङ्क्य तत्रक्रियाश्रयत्वलक्षण सामान्यकर्तृत्वमेव न विशेष कर्तृत्व मित्याह । ज्ञानमात्रத்துக்கு इति । भोगेति । स्वापादेरुपलक्षणम् । तर्हि सर्वत्र चेतनस्य क्रियाश्रयत्वमेव कर्तृत्वमस्तु, किं प्रयत्नाश्रयत्वलक्षणविशेषकर्तृत्वेनेत्यत्र तस्य फलविशेष माह । ஒன்றை इति । ஒன்றை, एकम्-घटादिक मित्यर्थः । ननु प्रयत्नाश्रयत्वलक्षण कर्तृत्वं स्वतो भगवदनन्यार्हशेषतयैव स्वात्मानम् -

(सा.सं:) प्रयत्नलक्षणे शरीरादि इत्यादि शब्दः इन्द्रियप्राणपरः । बुद्धिविशेषमित्युक्तं विशदयति । ज्ञानमात्रத்துக்கு इति-

**मूः- இப்படிப்பட்ட कर्तृत्वं कैङ्कर्यमात्रத்திலேயென்கையும் उचितமன்று அங்கும் भगवत्प्रीतिயென்றொரு प्रयोजनத்தை उद्देशिத்து उपायानुष्ठानं பண்ணினானாயிறேயிருப்பது.**

(सा.दीः) कैङ्कर्यमात्रத்திலே, उपायानुष्ठानத்திலில்லை என்னவொண்ணாதென்கிறார். இப்படிப்பட்ட इत्यादियால் । विपक्षத்தில் बाधकமருளிச் செய்கிறார். அங்கும் भगवदित्यादियால். कैङ्कर्यंதானும் उपायानुष्ठानरूपமாகையாலங்கும் कर्तृत्वाभावं प्रसङ्गिக்குமென்கை. पराधीनकर्तृत्व முண்டேயாகிலும் स्वेच्छया प्रवृत्ति विवेकिக்கு त्याज्यமாகையால் शरणागतिயில் प्रवृत्तिகூடாதிறே? என்னவருளிச் செய்கிறார்.

(सा.स्वाः) कर्तृत्वं प्रामाणिकமாகையால் व्रजஎன்று फलार्थतया उपायத்தை विधिக்கக் கூடுமோ? என்கிற मतத்தை निराकरिக்கிறார். இப்படிப்பட்ட इति । विपक्षத்தில் बाधकமருளிச்செய்கிறார். அங்கும் इति । उपायकर्तृत्वं स्वरूपविरुद्धமென்றால் कैङ्कर्यस्यापि प्रीत्युपायतया तत्कर्तृत्वமுமில்லை யாக प्रसङ्गिக்குமென்று கருத்து. இப்படி कर्तृत्वं स्वाभाविकமாகில் मुमुक्षुவுக்கு

(सा.प्रः) चेतनस्य बुद्धिपूर्वक प्रवृत्तिः कैङ्कर्य एवोच्यते इति तत्रैवास्य कर्तृत्वं वान्यत्रेत्यत्र निग्रहनिवृत्त्यर्थोपायानुष्ठानस्यापि भगवदत्यन्ताभिमतत्वात्तत्रापि कर्तृत्वमस्तीत्याह । இப்படிப்பட்ட इत्यादिना । ननु ''नैव किञ्चित्करोमीति युक्तो मन्येततत्त्ववित् । पश्यन् श्रृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ।। प्रलपन् विसृजन् गृह्णन्नुन्मि षन्निमिषन्नपि । इन्द्रियाणीन्द्रियार्थेषू वर्तन्त इति धारयन् ।। सर्वकर्माणि मनसा सन्यस्यास्ते सुखं वशी । नवद्वारे पुरेदे(ही)हे नैव कुर्वन्नकारयन् ।।

(सा.विः) अनुसन्दधतः चेतनस्य कैङ्कर्य एवोचितम् । नतूपायानुष्ठानादावित्याशङ्क्य निग्रहनिवृत्त्यर्थो पायानुष्ठानस्यापि भगवदत्यन्ताभिमतत्वात्तत्रापि बुद्धि पूर्वक प्रवृत्तिलक्षणकर्तृत्वमुचितमेवेत्याह । இப்படி इति । அங்கும், उपायानुष्ठान विषयेऽपि । भगवत्प्रीतिயென்றொரு प्रयोजनத்தை उद्देशिத்து उपायानुष्ठानंபண்ணினானாயிறேயிருப்பது, भगवत्प्रीतिरित्येकं प्रयोजनमुद्दिश्यैव उपायानुष्ठानं कृतवान् खल्विति स्थितिः । अतोऽत्रापि प्रवृत्ति रुचितेति भावः । ननु ''नैव किञ्चित्करो मीति युक्तो मन्येत तत्त्ववित् । परयन् श्रृण्वन् स्पृशञ्जिघ्रन् अशनन्गच्छन्स्वपन्श्वसन् ।। प्रलपन् विसृजन् गृह्णन्नु न्मिषन्निमिषन्नपि । इन्द्रियाणी न्द्रियार्थेषु वर्तन्त इति धारयन् ।।'' अस्यार्थः । आत्मतत्त्ववित्, श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि प्राणश्च स्वविषयेषु वर्तन्त इति धारयन्ननु सन्दधानः । नाहं किञ्चित्करोमीति मन्येत । ज्ञानैकस्वभावस्य कर्ममूलेन्द्रिय प्राणसंबन्धकृतमीदृशं कर्तृत्वं न स्वरूप प्रयुक्तमिति मन्येतैवेति । तथा ''सर्वकर्माणि मनसा सन्यस्यास्तै सुखं वशी । नव द्वारे पुरे देहे नैव कुर्वन्नकारयन् ।।'' इन्द्रियाकारेण परिणतायां प्रकृतौ कर्तृ सन्यास मुक्त्वाथदेहाकारेण परिणतायां प्रकृतौ कर्तृ सन्यास उच्यत इत्युपक्रम्यात्मनः प्राचीनकर्म मूलदेहसंबन्ध प्रयुक्तमिदं कर्मणां कर्तृत्वं न स्वरूप प्रयुक्तमिति विवेक विषयेण मनसा

(सा.संः) एतादृशमपि कर्तृत्वं कैङ्कर्यमात्रे नोपाये इत्यत्राह । இப்படிப்பட்ட इति । उचितமன்று इति । प्रतिज्ञातमुपपादयति । அங்கும் इति ।

**मूः - ஆனபின்பு कर्तृत्वத்தில் बन्धहेतुவான आकारமே त्याज्यम् । அதேதென்னில் ईश्वरன் கொடுத்த ज्ञानशक्त्यादिகளையும், करणकलेबरादिகளையும் கொண்டு அவன்प्रेरकனுமாய், धारकனுமாய், फलिயுமாய் கொண்டு सहकरिக்கப் प्रवर्तिக்கிற தன்னை இதுக்கு विपरीतமாக अनुसन्धिத்திருக்கையும், இவ் अनुसन्धानத்தில் திருத்தமுண்டேயாகிலும் இதிலே प्रयोजनान्तरத்தையிடுக்கி अनुष्ठिக்கையும் बन्धकम् । भक्तिप्रपत्तिகள் தாமும் प्रयोजनान्तरपरனுக்கு बन्धकமாயிறேயிருப்பன**

(सा.दीः) ஆனபின்பு इत्यादि । இத்தை विशदीकरिக்கிறார். அதேதென்னில் इत्यादिயால். திருத்தமுண்டேயாகிலும், वैशद्यமுண்டேயாகிலுமென்றபடி-இடுக்கி, परिग्रहिத்தென்கை. प्रयोजनान्तरத்தையிடுக்கில் भक्तिप्रपत्तिகளுக்கும் बन्धकत्वमविशिष्टமென்கிறார். भक्तिप्रपत्तीत्यादिயால்-ஆகையால் यथावस्थित ज्ञानपूर्वकமான अनन्य प्रयोजनனுடைய उपायத்தில் कर्तृत्वं विरुद्धமன்று என்கிறார்.

(सा.स्वाः) कर्तृत्वत्यागंசொல்லுகிற शास्त्रத்துக்கு गतिயெது? என்னவருளிச்செய்கிறார். ஆனபின்பு इति । ஆனாலும் एकरूपமான कर्तृत्वத்திலிரண்டு आकारமுண்டோ? என்று शङ्किத்து उत्तरமருளிச் செய்கிறார். அதென்னென்னில் इति । இடுக்கி, கூட்டி என்றபடி. இப்படியாகில் भक्ति प्रपत्ति कर्तृत्वத்தில் मोक्षहेतुतया बन्धकाकारமில்லாமையாலே कर्तृत्वत्यागमसङ्गतமாகப் प्रसङ्गिயாதோ? என்னவருளிச் செய்கிறார். भक्तीति । कैङ्कर्य मात्र कर्तृत्वमत निरासத்தை उपसंहरिக்கிறார்.

(सा.प्रः) अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ।।" इत्यादिभिः कर्तृत्वस्य त्याज्यत्वोक्तिर्विरुद्ध्येतेत्यत्राह । ஆனபின்பு इत्यादिना । नन्वेवं तर्हि कृत्स्नस्यापि कर्तृत्वस्य कर्मानुगुण सत्त्वादिगुणापादितत्वान्मुक्तौ निश्शेषकर्म निवृत्तेस्सत्त्वादि

(सा.विः) सर्वकर्माणि नवद्वारे पुरे देहे सन्यस्य वशी देही स्वयं देहाधिष्ठान प्रयत्नमकुर्वन् । देहं च नैव कारयन् सुखमास्त इति श्रीगीताभाष्ये श्रीभाष्यकारैर्व्याख्यातम् । तथा च कर्तृत्वस्य । त्याज्यत्वात्कथं कर्तृत्वोक्तिरित्याशङ्क्य बन्धहेतुकर्तृत्वस्यैव त्याज्यत्वमित्याह । ஆனபின்பு इति । ஆனபின்பு, भगवत्प्रीत्युद्देशेन क्रियमाणेषु कर्तृत्वस्य विधिप्राप्तत्वादित्यर्थः । एतदेव विशदयति । அதேதென்னில்-அவன், तस्मिन्नीश्वरे । प्रेरकतया फलितया च । सहकरिக்க, सहकारं कुर्वति । प्रवर्तिக்கிறதன்னை, प्रवर्तमानं स्वात्मानम् । இதுக்கு विपरीतமாக अनुसन्धिத்திருக்கையும், एतत्पराधीन कर्तृत्वस्य विरुद्धं स्वतन्त्रकर्तारं स्वतन्त्रफलिनम् । अनुसन्धाय स्थितिरिति यावत् । இவ் अनुसन्धानத்தில் ईश्वरे प्रेरयति तत्फलार्थं प्रवृत्ते इत्यनुसन्धाने । திருத்தமுண்டேயாகிலும், शिक्षायांसत्यामपि । प्रयोजनान्तरத்தையிட்டு சில अनुष्ठिக்கையும், प्रयोजनान्तरार्थं केषाञ्चिदनुष्ठानं बन्धकं बन्धहेतुः । एवं भक्ति प्रपत्त्यो रपिप्रयोजनान्तरार्थत्वे बन्धहेतुत्वमेवे त्याह । भक्ति प्रपत्तिகள் தானும் इति । ननु सर्वस्यापि कर्तृत्वस्य गुणमूलकत्वान्मोक्षार्थोपायकर्तृत्वमपि गुणमूलकत्वात्त्याज्यमेवेत्या-शङ्क्य मोक्षदशायां "बोद्धा कर्ता विज्ञानात्मा पुरुषः" इति श्रुतकर्तृत्ववदुपायदशायामपि कर्तृत्वमुचितमेवेत्याह ।

(सा.संः) ஆனபின்பு इति । कैङ्कर्यत्वेऽप्युपायत्वाकारानपायात्तत्रापिकर्तृत्वाभाव प्रसङ्गादित्यर्थः । திருத்தம் वैशद्यम् । இடுக்கி, उद्दिश्य । अबन्धकं कर्तृत्वम् । प्रपत्तौ पारतन्त्र्येण न विरुद्ध्यत इति-

**मूः -** ஆகையால் **स्वाभाविककैङ्कर्यार्थि**யாய் **अनन्य प्रयोजन**னாயிருக்குமவனுக்கு **फलदशै**யில்**कर्तृत्व**ம் போலே **उपायदशै**யில் **कर्तृत्व**மும் **विरुद्ध**மன்று. **फलदशै**யில் **विविधविचित्रकैङ्कर्य कर्तृत्वं केवलं ईश्वरेच्छा वैचित्रि**யோடே பொருந்தின **स्वेच्छै**யாலே யாயிருக்கும். **संसारदशै**யிலுள்ள **कर्तृत्व**மெல்லாம் **कर्मानुरूप**மாக **ईश्वर**ன் **परिणमि**ப்பித்த **सत्त्वरजस्तमस्**ஸுக்களை **उपाधि**யாகக்கொண்டு **बहुविध**மாயிருக்கும்.

---

(सा.दीः) ஆகையால் इत्यादिயால்- फलदशै, मुक्तिदशै । இனி फलदशैயில் कर्तृत्वத்துக்கும் संसारदशैயில்कर्तृत्वத்துக்குமுள்ள வாசியையருளிச்செய்கிறார். फलदशैயில் इत्यादिயால். உள்ள कर्तृत्वமெல்லாமென்றது कैङ्कर्योपायानुष्ठान सांसारिकप्रवृत्तिகளிலுள்ள कर्तृत्वமெல்லாமென்றபடி. இக்कर्तृत्वங்களில் बन्धकर्तृत्वங்களையருளிச்செய்கிறார்.

---

(सा.स्वाः) ஆகையால் इति । यद्वा फलदशैயில் कर्तृत्वं बन्धकाकार रहितமாகையாலேயதுவே प्रामाणिकम् । उपायदशैயில் कर्तृत्त्वं बन्धकाकार मिश्रமாகையாலே विरुद्धமன்றோ? என்கிற शङ्कैயைப் परिहरित्துக்கொண்டு उपसंहरिக்கிறார். ஆகையால் इति । अनन्य प्रयोजनனுக்கு कर्तृत्वं बन्धकाकारमिश्रமல்லாமையாலே फलदशातुल्यமாகையால் विरुद्धமன்றென்று கருத்து. ஆனாலும் उपायदशैயில் कर्तृत्वத்தில் बन्धकाकारं त्याज्यமென்று சொன்னது கூடுமோ? पूर्वोक्त प्रकारेणोपायदशैயில் कर्तृत्वं बन्धकाकारमिश्रமாகையாலே त्याज्यதை கூடுமென்னிலப்போது फलदशैயிலும் कर्तृत्वंबन्धकाकारमिश्रமாக प्रसङ्गिயாதோ? मुक्तदशैயில் हेतुவில்லாமையாலே बन्धकाकारमिश्रமன்றென்னில் அந்த हेतुவெது? என்னவருளிச்செய்கிறார். फलदशैயில் इत्यादि वाक्यद्वयத்தாலே. केवलமென்றது. कर्मोपाधिव्यवच्छेदத்தைச் சொல்லுகிறது. இப்படியாகில் अनन्य प्रयोजनனுக்கு उपायदशैயில் कर्तृत्वं फलदशातुल्यतया बन्धकत्वाभावाद्विरुद्धமன்றென்று

---

(सा.प्रः) गुणाभावात्कर्तृत्वमेव न स्यात् । किञ्च ''तत्र सर्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन देहिनम् ।।'' इत्यादिभिस्सत्त्व गुणस्यैव स्वर्गादिसाधनानुष्ठापकत्व-वत्मोक्षोपायत्वस्याप्यनुष्ठापकत्वात्तत्रापि कर्तृत्वं गुणकृतमेवेति तदपि त्याज्यमेव स्यादित्यत्र मुक्तैकर्तृत्वस्य कारणं दर्थयन् तत्रत्य कर्तृत्वस्य कृत्स्नस्याप्यौपाधिकत्वेऽपि तत्र तत्र त्याज्यांश मुपादेयांशमपि दर्शयति । फलदशैயில் इत्यादिना ।

---

(सा.विः) ஆகையால் स्वाभाविकेति । मोक्षदशायां कर्तृत्वं यथा न स्वरूपविरुद्धं तद्वदिह प्रकृष्ट सत्वमूलकमोक्षोपायकर्तृत्वमप्यविरुद्धत्वान्न त्याज्यमिति भावः । ननु ''सुखसङ्गेन बध्नाति ज्ञानसङ्गेन देहिनाम्'' इत्यादिना सत्वादेस्स्वर्गादि साधनानुष्ठानकर्तृत्ववन्मुक्तिदशायां सत्वादिगुणाभावात्कथं कर्तृत्व मित्याशङ्कायां तत्र भगवदिच्छासिद्धमिति वदन् इह गुणमूलं कर्तृत्वमित्याह । फलदशैயில் इति । वैचित्रिயோடே பொருந்தின, ईश्वरेच्छावैचित्र्येणसह । तदनुगुणस्वेच्छयेत्यर्थः । ईश्वरன் परिणमिப்பித்த सत्त्वरजस्तमस्ஸுக்களை उपाधि யாகக் கொண்டு, ईश्वर परिणामित सत्त्वरजस्तमोगुणा नुपाधित्वेन स्वीकृत्य-

---

(सा.संः) प्रतिज्ञातमुपसंहरति । ஆகையால் इति ।

**मूः - இதில் रजस्ஸாலும், तमस्ஸாலும், प्रयोजनान्तर सङ्गहेतुவான सत्त्वத்தாலும், வரும் कर्तृत्वं बन्धकम् । भगवत्प्राप्तியிலே सङ्गத்தை(யுண்டாக்கும்)ப் புணர்க்கும் प्रकृष्टसत्त्व विशेषமடியாக வரும் कर्तृत्वं मोक्षकारणम् । இக் गुणत्रयத்தோடு துவக்கற்றிருக்கும் मुक्तदशैயில்कर्तृत्वम् ।**

(सा.दीः) இதில் रजस्ஸாலும் इत्यादिயால். मोक्षहेतुவாய் कर्तृत्वத்தைக் காட்டுகிறார். भगवत्प्राप्तिயில் इत्यादिயால் । मुक्तदशैயில் कर्तृत्वं सत्त्वादिगुणकृतமன்றென்கிறார். இக் गुणत्रयेत्यादि । ननु சில वाक्यங்கள் आत्माவுக்கு कर्तृत्वமில்லையென்கிறன, சில உண்டென்கிறன.

(सा.स्वाः) சொன்னது கூடுமோ? प्राकृतरजस्तमस्सम्बन्ध प्रयुक्तமாகையாலே बन्धकतया विरुद्धமன்றோ? என்ன बन्धकाकारापवर्गजनकाकारங்களையருளிச் செய்கிறார். இதில் इति वाक्यद्वयத்தாலே - இதில், बहुविधமான कर्तृत्वத்தில். இப்படி फलदशैயில் कर्तृत्वं बन्धकமாகா விட்டாலும் मोक्षकारणமாகப் प्रसङ्गियாதோ? என்னவருளிச் செய்கிறார். இந்த गुणेति । गुणत्रयान्तर्गत प्रकृष्ट सत्त्वप्रयुक्तकर्तृत्वமே मोक्षकारणமென்று கருத்து. இப்படியாகில் ''न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः''என்றும், ''कर्ता विज्ञानात्मा पुरुषः''என்றும் कर्तृत्वविधि प्रतिषेधங்களுக்கு गतिயெது? என்னவருளிச் செய்கிறார்.

(सा.प्रः) सङ्गத்தைப் புணர்க்கும், सङ्गं कुर्वन् । एवंच ''प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कार विमूढात्मा कर्ताऽहमिति मन्यते ।। नान्यं गुणेभ्यः कर्तारं यदा द्रष्टासु पश्यति । कार्यकारण कर्तृत्वे हेतुः प्रकृतिरुच्यते ।।'' इत्यादि कर्तृत्व निषेधवाक्यानां ''एव हि द्रष्टा श्रोता'' इत्यारभ्य ''बोद्धा कर्ता विज्ञानात्मा पुरुषः ।- विज्ञानं यज्ञं तनुते । तामर्चयेत्तां प्रणमेत्तां यचेत्तां विचिन्तयेत् ।'' इत्यादि कर्तृत्व विधिवाक्यानां च जीवेषु शुद्धेषु सत्त्वरजस्तमो अधीनकर्तृत्व निषेधकत्वेन भगवत्सङ्कल्पाधीन कर्तृत्वाश्रयत्व विधायकत्वेन च विरोधो नास्तीत्याह ।

(सा.विः) ''शरीरवाङ् मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ।। अधिष्ठानं तथा कर्ता करणं चे पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ।।'' इत्युक्तम् उपाधिमूलं कर्तृत्वमिति भावः । बन्धककर्तृत्वाद्व्यावृत्तं मोक्षहेतुकर्तृत्वमाह । भगवत्प्राप्तिயிலே इति । मुक्तिदशायामिवेहापि भगवदभिमतत्वान्याक्षार्थ कर्तृत्वं न विरुद्धमिति भावः । तद्व्यावृत्त मोक्षकालीन कर्तृत्वमाह । இக் गुणत्रयத்தோடு इति । ननु तर्हिऽसर्वदा कर्तृत्व सद्भावे ''प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कार विमूढात्मा कर्ताऽहमिति मन्यते ।। नान्यं गुणेभ्यः कर्तारं यदा द्रष्टासु पश्यति । कार्यकारण कर्तृत्वे हेतुः प्रकृतिरुच्यते ।। पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । तथा । हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ।।'' इति कर्तृत्वनिषेधात्तद्विरोध इत्याशङ्क्य ''कर्ता शास्त्रार्थवत्त्वात्'' इत्यधिकरणे अचेतने बोधजनवद्वारा प्रवर्तकत्वासम्भवाच्छास्त्रवैय्यर्थ्या पत्त्या चेतने गुणसङ्गोपाधिककर्तृत्वस्य -

मू: - இப்படியிருக்கையால் आत्माவுக்கு कर्तृत्वமில்லையென்கிற वाक्यங்களுக்கும் कर्तृत्वமுண்டென்கிற वाक्यங்களுக்கும் विषयव्यवस्थैயுண்டாகையாலே विरोधமில்லை. அதெங்ஙனேயென்னில்? कर्तृत्वமில்லை என்கிற वाक्यங்கள் ईश्वराधीनமாயும் तदायत्त प्रकृतिगुणाधीनமாயும் வரும் कर्तृत्वத்தை निरपेक्षமென்று நினைக்கலாகாதென்கிறன- कर्तृत्वமுண்டென்கிற वाक्यங்கள் ईश्वरेच्छादिகள் அடியாகவே வந்த ज्ञानத்துக்கும், तद्विशेषங்களான चिकीर्षा प्रयत्नங்களுக்கும் இவனே आश्रयமென்னுமிடத்தைச் சொல்லுகிறன. இந் निष्कर्ष (प्रकार)த்தை "शरीरवाङ्मनोभिर्यत्" என்று துடங்கி गीताचार्यன்தானே அறுதியிட்டான்.

(सा.दीः) இவைக்கு विरोधமெப்படியென்னில் அருளிச்செய்கிறார். இப்படியிருக்கையால் इत्यादि । "न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । "इत्यादिகளில்லை என்கிறன. "कर्ता भोक्ता विज्ञानात्मा पुरुषः" इत्यादिகள் कर्तृत्वமுண்டென்கிறன. विरोधाभावத்தை उपपादिக்கிறார். அதெங்ஙனேயென்னில் इत्यादियால். कर्तृत्वनिषेधवाक्यங்கள் निरपेक्षकर्तृत्वम्இவனுக்கில்லை என்கிறன. உண்டென்கிற वाक्यங்கள் ईश्वराधीनकर्तृत्वமுண்டென்கிறனவென்று विभागम्-இந் निष्कर्ष प्रकारम्, இந் निष्कर्ष विभागम् । இந் निष्कर्ष प्रकारं गीतैயில் சொல்லப்பட்டதென்கிறார். இந் निष्कर्षेत्यादियால்.

(सा.स्वाः) இப்படியிருக்கையாலே इति । ग्रहणाग्रहणादिवदनुष्ठेयமன்றிக்கே सिद्धरूपமான कर्तृत्वरूपैकार्थத்தில் विधिप्रतिषेधங்களுக்கு विषयव्यवस्थै கூடுமோ? என்று शङ्कित्து उत्तरமருளிச்செய்கிறார். அதெங்ஙனேயென்னில் इत्यादिना । நினைக்கலாகாது इति । निषेधकवाक्यं विद्यमानकर्तृत्व सामान्य निषेधपरமல்லாமையாலும் "परात्तुतच्छ्रुतेः" इत्यादिना सापेक्षமென்று சொல்லுகையாலே தானே निरपेक्षकर्तृत्व निषेधमर्थसिद्धமாகையாலும் व्यर्थமாய்க் கொண்டு नैरपेक्ष्यबुद्धि निषेधपरமென்று கருத்து. இப்படி जीवனுக்கு पराधीन कर्तृत्वंமுதலான இவ் अर्थத்தில் प्रमाणंகாட்டுகிறார். இந் निष्कर्ष प्रकारத்தை इति-यद्वा जीवனுக்கு पराधीन कर्तृत्वமும் ईश्वरனுக்கு प्रधान कर्तृत्वமும் சொன்னது கூடுமோ?

(सा.प्रः) இப்படி इत्यादिना । एवदभिप्रायेणैव "शरीरवाङ् मनोभिर्यत्कर्म प्रारभतेनरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ।। अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ।। तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृत बुद्धित्वान्न स पश्यति दुर्मतिः ।।" इति गीताचार्येणाप्युक्तमित्याह । இந் निष्कर्षेत्यादिना ।

(सा.विः) स्थापनात्पराधीन कर्तृत्वस्य स्थापनाच्च मुक्तिदशायां च "बोद्धा-कर्ता । जक्षत्क्रीडन्रम माण" इत्यीद श्रवणाच्च कर्तृत्व निषेधपराणां ईश्वरानधीन निरुपाधिक कर्तृत्व निषेधपरत्वमिति विषयव्यवस्था माह । இப்படியிருக்கையால் इति । अत्र प्रमाणं दर्शयति । இந் निष्कर्षத்தை इति । भगवदधीन कर्तृत्वे प्रमाणमाह ।

(सा.सं:) कर्तृत्वமில்லை इत्यत्र "न कर्तृत्वं न कर्माणि लोकस्य सृजति" इत्यादीनि, कर्तृत्वமுண்டு इत्यत्र च "कर्ता बोद्धा विज्ञानात्मा पुरुषः" इत्यादीनि च विवक्षितानि ।- कर्तृत्व निषेधकानां निरपेक्षकर्तृत्व निषेधकता । तत् सद्भावपराणामीश्वराधीन कर्तृत्व सद्भावपरतेति निष्कर्ष प्रकारश्श्रीगीताया मेवोक्त इत्याह । இந் निष्कर्षेति । तत्रेश्वराधीनत्वोक्तिप्रकारमाह ।

**मूः** - அ(இ)வ்விடத்தில் **"दैवं चैवात्र पञ्चमम्"** என்று **पुरुषोत्त**மனைச் சொல்லுகிறது. இவன் **जीव**னையொரு **कार्य**த்தில் **प्रवर्ति**ப்பிக்கும் போது அக் **कार्य**த்தைப்பற்ற **कारयिता**வென்று சொல்லப்படும். தானே **प्रवर्ति**க்கும் **फलप्रदानादि**களிலும், **सृष्ट्यादि**களிலும் **कर्ता**வென்று சொல்லப்படும். ஒன்றிலே **प्रवृत्त**னான **चेतन**னை விலக்காதவளவில் **उपेक्षक**ன் - அப்போதிசைந்திருக்கையாலே **अनुमन्ता** ।

(सा.दीः) அங்கு ईश्वराधीनत्वंசொன்னபடியையருளிச் செய்கிறார். அவ்விடத்தில் इत्यादि । -இனி प्रसङ्गादीश्वरனுடைய कारयितृत्व, कर्तृत्व, उपेक्षकत्व, अनुमन्तृत्व, सहकारित्वங்களுக்கு विषयभेदத்தையருளிச் செய்கிறார். இவன் जीवனை इत्यादियால். कर्तृत्वத்துக்கு विषयंகாட்டுகிறார். தானே इत्यादियால். उपेक्षकत्वम्, उदासीनत्वम् । இதுக்கு विषयं காட்டுகிறார். ஒன்றிலே என்று. अनुमन्तृत्वத்தைக் காட்டுகிறார். அப்போதென்று. तत्रैवஎன்று शेषम् । सहकारित्वத்தைக் காட்டுகிறார்.

(सा.स्वाः) जीवकर्तृक कार्यங்களிலே ईश्वरனுக்குப் प्राधान्यத்தில் प्रमाणமுண்டோ? என்னவருளிச்செய்கிறார். இந் निष्कर्ष प्रकारத்தை इति । गीतैயிலே "दैवं चैवात्र पञ्चमं" என்று दैवத்துக்கன்றோ पञ्चमமென்று अधिकोक्त्या प्राधान्यंதோற்றுகிறது. ईश्वरனுக்குத் தோற்றவில்லையே? என்னவருளிச் செய்கிறார். அவ்விடத்தில் इति । இப்படி ईश्वरன் प्रधान कर्ताவென்று சொன்னது கூடுமோ? उपेक्षकனென்றும் अनुमन्ताவென்றும் ईश्वरனை शास्त्रंசொல்லுகையாலே कर्तृत्वமே கூடாதே? இனி सृष्ट्यादि व्यापारத்திலே साक्षात्कर्तृत्वं श्रुतமாகையாலே कर्तृत्वंகூடுமென்னில் அப்போது कारयिताஎன்றும், उपेक्षकனென்றும் சொல்லுகிறது विरोधिயாதோ? என்ன कर्तृत्वाद्याकारங்களை विरोधமில்லாமல் भिन्नविषयங்களாக विवेचिக்கிறார். இவன் इत्यादिना । இப்படியானாலும் एकविषयத்தில் தானே-

(सा.प्रः) अत्र भगवत्सङ्कल्पाधीनं न प्रतीयत इत्यत्राह । இவ்விடத்தில் इत्यादिना । एवं जीवकर्तृत्वविधिनिषेधयोरपि विषयव्यवस्थामुक्त्वा ईश्वरगतविषय सृष्टिकर्तृत्व विधिनिषेधयोरपि विषयव्यवस्थां कारयितृत्वोपेक्षकत्व कर्तृत्व सहकारित्व प्रदर्शनपूर्वकं वदन्नीश्वर सङ्कल्पाधीन जीवकर्तृत्व सिद्धे भरन्यास विधिरुपपन्न एवेति निगमयति । இவன் जीवனை इत्यादिबा ।

(सा.विः) இவ்விடத்தில் इति । दैवमिति । "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ।।" इत्यत्रेत्यर्थः । अधिष्ठानं, शरीरम् । कर्ता, जीवः । करणम्, इन्द्रियाणि । चेष्टा, कर्म । प्रसङ्गादीश्वरस्य प्रवर्तकत्वावान्तर विशेषान्विषय भेदेन दर्शयति । இவன் जीवனை इति । कारयिता, प्रेरक इत्यर्थः । प्रवृत्तिக்கும் फलप्रदानादिகளிலும் सृष्ट्यादिகளிலும், स्वमात्र प्रवर्त्यमान फलप्रदानादिषु सृष्ट्यादि व्यापरिषु च । விலக்காதவளவில், कदाचित्स्वकर्मवशेन प्रवर्तमानं चेतनं प्रति । तद्विरोधिकर्मनिमित्तीकृत्येश्वरेण निवारणाभावे उपेक्षकः । पूर्व प्रवृत्तैरपि भगवदधीनफर्ममूलत्वात्तत्प्रदिष्टकरणकलेबरायत्तत्वाच्च न पराधीनत्वविरोधः ।

(सा.सं:) அவ்விடத்தில் इति । अथ प्रसङ्गादीश्वरस्य कारयितृत्व, कर्तृत्व, उपेक्षकत्व, अनुमन्तृत्वादे र्विषयभेदोक्तिमुखेन सर्वधा कर्तृत्वमीश्वराधीनमित्याह । இவன் इत्यादिना ।

**मूः - இளந்தலை சுமக்குமவனுக்கு प्रबलन் பெருந்தலை சுமக்குமாப்போலே கூடப் प्रवर्तिக்கையால் सहकारि ।**

(सा.दीः) இளந்தலை इत्यादिயால் । இளந்தலை சுமக்குமவனுக்கு, स्थूलमूलமாய், सूक्ष्माग्रமான ஒரு दारुविशेषத்தைச் சுமக்கும்போது प्रबलனானவன் स्थूलभागத்தைச் சுமக்குமாப்போலென்கை. இவனைக் காட்டில் ईश्वरனுக்கு यत्नमधिकமென்கைக்காக இளந்தலை பெருந்தலை என்றது. क्वचिदीश्वरனுக்கும் कर्तृत्वமில்லையென்னும் அதுக்குத் तात्पर्यமருளிச் செய்கிறார்.

(सा.स्वाः) ''तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्'' என்று சொல்லுகிறது சேருமோ? என்னவருளிச் செய்கிறார்.

(सा.प्रः) இளந்தலை, लघुभारः । பெருந்தலை, गुरुभारः ।

(सा.विः) இசைந்திருக்கையாலே, अङ्गीकृत्यस्थिततया । अनुमन्ता, अनुमन्तेत्युच्यते । திருக் குமாரवरदाचार्यैस्तु रहस्यत्रयचुलके ''व्यापाराश्रयत्वमात्रं तु कर्तृत्वम् । अचेतनेऽप्युपचर्यते । रथो गच्छतीति । एवं च कर्तृत्वं, प्रेरकत्वं, अनुमन्तृत्वम्, उदासीनत्वं, सक्षित्वं, सहकारित्वं, फलित्वं, फलप्रदातृत्व मित्येते अर्थाः भगवतः प्रतिपन्ना भवन्ति । तत्र जगदुत्पत्त्यादिषु सर्वेष्वपि कार्येषु ज्ञानचिकीर्षा प्रयत्नवत्त्वात्कर्तृत्वं, कर्तृभूतजीव प्रेरकत्वात्प्रेरकत्वं, स्वकर्मानुरूपं प्रवृत्तानां जीवानामुत्तरोत्तरं प्रवर्तकत्वादनुमन्तृत्वम्, एतेष्वेव स्वकर्मानुरूपेषु सुखदुःखादि कार्येषु बीजानुगुणमुत्पाद्यमानेष्वङ्कुरेषु जलस्येव सामान्य कारणत्वे सिद्धेऽपि विशेषकारणाभावादुदासीनत्वं, सर्वसाक्षाद्द्रष्टृत्वात्साक्षित्वं, सामग्र्यनु प्रविष्टैश्चेतनाचेतनात्मकैस्सहकारिवर्गैस्सह स्वयमेव सर्वकार्यकर्तृत्वात्सहकारित्वं, सर्वशेषित्वेन सर्वस्यापि फलस्य भृत्यसंरक्षणादि न्यायेन स्वपर्यवसानात् फलित्वम् । ''फलमत उपपत्तेः'' इत्युक्त प्रक्रियया सर्वकर्म समाराधनीयस्य स्वस्यैव साक्षात्सर्वफलहेतुत्वात्फल प्रदत्वमिति सर्वमप्येतद्गुणजातमाकारभेदेनास्मिन्भगवति यो युज्यत इति हृद्यं निरवद्यं च । एतेनैव सर्वदा सर्वप्रेरकस्यापि ईश्वरस्य उपेक्षकत्वानुमन्तृत्वादि वचनानां तत्रदाचार्य ग्रन्थेषु दृष्टानामविरोधेऽपिविरो-धवत्प्रतिभासमानानां स्वयमेवाविरोधो बुद्धिमद्भिर्बोद्धव्य इत्यस्माभिरुपरम्यते'' इत्युक्तम् । இளந்தலை சுமக்குமவனுக்கு कस्यचित्काष्ठस्य सूक्ष्माग्रभागं वहतः । लघुभारं वहतः पुरुषस्येति भावः । प्रबलன், प्रबलवान् । பெருந்தலை சுமக்குமாப்போலே, स्थूलमूलगुरुभारवहनेन यथा सहकरोति तथा । கூட प्रवर्तिக்கையாலே, सहकारितया सहकारि कारणमित्युच्यते । ''ददामि बुद्धि योगं तं......., क्षिपाम्यजस्रम्'' इत्यादिषूत्कट पुण्य पापकृद्विषयकतया सहकारित्व मिति भावः । ईश्वरस्यापि कर्तृत्वाकर्तृत्व बोधक प्रमाण विरोधं परिहरति

(सा.सं:) இளந்தலை इति । स्यूलमूल सूक्ष्माग्राति भारदारुवहने अर्भके उद्युक्ते तत्र प्रबलेन स्थूलभागवहनवदित्यर्थः । जीव प्रयत्नस्य अत्यल्पत्वमीश्वर प्रयत्नस्य चाधिक्यं च सूचयितुम् இளந்தலை பெருந்தலை इत्युक्तिः । ईश्वरस्य कर्तृत्व निषेधकानां तात्पर्यमाह ।

**मू - सृष्ट्यादि**களில் **देवमनुष्यादिवैषम्यं जीवकर्मविशेषोपाधिक**மாகையாலே
**"चातुवर्ण्यं मया सृष्टं गुणकर्मविभागशः।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥"**
என்று **ईश्वर**னுக்கு **कर्तृत्वनिषेधं** பண்ணுகிறது. இப்படி **सर्वविषयसाधारणकर्तृत्व**முடைய **ईश्वर**னடியாக **जीव**னுக்கு **स्वबुद्धिपूर्वप्रवृत्तिशक्तिरूप**மான **नियोगयोग्यत्वं सिद्धम्।** ஆகையாலே இங்கு, **व्रज** என்று **विधि**க்கக்குறையில்லை. -

---

(सा.दी) सृष्ट्यादिகள் इत्यादिயால். ईश्वरன் देवादिसृष्टिमात्रத்தில் कर्ताவானாலும் देवत्वमनुष्यत्वादि-वैषम्यसृष्टिக்கு அவர்களுடைய कर्मविशेषங்களே प्रयोजकமாகையாலத்தைப் பற்ற अकर्तृत्वं சொல்லுகிறது. गुणकर्मविभागशः, गुणैः कर्मभिश्च विभज्य என்றபடி. இனி जीवனுக்கு परतन्त्रனானாலும் विधियोग्यत्वமுண்டென்றுமத்தை उपसंहरिக்கிறார் - இப்படி इत्यादिயால். स्वकर्त्रीश्वरदत्तस्वबुद्धिपूर्वकप्रवृत्तिशक्तित्वान्नियोगयोग्यत्वं सिद्धமென்கை. தன்னால் வரும் நன்மை விலைப்பால் போலே इत्यादिயான

---

(सा.स्वा) सृष्ट्यादिகளில் इति। कर्तृत्ववचनं सोपाधिककर्तृत्वपरமென்றும் अकर्तृत्व वचनमुपाधिनिरपेक्षकर्तृत्वाभावपरமென்றும் एकविषयத்திலும் व्यवस्थै சொல்லாமென்று கருத்து. गुणकर्मविभागश इति। गुणैः, सत्त्वादिभिः। कर्मभिश्च, उपाधिभिः। विभज्य मया सृष्टமென்றபடி. இப்படியாகில் ईश्वरனும் कर्माद्युपाधिसापेक्षकर्ताவாகையாலே पराधीनकर्तृत्वं तुल्यமாகையால் जीवனுக்கு पराधीनकर्तृत्वं विशिष्यச் சொன்னது கூடுமோ? என்கிற शङ्कैயைப் परिहरिயா நின்றுகொண்டு उपसंहरिக்கிறார் - இப்படி इति। सर्वेति। सर्वविषयसाधारणकर्तृत्वम् ईश्वरனுக்கு कर्मादिनिरपेक्षமாகையாலே जीवனுக்கு साधारणकर्तृशक्ति भगवदधीनैயாகையாலே ईश्वरனுக்கு अपराधीनकर्तृत्वமும், जीवனுக்கு पराधीनकर्तृत्वமுமென்கிற वैषम्यं கூடுமென்று கருத்து.

---

(सा.प्र) ननु भाष्यस्य द्रमिडोपनिषदां च प्रवर्तकैर्भाष्यकारादवगतसकलार्थैः "திருக்குருகைப்பிரான் பிள்ளான்" इत्याख्यातपूर्वाचार्यैस्सोदाहरणं स्वयं साधनानुष्ठानमयुक्तम्, भगवत्कृपया प्राप्तमेव अनुभाव्यमित्युक्तेर्लोकाचार्यैर्भक्तिविधेः स्वरूपविश्वासार्थत्वोक्तेश्च शास्त्रतः फलसाधनविधानसिद्धेश्शास्त्र-स्यार्थवत्त्वाय जीवस्य कर्तृत्वसिद्धिरयुक्तेत्यत्र, पूर्वाचार्यवाक्यानां विहितोपायानुष्ठाने -

---

(सा.वि) सृष्ट्यादिகளில் इति। कर्तृत्वस्थापनाच्छरणवरणविधिरुपपन्न इत्युपसंहरति - இப்படி सर्वविषयेति। ईश्वरனடியாக, ईश्वरमूलकेत्यर्थः। ननु भाष्यस्य द्रमिडोपनिषदां प्रवर्तकैर्भाष्यकारावगत सकलार्थैः "திருக்குருகைப்பிரான் பிள்ளான்" इत्याख्यातैः पूर्वाचार्यै स्सोदाहरणं स्वयं साधनानुष्ठान-मयुक्तम्। भगवत्कृपया प्राप्तमेवानुभाव्यमित्युक्तेः, लोकाचार्यैर्भक्तिविधेरन्यविश्वासार्थत्वोक्तेश्च शास्त्रकृतफलसाधनविधानानुपपत्तेश्च शास्त्रस्यार्थवत्त्वाज्जीवस्य कर्तृत्वसिद्धिरयुक्तमित्याशङ्क्य -

---

(सा.सं) सृष्ट्यादिति। सृष्टिमात्रे ईश्वरस्य कर्तृत्वेऽपि विषमसृष्टिः कर्मविशेष निमित्तकैवेत्यर्थः। गुणेति। गुणैः कर्मभिश्च विभज्येत्यर्थः। एवं परतन्त्रत्वेऽपि विधियोग्यत्वमस्तीत्युक्तमुपसंहरति। இப்படி इति। विधि योग्यत्वे आपततः பிள்ளான் उक्ति विरोधमपि तात्पर्योक्त्या परिहरति।

**मू** - இப்படி **भक्त्यादि**கள் போலே **शरणागतिधर्म**மும் **कर्तव्य**மாக **विधि**க்கப்படுகையால் "தன்னால் வரும் நன்மை விலைப்பால் போலே, **ईश्वर**னால் வரும் நன்மை முலைப்பால் போலே" என்று பிள்ளான் **वार्तै**க்கு **भक्तिप्रपत्त्यादि**கள் எல்லாம் அவனாலே வருகிறதென்று (நினைக்கவேண்டுமென்று) தன்னுடைய **पराधीनकर्तृत्व**த்திலே **तात्पर्यम्** ।
"**अन्यविश्वाससिद्ध्यर्थं भक्त्युपायविधिं वदन्** ।

(सा.दी) பிள்ளான் वार्तै க்கும் இவ் अर्थத்திலே நோக்கென்கிறார் - இப்படி भक्त्यादिகளென்று. शास्त्रभक्त्युपायविधानं प्रपत्त्युपायविश्वाससिद्ध्यर्थम् । भक्ति யில் शास्त्रத்துக்குத் तात्पर्यமில்லையென்று சிலர் சொல்லுவர்கள். அதுவும் दुष्टமென்றோர் - अन्यविश्वासेति ।

(सा.स्वा) இப்படி जीवனுக்கு कर्तृत्वமுண்டாகில் தன்னால் வரும் நன்மை விலைப்பால் போலே யென்றும் ईश्वरனால் வரும் நன்மை முலைப்பால் போலே யென்றும் பிள்ளான் वाक्यத்திலே स्वकर्तृत्वनिन्दै தோற்றுகையாலே जीवனுக்கு कर्तृत्वं पारमार्थिकமன்றென்ன வேண்டாவோ? என்னவருளிச்செய்கிறார் - இப்படி इति । இப்படி पूर्ववाक्यத்திலே भक्तिप्रपत्त्यादिகளெல்லாமென்று भक्तियोगத்துக்கு उपायत्वं சொன்னது கூடுமோ? विधानத்தாலே भक्तिக்கு उपायत्वமுண்டென்னில் भक्तिरूपोपायविधानं प्रपत्तौ विश्वाससिद्ध्यर्थतया अन्यथासिद्ध மாகையாலேயதுக்கு उपायत्वமேயில்லையே? किंच भक्तियोगमहं करोमि என்று अहङ्कारवत्कर्तृक மாகையாலே मद्योपहतघटवात(गत?)गङ्गाजलवद्दुष्टமன்றோ? என்ன இந்த मतद्वयத்தையும் இந்த இரண்டு शङ्कैயையும் ஒரு कारिकैயாலே निराकरिக்கிறார் - अन्येति । अन्यविश्वाससिद्ध्यर्थं, प्रपत्तिविश्वाससिद्ध्यर्थम् । गुरुतरोपायं विधायत्वमत्र न शक्तः, मा ते विषादः, -

(सा.प्र) अहङ्कारनिवृत्तिमात्रे तात्पर्याल्लोकाचार्यवाक्यस्यापि भक्तेर्मोक्षसाधनत्वसद्भाव एव तस्या दुरनुष्ठेयत्व-ज्ञापनद्वारा भरन्यासाधिकारभूताकिञ्चन्यस्वरूपाध्यवसायहेतुत्वे तात्पर्याच्छास्त्रीयत्वविधिसिद्धेर्न कर्तृत्वासिद्धिरित्याह - இப்படி भक्त्यादिகள் इत्यादिना । अन्यथा कस्यचिदुपायस्य उपायत्वानङ्गीकारेणैव-

(सा.वि) पूर्वाचार्यवाक्यानां विविधोपायानुष्ठानेऽङ्कारनिवर्तनमात्रे तात्पर्यात्, लोकाचार्यवाक्यानां भक्तेर्मोक्षसाधनत्वे सत्यपि तस्या दुरनुष्ठेयत्वज्ञापनद्वारा भरन्यासाधिकारभूताकिञ्चन्यस्वरूपाध्यवसाये तात्पर्याच्छास्त्रीयविधिसिद्धे न कर्तृत्वे विरोध इत्याह - இப்படி भक्त्यादिகள் इति । தன்னால் வரும் நன்மை விலைப்பால் போலே, ईश्वरனால் வரும் நன்மை முலைப்பால் போலே इति பிள்ளான் वार्ता । अस्यास्त्वयमर्थः । தன்னால் வரும், स्वस्वातन्त्र्येण प्राप्तम् । நன்மை, समीचीनसाधनम् । விலைப்பால் போலே, शिशोःक्रीतक्षीरतुल्यम् । ईश्वरனால் வரும் நன்மை, ईश्वरानुग्रहप्राप्तं साधनम् முலைப்பால் போலே स्तन्यक्षीरतुल्यम् । நினைக்கை, प्रपत्ति-विश्वाससिद्ध्यर्थं गुरुतरं दुष्करोपायं प्रदर्श्य त्वमत्र न शक्तोऽसि -

(सा.सं) இப்படி इति । प्रपत्तौ विश्वाससिद्ध्रयर्थमेन भक्तिविधानम् । ननु शास्त्रस्य भक्तावपि तात्पर्यमितिपक्षं दूषयति । अन्येति । गुरुतर विधानमात्रस्य लघुनि विश्वासमात्रसिद्ध्रयर्थत्वात्प्रपत्तेरपि -

**मू - सर्वशास्त्रेष्वविश्वासम् आधत्ते मुखभेदतः।।**
**मद्योपहतपात्रस्थतीर्थदृष्टान्तवर्णनम्।**
**अहङ्कारान्वये तु स्यात् प्रपत्तावपि भक्तिवत्।।''**

---

(सा.दी) अन्यशब्दமிங்கு प्रपत्ति विषयம். सर्वशास्त्रेषु, प्रपत्तिशास्त्रे தன்னிலுமென்று கருத்து. मुखभेदतः, प्रकारान्तरेण என்றபடி. मदिराबिन्दुमिश्रமான शातकुम्भमयकुम्भगततीर्थसलिलं போலே अहङ्कारमिश्रமான उपायान्तरமென்று பிள்ளான் वचनத்துக்கு उपायान्तरं स्वभावतः अहङ्कारमिश्रமாயிருக்குமாகையாலது त्याज्यமென்று சிலர் अर्थம் சொல்லிக்கொண்டு भक्त्यादिகளுக்கு उपायत्वमङ्गीकरिத்தும் स्वरूपविरुद्धங்களென்பர்கள் - तन्निरासार्थமிதுக்கு அப்படி अर्थமன்றென்கிறார் - मद्योपहतेति। तीर्थसलिलं போலே என்று दृष्टान्तवर्णनम्, अहङ्कारान्वयமுண்டாகிலப்போது இது दृष्टान्तोपन्यासम्। -

---

(सा.स्वा) लघुतरोपायान्तरमुच्यत इत्युक्ते हि तत्रादररूपविश्वासो भवेदिति भावः। भक्त्युपायविधिं वदन् वादी - सर्वशास्त्रेषुप्रपत्तिशास्त्रेऽपीत्यर्थः। मुखभेदतः, प्रकारभेदतः। पर्ययिणेति यावत्। भक्तिविधानं प्रपत्तिविश्वासार्थमितिवदग्निहोत्रादिविश्वाससिद्ध्यर्थं ज्योतिष्टोमादिविधानं, कीर्तनविश्वास सिद्ध्यर्थं प्रपत्तिविधानमिति भङ्गिभेदेन सर्वशास्त्रेष्वप्यविश्वासमाधत्त इत्यर्थः। मद्योपहतपात्रस्थतीर्थदृष्टान्तवर्णनम्, उपायान्तरस्य पूर्विकैरुक्तमहङ्कारान्वये स्यात्। -

---

(सा.प्र) उपायान्तरविश्वासार्थत्वस्वीकारे तुल्यन्यायतया ज्योतिष्टोमादेस्सर्वस्यापि भगवत्युपायत्वाध्यवसायार्थप्रसक्त्या कस्यापि फलसाधनत्वाभावप्रसङ्ग इति। ननु पूर्वाचार्याभिमतमेव तद्विवक्षिततयारोप्यत इत्यत्र ''मदिराबिन्दुमिश्रமான शातकुम्भमयकुम्भगततीर्थसलिलं போலே अहङ्कार मिश्रமான उपायान्तरम्'' इति भगवद्व्यतिरिक्तस्य सर्वस्यापि साध्योपायस्य अहङ्कारगर्भत्वे त्याज्यत्वस्य विशिष्योक्तेस्सामान्योक्तेरपि तत्परत्वमनारोपितमेवेत्यभिप्रयन्नाह - मद्योपहतेत्यादिना। -

---

(सा.वि) मा भैषीः। मयैव लघुतरमुपायान्तरमुच्यत इति विश्वासजननार्थमित्यर्थः। मुखभेदतः। पर्ययिण एकत्रोक्तन्यायेनेति भावः। ''प्रजापतिर्यज्ञान् असृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानुममीत यावदग्निहोत्रमासीत्तावानग्नि[illegible]ी पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो य एवं विद्वानग्निहोत्रं जुहोति'' इत्यारभ्य ''यावदतिरात्रेणोपाप्नोति'' इत्यादिप्रशंसावशात् ज्योतिष्टोमाधिविधिष्वप्येवं प्रसङ्ग इति भाव;। अहं मुक्त्युपायं साधयामीत्यहङ्कारगर्भत्वात् भगवद्विषयतया शुद्धापि नोपादेयेत्युक्तौ प्रपत्तिप्रतिबन्द्या परिहरति - मद्योपहतेति। मदिरादिबिन्दुमिश्रितமான शातकुम्भमयकुम्भगततीर्थसलिलं போலே अहङ्कारमिश्रितமான उपायान्तरमिति तदुक्तदृष्टान्तकथनमित्यर्थः। -

---

(सा.सं) अञ्जल्यपेक्षया तस्य च शून्यवादापेक्षया गुरुत्वात्प्रपत्त्यादि शास्त्रेष्वविश्वासस्स्यादित्यर्थः। अहं मुक्त्युपायं साधयामीति कर्तृत्वाभिमानवदाश्रया भक्तिर्मद्योपहतपात्रस्थ गङ्गोदकवन्नोपादेयेति रूपायामपि परोक्तिं प्रतिवक्ति। मद्येति। यदि भक्तावहंङ्कारान्वयः स्यात्तदेवं दृष्टान्तवर्णनं सङ्गतं स्यात्।

**मू -** ஆகையால் **"प्रसीद मद्वृत्तमचिन्तयित्वा"** **इत्यादि**கள் முன்பு தான் பண்ணின **प्रपत्ति**க்கு **क्षमै** கொள்ளுகிறபடியென்று சிலர் சொல்லுமதுவும் **अहङ्कारस्पर्शादिशङ्कै**யைப் பற்றவாமத்தனை - அல்லது **यथाशास्त्रमनुष्ठित्त प्रपत्ति अपराध**மாய் அதுக்கு **क्षमै** கொள்ளுகிறபடியன்று -

(सा.दी) அப்போது त्याज्यत्वं प्रपत्तिயிலும் तुल्यम्। ஆகையால் यथावस्थितार्थानुसन्धानपूर्वकமான भक्तिயிலும் प्रपत्तिயிலும் निषेधமில்லையென்று கருத்து. இனி "पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा" என்றதுக்கு சிலர் தாமே கீழே "त्वत्पादमूलं शरणं प्रपद्ये" என்று यथाशास्त्रமாக अनुष्ठित्त प्रपत्तिயும் अपराधकोटिயிலேயாய் அதுக்கு क्षमै கொள்ளுகிறாரென்பர்கள். அதுவுமப்படியன்றென்கிறார் - முன்பு தாம் பண்ணின इत्यादियால். கீழே தாம் यथाशास्त्रமாகப் பண்ணின प्रपत्तिக்கென்கை. अहङ्कारादिस्पर्शशङ्कैயாலே क्षमै கொள்ளுகிறாரென்ன प्राप्तम्। அல்லவாகில் प्रपत्तिविधि व्यर्थமாமென்று கருத்து. -

(सा.स्वा) तत्तु प्रपत्तावपि स्यादिति प्रपत्तेरप्युपायत्वं न स्यादिति भावः। ஆனாலும் व्रज என்று प्रपत्तिरूपोपायविधानं கூடுமோ? "प्रसीद मद्वृत्तमचिन्तयित्वा" என்று ஆளவந்தார் தாம் अनुष्ठित्त प्रपत्तिயை अपराधமாக நினைத்து क्षापणं பண்ணுகையாலே प्रपत्ति उपायமேயன்றென்று சிலர் சொல்லவில்லையோ? என்ன, இந்த मतத்தையும் उक्तयुक्त्या निराकरिக்கிறார் - ஆகையால் इति। ஆகையால், अहङ्कारमिश्रत्वं भक्तिवत् प्रपत्तिயிலும் दोषமாகையாலே என்றபடி. अहङ्कारமன்றிக்கே यथाशास्त्रமானாலும் स्वयं செய்கையாலே अपराधமாமென்ன बाधकமருளிச் செய்கிறார். -

(सा.वि) प्रपत्तावहङ्काराराहित्यं पराधीनकर्तृत्वेन यद्यप्युपपाद्यते, तर्हि भक्तावपि तुल्यम्। यदि तत्राहङ्कारान्वयः, तर्हि प्रपत्तावपि स्यात्। किं बहुना? तस्य कैङ्कर्यमेव न सिद्ध्येदिति भावः। ननु यामुनाचार्यैः पूर्वं स्वानुष्ठितभरन्यासस्यापराधत्वात्खलु "पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा" इति स्वाचार्यपुरस्कारपूर्वकमपराधक्षापणं कृतमित्याशङ्क्य, तत्प्रपत्तावाचार्यपुरस्करणं प्रधानमिति तदभावेऽहङ्कारस्पर्शशङ्कापूर्वकं स्वकृतप्रपत्तेर्वैकल्यमित्याशङ्क्य पूर्णप्रपत्तिनिष्ठमाचार्यं स्वरक्षणाय पुरस्कृतवन्त इत्येव - पितामहं नाथमुनिं विलोक्येत्यस्य तात्पर्यं कल्प्यम्। न त्वपराधक्षामणे। तथा सति सर्वशास्त्राणां पूर्वाचार्यसम्प्रदायस्य "त्वदङ्घ्रिमुद्दिश्य" इत्यादिवचनानां च विरोधः स्यादित्यभिप्रेत्याह - ஆகையால் इति। अहङ्कारस्पर्शशङ्कैயைப் பற்றவாமத்தனை, अहङ्कारस्पर्शशङ्कां प्रति भवतीत्येतन्मात्रम्। कर्तृत्वमात्रस्यापराधत्वे आचार्यपुरस्कारस्याप्यपराधत्वेन तत्परिहारार्थं क्षामणान्तरमित्यनवस्था। -

(सा.सं) स एव नास्ति। अन्यथा भक्ताविव प्रपत्तावपि तदन्वयस्स्यात्। प्रपत्तावहङ्काराराहित्यं यद्यप्युपपाद्यते भक्तावपि तत्तुल्यमित्यर्थः। प्रसीदेत्यादि प्रपत्तिकरणनिमित्तापराधक्षामणमित्युक्तिरपि प्रतिवक्ति - ஆகையால் इत्यादिना।

**मू** - அப்படியாகில் **''पितामहं नाथमुनिं विलोक्य प्रसीद''** என்கிற **पूर्वाचार्यपुरस्कारादि**களும் தான் செய்கிறதாகையாலேயதுக்கு **क्षमै** கொள்ள வேண்டி **अनवस्थै**யாம். இது **स्वपरनिर्वाहक**மாகில் அதுபோலே முன்பு பண்ணின **प्रपदन**மும் **स्वपरनिर्वाहक**மென்னலாம் - இங்கு சொல்லும் **कुतर्क**ங்களாலே **पूर्व**ர்கள் பண்ணின **प्रपत्ति**யும் **अपराध**மாய் அறுகையாலே **पूर्व**ர்களை முன்னிடவுமொண்ணாதொழியும். -

---

(सा.दी) அப்படியாகில் इत्यादि। **यथाशास्त्र**மானாலும் தாம் பண்ணுகையாலே प्रपत्ति अपराधकोटिயிலேயாமென்னிலருளிச் செய்கிறார் - அப்படியாகில் என்று. இதுக்குப் परिहारத்தை शङ्कित्त्து प्रतिबन्द्या परिहरिக்கிறார் - இது स्वपरेत्यादिயால். இது இந்த पूर्वाचार्यपुरस्कारम्। स्वपरनिर्वाहकं, स्वदोष परदोषशामकமாகிலென்கை. यथाशास्त्रमनुष्ठितமான प्रपत्तिயும் दोषமாமாகில் दूषणान्तरं காட்டுகிறார். இங்கு சொல்லும் इत्यादिயால். स्तोत्रத்தில் आद्यन्तங்களில் பண்ணின आचार्यपुरस्कारத்துக்குக் கருத்தைத் தாமருளிச் செய்கிறார். -

---

(सा.स्वा) அப்படியாகில் इति। आचार्यपुरस्कारं पूर्वानुष्ठितप्रपदनத்துக்கும் क्षापणरूपமாய்க்கொண்டு स्वपरनिर्वाहकமாகையாலே अनवस्थैயில்லையே? என்ன அருளிச்செய்கிறார். இது इति। முன்பு इति। पूर्वानुष्ठितप्रपदनं समस्तपापத்துக்கும் தனக்கும் क्षापणமாய்க் கொண்டு स्वपर-निर्वाहकமாமென்று கருத்து. प्रबलबाधकान्तरமருளிச்செய்கிறார் - இங்கு इति। அறுகையாலே, தீருகையாலே. अपराधिகளை முன்னிடக்கூடாதென்றபடி. இப்படியாகில் स्तोत्रத்தில் -

---

(सा.प्र) ननु रामानुजदर्शनकूटस्थैर्यामुनाचार्यैः ''अहमद्यैव मया समर्पितः'' इत्यत्र स्वानुष्ठित भरन्यासस्यापराधत्वं मत्वा स्तोत्रान्ते स्वाचार्य पुरस्करणपूर्वकं तत्क्षापणं कृतमित्याप्ततम-सम्प्रदायात्कस्याप्युपायस्यानुष्ठेयत्वानुपपत्तेश्शस्त्रार्थवत्त्वाय कर्तृत्वसाधनमनुपपन्नमित्यत्र, यामुनाचार्यैः ''जनित्वाऽहम्'' इत्याद्युक्त्वा ''पितामहं नाथमुनिं विलोक्य प्रसीद'' इत्युक्तेः ''कालत्रयेऽपि करणत्रयनिर्मितातिपापक्रियस्य शरणं भगवत्क्षमैव। सा च त्वयैव कमलारमणेऽर्थिता यत्क्षेमस्स एवहि यतीन्द्र भवच्छ्रितानाम्'' इत्युक्तप्रकारेणानाद्यनन्तकर्मपाश प्रग्रथितानां भगवदाश्रयणं आचार्यपुरस्कारेणैव कर्तव्यमिति ज्ञापनेऽहङ्कारादि परिहरणीयत्वज्ञापने च तात्पर्येण तथोक्तिरिति दर्शयन्, उक्ततात्पर्यानङ्गीकारेण भरन्यासकृतिरूपापराध क्षमणार्थत्वोक्तावाचार्य पुरस्करणरूपापराध क्षापणे कर्तृत्वाख्यापराधक्षामणार्थं क्षामणान्तरस्य कर्तृत्वतया तस्य तस्यापि तथेत्यनवस्थानात्, तत्परिहारार्थं प्रसीदेत्येवंरूपापराधक्षामणस्य स्वपरनिर्वाहकत्वोक्तौ -

---

(सा.वि) आचार्यपुरस्कारस्य स्वपरनिर्वाहकत्वे पूर्वविहितप्रपत्तेरपि स्वपरनिर्वाहकत्वं सम्भवतीत्याह - இப்படியாகில் इति। तथाचेदित्यर्थः। पूर्वाचार्यानुष्ठितप्रपदनस्यापराधरूपत्वे पूर्वाचार्यपुरस्कारोऽपि न कार्य इत्याह - இங்கு சொல்லும் कुतर्कங்களாலே इति। पूर्वர்களை முன்னிடவொண்ணாதொழியும், पूर्वेषां पुरस्कारो न स्यादित्यर्थः। तेषामपराधकारितया -

---

(सा.सं) स्वपरनिर्वाहकं, स्वदोष-परदोषशामकम्। यथाशास्त्रानुष्ठितप्रपत्तेरपि दोषत्वे दूषणमाह। இங்கு சொல்லும் इति। तस्याचार्यपुरस्करणस्य किं प्रयोजनमित्यत्राह -

**मू -** ஆகையால் இஸ் **स्तोत्र**த்தில் **आद्यन्त**ங்களில் பண்ணின **पूर्वाचार्यपुरस्कारं** இங்கு அருளிச் செய்கிற **प्रपत्ति**க்கு **अपेक्षित**மாயாதல், **वैकल्यपरिहारार्थ**மாயாதல் **उपयुक्त**மாய் வந்ததித்தனை. இவ் **आचार्यपुरस्कार**த்தில் போலே **प्रपत्त्यादि**களிலும் **पराधीनकर्तृत्वं दोष**மன்று.

(सा.दी) ஆகையால் इत्यादि। ''आचार्यानुज्ञया कुर्यात्'' என்று आचार्यपुरस्कारं प्रपत्तिக்கும் अपेक्षितமிறே. पराधीनकर्तृत्वानुसन्धानपूर्वकत्वத்தில் ஓரிடத்திலும் दोषமில்லாமையால் तत्परिहारार्थ மன்றென்கிறார் - இவ் आचार्येत्यादि। आदिशब्देन भक्त्यादिपरिग्रहम्। சிலர் आत्माவுக்கு कर्तृत्व மில்லாமையாலும், पारतन्त्र्य स्वरूपज्ञानமுண்டாகையாலும், पापங்களில் स्वातन्त्र्यமில்லாமை யாலும், அது लेपिயாதென்பர்கள். निषेधशास्त्रं कर्तृत्वमात्रावलम्बिயாகையால் आत्माவுக்கு पराधीनकर्तृत्वமிங்கே साधिக்கையாலந்த निषिद्धाचरणத்திலும் दोषं लेपिயாதென்னும் पक्षமும் निरस्तமென்கிறார்.

(सा.स्वा) आचार्यपुरस्कारं निष्फलமாக प्रसङ्गिயாதோ? अहङ्कारमिश्रप्रपदनरूपापराधक्षापणार्थ மென்னில் ''प्रसीद मद्वृत्तमचिन्तयित्वा'' என்று प्रार्थनमेतत्क्षामणமாகையாலேயது व्यर्थமன்றோ? என்னவருளிச் செய்கிறார் - ஆகையால் इति। ஆகையாலே, अहङ्कारस्पर्शरहितप्रपदनं शास्त्रीय மாகையாலே என்றபடி. अपेक्षितमिति। ''आचार्यानुज्ञया कुर्यात्'' என்று आचार्यपुरसस्कारं प्रपत्तिக்கு अपेक्षितமிறே. वैकल्येति। ''गुरुं प्रकाशयेद्धीमान् मन्त्रं यत्नेन गोपयेत्। अप्रकाशप्रकाशाभ्यां क्षीयते सम्पदायुषी'' इत्याद्युक्तप्रकारेण प्रपत्त्युपयुक्तज्ञानवैकल्यपरिहारार्थமென்றபடி. यद्वा, तत्तत्कालीनप्रातिकूल्यवर्जनरूपाङ्गवैकल्यपरिहारार्थமென்றபடி. यद्वा, मद्वृत्तमचिन्तयित्वा என்றதிறே. இவ் आचार्यपुरस्कारं प्रपत्तिயில் पराधीनकर्तृकत्वरूपदोषपरिहारार्थமென்று தான் சொல்லலாகாதோ? என்னவருளிச் செய்கிறார் - இவ் आचार्येति। पराधीनकर्तृत्वं दोष மல்லாமையாலே तत्परिहारार्थமென்னவொண்ணாதென்று கருத்து. இனி आत्माவுக்கு कर्तृत्व மில்லாமையாலே तत्प्रयुक्तपापं लेपिயாதென்கிற पक्षं कर्तृत्वसमर्थनத்தாலே निरस्तप्रायமானாலும் विशेषचर्चार्थமாக तत्पक्षनिरासத்தை अनुवदिக்கிறார்.

(सा.प्र) ''प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे। मामेकां देवदेवस्य महिषीं शरणं व्रजेत्।।'' इत्यादिभि: *सर्वत्वात्(?)कर्तृत्वसमर्थनं निगमयति - ஆகையால் इत्यादिना। एवं पराधीनकर्तृत्वसमर्थनात् कर्तृत्वाभावमूलालेपकपक्षश्च निरस्त इत्याह -

(सा.वि) ''पशुर्मनुष्य: पक्षी वा ये च वैष्णवसंश्रया:'' इत्यादिप्रकारेणानुबन्धिपर्यन्तमनुग्राह्यं मत्वेत्यादि तत्पुरस्कारोऽपि न स्यादिति भाव:। पराधीनकर्तृत्वसाधनं निगमयति - இவ் आचार्येति। आचार्यपुरस्कारे यथा पराधीनकर्तृत्वं तथा प्रपत्तावपीति भाव:। अनेनैव पराधीनकर्तृत्वसमर्थनेन कर्तृत्वाभावमूलालेपकपक्षो निरस्त इत्याह -

(सा.सं) ஆகையால் इति। ''आचार्यानुज्ञया कुर्या''दिति तत्पुरस्कार: प्रपत्त्यपेक्षित:।

*प्रकाशिकैயில் சில वाक्यமில்லாதாய்த் தோன்றுகிறது. -

**मू** - இப்படி **पराधीनकर्तृत्वं प्रामाणिक**மாகையாலே **आत्मा**வுக்கு **कर्तृत्व**மில்லாமையாலே **स्वरूपं** தெளிந்தவனை **निषिद्धकर्म**ங்களொன்றும் **लेपि**யாதென்கிற **पक्ष**மும் **निरस्तम्।** **मुमुक्षु**வுக்குச் சொன்ன **बाल्यं बाल्यकृत्य**ங்களான **कामचारादि**களன்று. **स्वमाहात्म्यानाविष्कारमात्र**மென்னுமிடம் **''अनाविष्कुर्वन्नन्वयात्''** என்கிற **सूत्रत्ति**லே **समर्थितम् ।** -

(सा.दी) இப்படி इत्यादियाल् । ஒன்றுமென்றது बुद्धिपूर्वமுமென்றபடி - मुमुक्षु ''बाल्येन तिष्ठासेत्'' என்று कामाचारं சொல்லுகையால் निषिद्धाचरणं लेपिயாதென்ன வேண்டாவோ? என்னவருளிச் செய்கிறார் - मुमुक्षुவுக்கென்று துடங்கி - பின்னையெது? என்னவருளிச்செய்கிறார் - स्वमाहात्म्येति। ''अनिष्टमिष्टं मिश्रं चत्'' इत्यादिகளில் बुद्धिपूर्वोत्तराघं लेपिயாதென்னவில்லையோ? என்னவருளிச் செய்கிறார்.

(सा.स्वा) இப்படி इति। मुमुक्षुவுக்கு ''पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'' என்று कामचारं சொல்லவில்லையோ? என்னவருளிச்செய்கிறார் - मुमुक्षुவுக்கு इति। பின்னையெது? என்னவருளிச் செய்கிறார். स्वेति। ''यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।। भवत्यत्यागिनां प्रेत्य नतु सन्न्यासिनां क्वचित्।'' इत्यादिகளிலே मुमुक्षुவுக்கு दुष्कर्मம் लेपिயாதென்று சொல்லவில்லையோ? என்னவருளிச் செய்கிறார்.

(सा.प्र) இப்படி इत्यादिना। ननु ''तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'' इति बाल्येन स्थितेर्विधानादतीताया बाल्यावस्थायाः पुनरागम्यासम्भवादन्यथानुपपत्त्या बालाचारभूतकामाचारस्यैव विधेयत्वेन पापालेपपक्षनिरासोऽनुपपन्न इत्यत्राह - मुमुक्षुவுக்கு इत्यादिना। ''नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैवमाप्नुयात् ।। आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः।'' इत्यादिषु कामाचारादीनां विद्याविरोधित्वश्रवणात्तेषां ब्रह्मविद्यानिष्ठैः कर्तव्यतया विधानासम्भवात्स्वमाहात्म्यानाविष्करणयेव बाल्यशब्दार्थ इति सूत्रस्यार्थः। ननु धर्मसंस्थापनप्रवृत्तेन भगवतैव -

(सा.वि) இப்படி इति। ननु ''तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'' इति श्रुतौ अतीतायाः बाल्यावस्थायाः पुनरागमासम्भवात् ज्ञानिनो बाल्यसंभावितकामाचार एवोच्यत इत्याशङ्क्याह - मुमुक्षुவுக்கு इति। ''नाविरतो दुश्चरितात्'' इत्यादिना कामाचारादीनां विद्याविरोधश्रवणात्तेषां ब्रह्मविद्यानिष्ठैः कर्तव्यतया विधानासम्भवात्स्वमाहात्म्यानाविष्कार एव बाल्यशब्दार्थ इति भावः। ननु ''अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनो प्रेत्य नतु संन्यासिनां क्वचित्। यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमान् लोकान् न हन्ति न निबध्यते।।'' इति भगवतैवोक्तत्वान्न पापालेपोक्तेर्दूषणमित्याशङ्क्य, तद्वचनजातं बुद्धिपूर्वोत्तराघव्यतिरिक्तविषयमिति,

(सा.सं) निरस्तमिति, निषेधकशास्त्रस्य कर्तृत्वमात्रावलम्बनत्वात्पराधीनकर्तृत्वस्य च साधितत्वन्निषिद्धालेपपक्षो निरस्त इति भावः।विद्यानिष्ठस्य बाल्योक्तिबलान्निषिद्धालेप इत्यत्राह - मुमुक्षुவுக்கு इति। ''अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां पुंसां न तु संन्यासिनां क्वचित्।। यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापिस इमान् लोकान् नायं हन्ति हन्यते।।'' इत्याद्यापातप्रतीतार्थपर्यालोचनया -

**मू - ''अनिष्टमिष्टं मिश्रं च।, यस्य नाहंकृतो भावः।'' इत्यादिवचन**ங்கள் **अबुद्धिपूर्वोत्तराघ-विषय**ங்களென்னுமிடம் **बहुशास्त्रविरोधं** வாராமைக்காக **भाष्यादि**களிலே **समर्थि**க்கப்பட்டது. **''हत्वाऽपि''** என்றதுவும் धर्मयुद्धादिविषयम्। -

(सा.दी) अनिष्टमित्यादि। हत्वापि என்றதுக்கு बुद्धिपूर्वविषयत्वத்தில் निर्वाहமருளிச்செய்கிறார் - हत्वापीत्यादिயால். उत्तताघं लेपिயாதென்னும் पक्षं बहुशास्त्रविरुद्धமென்கிறார் -

(सा.स्वा) अनिष्टमिति। ''हत्वापि न निबध्यते'' என்று बुद्धिपूर्वपापமும் लेपिயாதென்று சொல்ல வில்லையோ? என்னவருளிச் செய்கிறார். हत्वापीति। इदानीमुपभुक्तौषधमुत्तरकालीना-पथ्यनाशकமாகிறாப் போலே प्रपदनமும் उत्तरबुद्धिपूर्वपापनाशकமாகலாகாதோ? என்னவருளிச் செய்கிறார்.

(सा.प्र) ''अनिष्टमिष्टंमिश्रंच त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्यनतु सन्न्यासिनां क्वचित्।। यस्य नाहङ्कृतो भावो बुद्धिर्यस्य नलिप्यते। हत्वापि सइमान् लोकान्न हन्ति न निवध्यते।। नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्।'' इत्यादिभिस्तत्त्वज्ञानवतः पापालेपोक्तेस्तद्दूषणमयुक्तमित्यत्र ''नाविरतः। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। अपायाद्विरतश्शश्वन्मां चैव शरणं तगः। तनूकृत्याखिलं पापं मामाप्नोति नरश्शनैः।। प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात्। भक्तेषु द्वेषकृत्प्रभो। स्वभक्तायापि भक्तेषु द्वेषिणे मङ्क्षु कुप्यति।'' इत्याद्यनन्तप्रमाणाबाधाय ''सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्'' इत्यस्मिन्नधिकरणे भाष्यकारैरापद्यनुष्ठितानामेवालेपः नेतरेषामित्युक्ततुल्यन्यायतया अनिष्टमित्यादीनामापद्यनुष्ठितानां फलजनकत्वाभावोऽर्थस्समर्थित इत्याह। अनिष्टमिष्टंमिश्रंचेत्यादिना। अनिष्टं प्रामादिकपापफलमित्यर्थः। भाष्यादीति। ''न द्वेष्ट्यकुशलम्'' इत्यादि गीताश्लोकभाष्यादिरादिशब्दार्थः । हत्वापीत्येतत्तु धर्मयुद्धप्रकरणाद्धर्मयुद्धे हत्वेति स्फुटमित्याह। हत्वापीत्यादिना। भरन्यासस्य बुद्धिपूर्वाघाश्लेषहेतुत्वमपथ्यसहौषधन्यायाद्भविष्यतीत्यत्र नहि ''वचनविरोधे न्यायः प्रवर्तते'' इति न्यायान्न्याय एव बाधित इत्याह।

(सा.वि) ''नाविरतो दुश्चरितात् - यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि नो इतराणि। आज्ञाच्छेदी मम द्रोही'' इत्यादिप्रमाणसहस्रैर्भाष्यादिषु समर्थित मित्याह। अनिष्टमिति। हत्वापीत्यस्य कथमबुद्धिपूर्व विषयत्वमित्यत्राह। हत्वापि என்றதுவும் इति। ननु यथा एकमेवौषधं रोगनिवर्तकम् , उत्तरकालीनापथ्य दोषनिर्हरणक्षमवीर्यवत्तरञ्च दृश्यते, तद्वत्प्रपदनमपि उत्तरबुद्धिपूर्वाघाश्लेषकारि मोक्षकारणं चास्त्वित्याशङ्क्याह ।

(सा.सं) सन्न्यासिनां प्रपन्नानां बुद्धिपूर्वोत्तराघेऽपि न लिप्यत इति परोक्तिमपि प्रतिवक्ति - अनिष्टमित्यादिना। धर्मयुद्धादिविषयमिति। धर्मयुद्धस्य आश्रमानुगुणकर्मत्वान्नाघत्वमिति भावः । -

मूः - अपेतशोकैराचार्यैरयं पन्थाः प्रदर्शितः ।।

குறிப்புடன் மேவுந்தருமங்களின்றியக் கோவலனார், வெறித் துளவக் கழல்.........

(सा.दीः) श्रियाजुष्टं प्रीतिमिति पुरुषकारत्वमुक्तम् । श्रियाजुष्टं सेवितं समाश्रितैः என்று उपायविशेषणत्वं சொல்லிற்று. समाश्रितैः, शरणं गतैः । अत एवापेतशोकैः, निवृत्तसर्वशोकैः । आचार्यैः, वादिहंसाम्बुवाहाद्यैः । अयं पन्थाः, उक्तो व्याख्यानमार्गः प्रस्पष्टं दर्शितः । न किञ्चिदप्यत्र मयोत्प्रेक्षित மென்றபடி.

இனி चरमश्लोकार्थத்தை स्वानुसन्धानमुखத்தாலே வெளியிடுகிறார். குறிப்புடன் इत्यादि । குறிப்புடன், महावधानத்தோடே । மேவும் தருமங்களின்றி, अनुष्टिக்கப்படும் धर्मान्तरங்களில் अशक्तனாய். அக்கோவலனார், प्राप्यत्वेनவும் प्रसिद्धனான श्रीगोपालனுடைய. வெறித் துளவக்கழல், परिमलतुलसीविशिष्टமான திருவடிகளை.

(सा.स्वाः) श्रियाजुष्टं समाश्रितैः, शरणागतैः । अत एवापेतशोकैराचार्यैरयं पन्थाः, मार्गः । चरमश्लोकार्थः प्रदर्शितः । नतु स्वकपोलकल्पित इत्यर्थः ।।

இப்படி मा शुचः என்று सर्वप्रकारशोकनिवृत्तिசொன்னது கூடுமோ? अर्जुनனைக் குறித்து युद्धप्रोत्साहनार्थமாய்க் கொண்டு उपच्छन्दनोक्तिरूपமாயுமிந்த श्लोकं पर्यवसिக்கையாலே शोक-निवृत्ति पारमार्थिकैயாகக் கூடுமோ? என்கிற शङ्कैயைப் परिहरिயா நின்றுகொண்டு चरमश्लोकार्थத்தை ஒரு பாட்டாலே स्वानुसन्धानமாக सङ्ग्रहिக்கிறார். குறிப்புடன் इति । குறிப்பு, अवधानम् । குறிப்புடன், अवधानத்தோடே கூட । மேவும், अनुष्टिக்குமதான. தருமங்களின்றி, कर्मयोग, ज्ञानयोग, भक्तियोगरूपोपायान्तरங்களன்றிக்கே. अकिञ्चनனாயென்றபடி. இதுக்கு, விரைந்தடைந்து என்கிறத்தோடே अन्वयம். அக்கோவலனார் "परित्राणाय साधूनां" என்று साधुपरित्राणार्थमवतीर्णனான அந்த गोपवेषधरனான श्रीकृष्णனுடைய. வெறி, परिमलवत्தான. துளவத்தை, திருத்துழாயையுடைய, கழல், திருவடிகளையென்றபடி.

(सा.प्रः) एकं, फलरूपम् उपायारूपश्चेत्यर्थः । प्रधानमिति वार्थः । सर्वप्रदं, सर्वसाध्यप्रदमित्यर्थः । एतेनैकशब्दार्थस्सङ्गृहीतः । उपायान्तरशून्यानामेव सिद्धधर्मः कार्यकर इत्युपायत्ववाचिधर्मशब्देन पूर्वार्धार्थस्सङ्गृहीतः । श्रियाजुष्टमित्याश्रयणीयत्वोपयुक्तस्य सर्वस्याप्युपलक्षणम् । एतेन मामित्यस्यार्थ उक्तः । अपेतशोकैरित्युत्तरार्धार्थोक्तिः ।।

चरमश्लोकार्थं गाथया सङ्गृह्णाति । குறிப்புடன் மேவும் इति ।

656ம் பக்கத்தில் இப்பாசுரத்தின் सारप्रकाशिका உரையைக் காண்பது.

(सा.सं:) चरमश्लोकस्थकशब्दषडर्थसङ्ग्रहाय एकमित्युक्तम् । स सतस्याहमेवेति सङ्गृहीतार्थसूचकं सर्वप्रदमिति । "कृष्णं धर्मं सनातनम्" इत्युक्तसिद्धोपायत्वं धर्मशब्दार्थ इति । सिद्धोपायत्वोपयुक्त गुणादिवैशिष्ट्यवत्तन्मूलश्रीवैशिष्ट्यमपि एकशब्दवाच्यमिति सूचनाय श्रियाजुष्टमित्युक्तम् । आचार्यैः, वादिहंसाम्बुवाहैः प्रदर्शितः । नकिञ्चिदप्यत्र मयोत्प्रेक्षितमित्यर्थः ।

"न मे मोघं वचो भवेत्" इत्यादिभिस्सत्यवादित्वेनावगतस्य महोदारस्य माशुच इति वाक्यान्निवृत्तशोका अभूमेत्याह । குறிப்புடன் इति । अवधानेन सहानुष्ठेयं कर्म विना अकिञ्चनरक्षकतया प्रसिद्धस्य कृष्णस्य । வெறி इति । सुगन्धतुलसीभिरविनाभूतौ चरणौ सत्यरक्षकाविति झटित्याश्रित्य ।

मूः - ...மெய்யரணென்று விரைந்தடைந்து,
பிரித்த வினைத்திரள் பின்றொடராவகையப் பெரியோர்,
மறிப்புடை மன்னருள் வாசகத்தால் மருளற்றனமே." ॥ 36 ॥

(सा.दीः) மெய்யரணென்று விரைந்து, परमार्थोपायं प्रधानोपायமென்று अध्यवसित्து. அடைந்து, महाविश्वासतः शरणवरणं பண்ணி. பிரித்த வினைத்திரள், ईश्वरனால் விடுக்கப்பட்ட सर्वपापங்களும். மீள, பின் தொடராவகை. செய்தவென்று शेषம். அப்பெரியோர், "यथादेवे तथा गुशै । देवमिवाचार्यमुपासीत ।।" इत्यादिश्रुतिप्रसिद्धரான நம் आचार्यர்களுடைய. மறிப்புடை மன்னருள் வாசகத்தால், மறிப்புவளைப்பாய் सर्वரையும் वशीकरिக்கையைக் காட்டுகிறது. அத்தையுடைத்தாய் सहजकृपाप्रयुक्तமான उपदेशरूपवाक्यத்தால். மருளற்றனம், अज्ञानान्यथाज्ञान विपरीतज्ञानं கழியப்பெற்றோமென்கை. यद्वा, பிரித்து வினைத்திரளானது பின் தொடராவகைச் செய்தவென்று शेषम् । அப்பெரியோர், श्रुतिप्रसिद्धனான நம் महापुरुषனுடைய. एकस्मिन् पूज्यतया बहुवचनम् । மறிப்புடைமன்னருள் வாசகத்தால், अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः என்ற वाक्यத்தால். चरमश्लोकத்தாலென்றபடி. மருளற்றனமே, अज्ञानरूपமான शोकமும் भीतिயும், संशयமும் கழியப்பெற்றோமென்கை ॥ 36 ॥

இனி चरमश्लोकविहितैயான शरणागतिயை நம்மாழ்வார் முதலான महर्षिகள் लौकिकवैदिकपदविவிகளில்-

(सा.स्वाः) மெய்யரணென்று, परमार्थोपायமென்று. प्रधानोपायமென்று விரைந்து, विश्वसित्து அடைந்து, शरणமாகப்பற்றி. பிரித்த, विभजिக்கப்பட்ட. नशिப்பிக்கப்பட்ட. வினைத்திரள், कृत्स्नपापமென்றபடி. பின் தொடராவகை, திரும்பவும் வராதபடி, பண்ணி इति शेषः । அப்பெரியோர், वेदान्तங்களிலே सर्वस्मात्परत्वेन प्रसिद्धனான श्रीकृष्णனுடைய. மறிப்புடை, மறிப்பு, வளைத்துக்கொள்ளுகை. वशीकरिக்கையென்றபடி. உடை, உடைய. மன், दृढமான. அருள், कृपै । வாசகத்தால், मोक्षयिष्यामिஎன்கிற श्लोकத்தால். सर्ववशीकरणसमर्थसुदृढभगवत्कृपा परिवाहचरमश्लोकத்தாலே. இதினாலே वञ्चनाद्यर्थமன்று இஶ் श्लोकமென்று கருத்து. மருளற்றனமே, மருள், अज्ञानम् । அற்றனம், இல்லாதவரானோம். अज्ञानंதீர்ந்து तदुपलक्षितशोकं தீர்ந்து निस्संशयராய், निर्भरராய், नित्यसन्तुष्टராயிரா நின்றோமென்கை. (36)

இப்படி चरमश्लोकमुखமாகவே विलक्षणोपायं ज्ञातव्यமென்று निर्बन्धமுண்டோ? भगवच्छास्त्रादिप्रमाणान्तरमुखமாகவுமறியலாகாதோ? किञ्च "अपेतशोकैराचार्यैरयं पन्थाः प्रदर्शितः" என்று सदाचार्यसंप्रदायागतமென்று சொன்னது கூடுமோ? वेदोपबृह्मणंபண்ணுகிற ऋषिகளுக்கு सम्मतமாக வேண்டாவோ?

(सा.प्रः) स्वोक्तचरमश्लोकार्थप्रतिपादकवाक्यानि व्यासादेव सार्थमधिगत पञ्चमवेदाः महर्षयः,-

(सा.सं:) பிரித்து इति । पुनरपि पापराशिस्स्वफलदानाय यथा नानुगच्छेत्तथा । அப்பெரியோர் इत्यादि । परात्परस्य पापनिवर्तनसमर्थस्य सुदृढकृपया उक्तवाचकेन मा शुच इत्यनेनाज्ञानान्निवृत्ता अभूमेत्यर्थः ।। ३६ ।।

अथ महाभारतसारतया अतिदुर्ज्ञेयार्थस्यास्य श्लोकस्य हृदयं भाग्याधिकाश्शठारिप्रभृतयो जानन्तीत्याह ।

**मूः - "व्यासाम्नायपयोधिकौस्तुभनिभं हृद्यं हरेरुत्तमम्,**
**श्लोकं केचन लोकवेदपदवीविश्वासितार्थं विदुः ।**

(सा.दीः) हिततमत्वे विश्वसि என்று अध्यवसित्தார்களென்று இதின் अतिशयத்தைச் சொல்லித் தலைக்கட்டுகிறார். व्यासाम्नायेति । केचन, भगवत्प्रसादத்தாலே स्वतस्सिद्धज्ञान भक्तिवैराग्यादि களையுடைய நம்மாழ்வார் श्रीपराशरादिகள். व्यासेति । व्यासाम्नायो महाभारतम् । तदेव पयोधिः । तस्य कौस्तुभस्थानीयम् । हरेर्हृद्यम्, हृदयङ्गमम् । उत्तमं श्लोकं, चरमश्लोकத்தை. लोकवेदपदवी-विश्वासितार्थं विदुः । लोकपदवियாவது? लौकिकं प्रयोजनान्तरम् । वेदपदवी, शास्त्रीयो मार्गः । मोक्षाद्यामुष्मिकं प्रयोजनम् । அதில் विश्वासितार्थं हिततमत्वेन विश्वसनीयार्थयुक्तम् । यद्वा लोके वेदे चामोघत्वेन प्रसिद्धशरणागतिरूपार्थयुक्तமென்றாதல் प्रयोजनान्तरத்திலும் मोक्षத்திலும் ।

(सा.स्वाः) असम्मतமாகில் मतान्तरस्थர்களுடைய चरमश्लोकव्याख्यानமும் उपादेयமாக प्रसङ्गिயாதோ? किञ्च, "नान्यः पन्थाः" इत्यादिना भक्तिव्यतिरिक्तोपाय निषेधाद्वेदविरुद्धமானவிந்த चरमश्लोकार्थमुपादेयं தானாமோ? इत्यादिशङ्कैயைப் परिहरिயாநின்று கொண்டு चरमश्लोकवैलक्षण्यத்தையருளிச் செய்கிறார். व्यासेति । व्यासाम्नायः, महाभारतः । स एव पयोधिः, तस्य पयोधेः । कौस्तुभनिभम् । ऐरावतादीनां पयोधौ सद्व(म्भ)वेऽपि यथा कौस्तुभस्यैव भगवदुपादेयत्वं हृद्यत्वं च तथा चरमश्लोकोऽपि भगवतोऽत्यन्तहृद्यः, अत्यन्ताभिमतः । उत्तमः, "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इतिवच्चरमः । गीतान्ते श्रुत इति यावत् । तं, "वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम् । भारते भगवद्गीता धर्मशास्त्रे च मानवम् ।।" इति सर्वाङ्गीकृतप्रमाणभावगीताशास्त्रसारतया सर्वोत्कृष्टं श्लोकमिति वार्थः । केचन, अस्मदाचार्याः पराङ्कुशनाथमुनिश्रीभाष्यकारप्रभृतयः । लोकवेदपदवी विश्वासितोऽर्थः यस्य तम् । तथाभूतं विदुः । लोके हि पामरा अपि शरणागतं सम्यग्रक्षन्ति ।

(सा.प्रः) तत्प्राया यामुनाचार्यप्रभृतयश्च प्रशंसन्तीति दर्शयन् सर्वेषां चरमश्लोकार्थप्रवचनेच्छा-मुत्तम्भयति । व्यासाम्नायेत्यादिना । श्रीमहाभारते सारांशो गीता, तत्रापि चरमश्लोकोऽत्यन्तं सार इति समुद्रोन्मथनादुत्थितेभ्यस्तत्सारभूतेभ्यः उच्चैःश्रव ऐरावत प्रभृतिभ्योऽपि भगवत्स्वीकार्यत्वहेतु श्रैष्ठ्ययुक्तकौस्तुभतुल्यत्वमिति भावः । लोकवेदेत्यादि । "यथेच्छसि तथा कुरु" इति लौकिकरीत्या "सर्वगुह्यतमं भूयः" इति वैदिकरीत्या चरमश्लोकार्थो विश्वासितव्य इत्यर्थः ।

(सा.सं:) व्यासाम्नायेति । व्यासाम्नायः, महाभारतः । कौस्तुभो हि ऐरावतामृतोच्चैश्श्रवआदिभ्योऽ-तिशयितः । तत एव भगवतो हृदयाभरणतया हृद्योऽभूत् । चरमश्लोकोऽपि महाभारतसारगीता-सारतया अतिशयितः । एतस्य हृद्यत्वमनुकम्पा विशेष समुल्लसित चित्तवृत्ति कार्यत्वकृतम् । महाभारतान्तगीतान्तत्वादुक्तार्थप्रतिपादकत्वाच्चास्योत्तमत्वम् । केचन, नाथयामुनादयः । काक कपोतादिवृत्तान्ताभिज्ञलौकिकजनैश्शरणागतसंरक्षणाल्लोकपदवीविश्वासितार्थत्वम् । "मुमुक्षुर्वै" इति वेदपुरुषेण -

**मूः - येषामुक्तिषु मुक्तिसौधविशिखासोपानपङ्क्तिष्वमी,**
**वैशम्पायनशौनकप्रभृतयः...........**

(सा.दीः) अमोघत्वेन प्रसिद्धशरणागतिरूपार्थयुक्तमாயென்கை. लोकेशरणागतिरमोघेति प्रसिद्धिः पामराणामप्याश्रितसंरक्षणसंरम्भादवगम्यते । वेदेच ''तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति'' इत्यादिषु प्रसिद्धिः । यद्वा लोकपदवी, स्मृतिमार्गः । विदुः, निश्चिन्वन्ति स्मेत्यर्थः । यथा ''நாகணைமிசை நம்பிரான் சரணே சரண் நமக்கென்றும், சரணென்றுய்யப் போகிலல்லா லில்லை கண்டீர் சதிரே'' என்றும் ''மற்றொன்றில்லை சுருங்கச் சொன்னோம்.'' केचन என்றவர்களை विशेषिக்கிறார். येषामुक्तिष्विति । येषां दिव्यसूक्तिविषये, कीदृशीषु? मुक्तिसौधविशिखासोपान पङ्क्तिषु । मुक्तिसौधः, परमपदम् । तस्य विशिखा, राजमार्गम् । तस्यास्सोपानपङ्क्तिभूतासु । ''இவை பத்தும் வல்லாரமரரோடுயர்விற்சென்றறுவர் தம்பிறவியஞ் சிறையே. வளவுரையால் பெறலாகும் வானோங்கு பெருவளமே'' என்றதிறே. वैशम्पायनशौनकप्रभृतयः । वैशम्पायनர், साक्षाद्वेदव्यासशिष्यர் भारत प्रवर्तकत्वेन प्रसिद्धர். शोनकர், ऋग्वेदाचार्यரான आश्वलायनர்க்கு आचार्यர்.

(सा.स्वाः) वेदे च ''मुमुक्षुर्वै शरणमहं प्रपद्ये । तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः । तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति'' इत्यादौ प्रपत्तेर्मोक्षसाधनत्वाभिधानेन, लोक्यत इति व्युत्पत्त्या स्मृतिरुच्यते । श्रुति - स्मृतिभ्यां विश्वासितार्थं विदुरित्यर्थः । अनेन श्रुति विहितत्वाद्विलक्षणोपायस्य ''नान्यः पन्थाः'' इति निषेधस्य ज्ञानव्यतिरिक्तोपायनिषेधपरत्वाच्छ्रुतिविरोधाभावेनात्यन्तादरणीयत्वमस्यार्थस्येत्युक्तम् । केचनेति सामान्योक्त्या तातर्थ्यं सूच्यते । येषां, पराङ्कुशादीनाम् । मुक्तिरेव सौधः । तस्य विशिखा, वीथिः । तस्य सोपानपङ्क्तिभूतासु । मुक्तिरूपसर्वोन्नतस्थान प्रापकमहावीथिरूपप्रपत्तेः सोपानपङ्क्तिवत्प्रापिकासु । उक्तिषु, दिव्यसूक्तिषु । ''புகலொன்றில்லாவடியேன். உன்னடிக்கீழமர்ந்து புகுந்தேன். நாகணைமிசை நம்பிரான் சரணே சரண். न धर्मनिष्ठोऽस्मि'' इत्यादिसूक्तिषु चरमश्लोकव्याख्यानभूतासु । अमी श्रेष्ठाः । वैशम्पायनः, व्यासशिष्यः ।

(सा.प्रः) येषामित्यादि । विशिखायां सोपानपङ्क्तिर्यथा सर्वेषां सुखेन सौधारोहणाय भवति । तथा चरमश्लोकार्थनिष्ठानां वाक्यावगतार्थानुष्ठाने सर्वेषां मुक्तिः स्यादित्यर्थः । ये च चरमश्लोकार्थनिष्ठानां निकटे स्थित्वा तदुक्तिभिस्तदनुष्ठानेन अनुष्ठेयविशेषानवगम्य स्वयमपि तथैवानुतिष्ठन्ति । सर्वे ते भवभयरहितभगवत्किङ्करा भवन्तीत्यर्थः ।

(सा.संः) ''देवा वै त्वष्टारमभिजिघांसन् तस्मादपि वध्यम्'' इत्यादिना च प्रपत्तिपदवीप्रतिष्ठापनाद्वेदपदवी विश्वसितार्थत्वम् । येषां, प्रपन्नजनकूटस्थमारभ्य वादिहंसाम्बुदार्य पर्यन्तानाम् । उक्तिषु, ''நாகணைமிசை நம்பிரான். சரணென்றுய்ய'' इत्यादिरूपेण स्तोत्रगद्यादिरूपेणावस्थितसूक्तिषु । मुक्तिरेव सौधः, तत्सम्बन्धिनी विशिखा । राजमार्गरूपत्रय्यन्तात्मिका । तद्बोधितविवेकादिपर्वपरम्पराजनकत्वादुक्तीनाम् । ता एव वेदान्तरूपराजमार्गस्थसोपानपङ्क्तयस्तासु । वैशम्पायनः, साक्षाद्वेदव्यासशिष्यो भारतप्रवर्तकत्वेन प्रसिद्धः । शौनकः, ऋग्वेदाचार्याश्वलायनस्याचार्यो महाप्राज्ञः ।

मूः - ........श्रेष्ठाश्शिरःकम्पिनः ।। ६९।।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे चरमश्लोकाधिकारः

एकोनत्रिंशः ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे पदवाक्ययोजनाभागस्तृतीयः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।।

---

(सा.दीः) महाभागवतश्रेष्ठருமாயிருப்பார். प्रभृतिशब्दத்தால் शुकनारदादिसङ्ग्रहः । अमी, परमभागवत-श्रेष्ठत्वेन प्रसिद्धाः । शिरःकम्पिनो भवन्ति । ज्ञानदृष्ट्या तद्ज्ञानभक्तिवैराग्यपरिपूर्णदिव्यसूक्ती-स्साक्षात्कृत्य अद्यापि शिरःकम्पं कुर्वन्तीत्यर्थः । शीलार्थप्रत्ययस्य त्रैकालिकत्वात्सर्वदा शिरःकम्पिनो भवन्तीति गम्यत इति ।।६९।।

इति श्रीसारदीपिकायां चरमश्लोकाधिकार एकोनत्रिंशः ।।

---

(सा.स्वाः) शौनकः, ''शौनको ह वै महाशालोऽङ्गीरसं विधिवदुपपन्नः पप्रच्छ'' इत्यादौ प्रसिद्धः । आदिशब्देन मैत्रेयप्रभृतयो गृह्यन्ते । शिरःकम्पिनः, अस्मदाचार्याः व्यासाद्यपेक्षयापि अधिकचातुर्येण श्रुतिस्मृत्यनुगुणं चरमश्लोकार्थ वर्णनं कुर्वन्ति । एते पराङ्कुशादय एतत्सकाशात्सर्वरहस्यार्थग्रहणं केषाञ्चित् बहुजनार्जितभाग्यपरिणतिवशाज्ञातमिति शीलार्थप्रत्ययवशान्नित्यं शिरःकम्पशालिनः अस्मदाचार्योन्नीतश्रुतिस्मृत्यनुगुणादिचतुरविशदगम्भीरन्याययुक्तार्थवर्णनसमाकर्णनसञ्जाता-तिवेलसन्तोषवशसमुदीर्णशिरः कम्पशालिन इति यावत् । ते केचनास्मदाचार्या विदुरित्यन्वयः । एवं च ऋषीणामप्यत्यन्ताभिमतोऽयमर्थः । चरमश्लोकस्यापि प्रमाणेषु सारभूतत्वात्तन्मुखेनैवायमर्थ आचा-र्यसकाशाद्ज्ञातव्य इति भावः ।। ६९ ।।

इति श्रीमदुत्तरसारास्वादिन्यां चरमश्लोकाधिकार एकोनत्रिंशः ।।

---

(सा.प्रः) शिरःकम्पिनः, शिरःकम्पवन्तः भवन्तीत्यर्थः । एते प्रशंसन्तीति यथा समीपस्था जानीयुस्तथैषां गुणानुसन्धानात् विकृतमनस्का भवन्तीति भावः ।। ६९ ।।

इति श्रीसार प्रकाशिकायां चरमश्लोकाधिकारः एकोनत्रिंशः ।।

---

(सा.सं:) प्रभृतिशब्देन शुकपराशर श्रीवाल्मीकिभरद्वाजनारदादिसङ्ग्रहः । प्रपन्नजनकूटस्था-द्युक्तीनामाप्ततमत्वाद्धिततमत्वाच्च स्वोक्तिभिरेककण्ठत्वात्स्वोक्तीनां तादृशवैलक्षण्याभावाच्च । तान् । श्रुत्वा हर्षादत्यादरेण शिरःकम्पनं कुर्वन्तीत्यर्थः ।। ६९ ।।

इति श्रीसारप्रकाशिकासङ्ग्रहे चरमश्लोकाधिकारः एकोनत्रिंशः ।

* [குறிப்பு:- இந்த चरमश्लोकाधिकार सङ्ग्रह பாட்டு व्याख्यानं அச்சாகிற कालத்திலிருந்த सारप्रकाशिकामातृकैகளில் அந்த பாட்டு व्याख्यानமில்லாமல் இப்போது வந்திருக்கிற मातृकैயிலிருப்பதினால் அந்த பாட்டு व्याख्यानம் இவ்விடத்தில் அச்சிடப்பட்டது.]

---

स्त्रीशूद्रादीनां सुखानुसन्धानाय चरमश्लोकार्थं द्रामिडगाधया सङ्गृह्णाति । குறிப்புடன் इत्यादिना । குறிப்புடன் மேவுந்தருமங்களின்றி, सावधानानुष्ठेयतया स्वेनासाध्यधर्मत्याग पूर्वकम् । அக்கோவலனார் வெறித்துளவக்கழல், ''सर्वेषामेव लोकानां पिता माता च माधवः । गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः ।।'' इत्यादिषु सर्वशरण्यतया प्रसिद्धस्य गोपालस्य निरतिशयसुगन्धतुलसीभिरलङ्कृतचरणौ । மெய்யரணென்று விரைந்தடைந்து, ''यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै'' इत्युक्तरीत्या सदैकरूपरक्षकाविति सत्वरमाश्रित्य । பிரித்து, पुनरपि-வினைத்திரள் பின் தொடராவகை, पापराशिर्यथा नानुगच्छेत्तथा, पाप्मनां पुनरुत्पत्तिर्यथा न स्यात्तथेत्यर्थः । அப்பெரியோர் மறிப்புடை மன்னருள் வாசகத்தால், ''तं देवतानां परमं च दैवतम् । न तत्समश्चाभ्यधिकश्च दृश्यते । न तस्येशे कश्चन तस्य नाम महद्यशः । परः पराणां परमः परात्मा । पार्थो विजेता मधुसूदनस्य पादारविन्दार्पित चित्रपुष्पम् । ददर्श गङ्गाधरमौलिमध्ये बभूव भूयः कृतनिश्चयार्थः ।।'' इत्यादिषु सर्वोत्कृष्ट-तया प्रतिपादितस्य भगवतो ''मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन'' इत्याश्रितसंरक्षणे अतिनिर्बन्धवत्त्वेनोक्तत्वात्स्थिरतरया कृपयोक्तवाक्यरूपेण चरमश्लोकेन । மருளற்றனமே, निस्संशयाः स्मः । अत एव वीतशोकाश्च अभूमेति भावः ।। ३६ ।।

---

स्स र्व 139ம்ஂ்பாரம்- 559 பக்கத்தில், सारप्रकाशिकैயில், விட்டுப் போன वाक्यम् । स्सर्वपापप्रायश्चित्ततयोक्तभरन्यासस्यैव स्वपरनिर्वाहकत्वाङ्गीकारस्य युक्तत्वादाचार्यपुरस्करणपूर्वक प्रपदनस्याकर्तव्यत्वं वदन्नाचार्यपुरस्कारस्य प्रयोजनप्रदर्शनपूर्वकं शास्त्रार्थवत्त्वात् ।

॥ श्रियै नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

# ॥ आचार्यकृत्याधिकारः ॥

**मूः - अधिजिगमिषुः........**

(सा.दीः) இப்படி पदवाक्ययोजनारूपமான तृतीयभागं व्याख्यातமாயிற்று. இனி आचार्यशिष्य-कृत्याधिकारनिगमनाधिकारात्मकமான चतुर्थभागं विवरिக்கப்படுகிறது.

(सा.स्वाः) இப்படி पूर्वाधिकारத்திலே चरमश्लोकத்தில் सारतमமான मा शुचः என்கிற चरमवाक्यத்தின் तात्पर्यத்தைச் चरमदशैயிலே आचार्यர்கள் सच्छिष्यர்களுக்கு उपदेशिப்பர்களென்று சொன்னது கூடுமோ? ब्राह्मणனுக்கு अध्यापनं धनार्जनोपायமானபடியாலே सर्वदा शिष्य विषयத்திலே उपदेशं प्राप्तமன்றோ? चरमदशैயிலே என்று विशेषग्रहणंகூடுமோ? ''मन्त्रं यत्नेन गोपयेत्'' என்று विशेषविधिயினாலே रहस्यत्रयार्थव्यतिरिक्तविषयं धनार्जनोपायनियम विधानமென்னில் ''गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा'' என்கிறது विरोधिயாதோ? அது भक्तिपरिवाहद्रव्यदानविषय மென்னில் ''कृपया निस्स्पृहो वदेत्'' என்கிறது विरोधि யாதோ? किञ्च ''मन्त्रं यत्नेन गोपयेत्'' என்கிற विधिயாலே ஒரு विषयத்திலும் सर्वदा प्रधानं கூடாமையாலே चरमदशैயிலே தான் उपदेशंகூடுமோ? ''पात्रस्थमात्मज्ञानं च कृत्वा पिण्डं समुत्सृजेत्'' என்கையாலே கூடுமென்னிலப்போது शिष्य सामान्य विषयத்திலே उपदेशिக்கவேண்டுகையாலே सच्छिष्यர்களுக்கு என்று विशिष्योपादानंகூடுமோ? अपि च, सच्छिष्यர்களென்றது ''सन्तमेनं ततो विदुः'' என்கிறபடியே ब्रह्मज्ञानवானை என்றால் उपदेशं व्यर्थமாக प्रसङ्गिயாதோ? चरमवाक्यத்தின் तात्पर्यத்தை सच्छिष्यர்களுக்கு उपदेशिப்பர்களென்று சொன்னால் तदन्यरहस्यार्थங்களை असच्छिष्यர்களுக்கு उपदेशिக்கலாமென்று अतिप्रसङ्गமும் வாராதோ? तदतिरिक्तरहस्यार्थங்களை ग्रन्थावलोकनादिகளும் अध्यवसिக்கலாமென்றும் प्रसङ्गिயாதோ? आचार्यர்கள் उपदेशिப்பார்களென்றால் उपदेशादेवान्यथासिद्धமாகையாலே-

(सा.प्रः) एवं रहस्यत्रयं सरहस्यं निरूप्य पूर्वाधिकारे ''आचार्यர்கள் सच्छिष्यர்களுக்கு उपदेशिப்பர்கள்''

(सा.सं:) अथ यथाशास्त्रं संप्रदायप्रवर्तकाचार्यस्य उपदेशप्रवर्तकाचार्यस्य कृत्यमधिकारेण वक्तुमधिकारार्थं सङ्गृह्णाति ।

मूः - .....आद्यं धाम दिव्यं त्रिधाम्नः,

(सा.दीः) அதில் முந்த आचार्यकृत्याधिकारத்தில் आचार्यकृत्यप्रधानமான सत्संप्रदायप्रवर्तनத்தைக் காட்டுகிறார். முதல் श्लोकத்தில் सत्संप्रदायप्रवर्तनமே प्रधानமான आचार्यकृत्यமென்கிறார். अधिजिगमिषुरिति । ''क्षीराब्धिर्मण्डलं भानोर्हृदयानि मनीषिणाम् । त्रीणि धानानि मे सन्ति त्रिधामाऽहमिति स्मृतः ।।'' என்று சொல்லப்பட்ட त्रिधामனினுடைய आद्यமான दिव्यधामத்தைப் परमपदத்தை. आद्यशब्दं श्रीविष्णुलोकादिव्यावर्तकम् । अधिजिगमिषुः, गन्तुमिच्छुவான. आर्यः, आचार्यன்.

(सा.स्वाः) अतिविस्तृतैतद्ग्रन्थप्रणयनமும் व्यर्थமாகப் प्रसङ्गिயாதோ? किञ्च, பெரியவாச்சான் பிள்ளைமுதலான श्रीभाष्यकारसंप्रदायस्थர் பண்ணின रहस्यग्रन्थங்களிருக்கையாலேயுமிந்த ग्रन्थं सुतरां व्यर्थமன்றோ? किञ्च आचार्यர்கள் सच्छिष्यர்களுக்கு उपदेशिப்பர்களென்றால் आचार्यனுக்கு तदाचार्यன், அவனுக்கு तदाचार्यன், அவனுக்கு तदाचार्यன் என்று கொள்ளவேண்டுகையால் सर्गाद्यकालத்திலே उपदेष्टाஇல்லாமையாலே अमूलकत्वशङ्कैயும் प्रसङ्गिயாதோ? आचार्यர்கள் उपदेशिத்தால், ''गुरुं प्रकाशयेद्धीमान् मन्त्रं यत्नेन गोपयेत् । अप्रकाशप्रकाशाभ्यां क्षीयेते संपदायुषी ।।'' என்று निष्ठाहानिயும் प्रसङ्गिயாதோ? इत्यादिबहुविधशङ्कैகள் பிறக்க तन्निवृत्त्यर्थं सम्प्रदायप्रक्रियाभागத்தாலே आचार्यकृत्यं, शिष्यकृत्यं, तल्लक्षणं, सङ्ग्रहेणोपदेश्यार्थங்கள் முதலான अर्थங்களையும் प्रतिपादिக்கக்கடவராய், प्रथममाचार्यकृत्याधिकारத்தாலே आचार्यकृत्यத்தை विस्तरेण उपपादिயாநின்று கொண்டு अधिकारार्थத்தை रूपकसन्निवेशத்தாலே लोकाचारத்தையும் दृष्टान्तமாக प्रकाशिப்பியா நின்று கொண்டு श्लोकத்தாலே सङ्ग्रहिக்கிறார். अधिजिगमिषुरिति । त्रिधाम्नः, ''अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्'' इत्युक्तस्थानत्रयवतः । आद्यं, अनादिसिद्धम् । दिव्यं, रजस्तमोरहितशुद्धसत्त्वमयम् । धाम, परमपदम् । अधिजिगमिषुः, अधिगन्तुमिच्छुः । अनेन ''पात्रस्थमात्मज्ञानं च कृत्वा पिण्डं समुत्सृजेत् ।, विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।।'' इत्यादिकं सूच्यते । आर्यः, आचार्यः ।

(सा.प्रः) इत्युक्तमाचार्यकृत्यं सप्रकारं निरूपयति । तत्र ''पात्रस्थमात्मविज्ञानं कृत्वा पिण्डं समुत्सृजेत्'' इत्युक्तप्रकारेण शरीरवियोगात्पूर्वं सम्यक्शोधिताय सच्छिष्याय सम्प्रदाय परम्परागतरहस्यत्रयार्थमुपदिशेदित्याह । अधिजिगमिषुरित्यादिना । ''त्रिधामा केशवेनते'' इति निघण्टूक्तेः - त्रिधामा श्रीमन्नारायणः । ''दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम् ।

(सा.सं:) अधिजिगमिषुरिति । धाम, नित्यविभूतिरूपं स्थानम् । तस्य आद्यत्वं कारणत्वम् । तच्च सृज्यवर्गस्य नित्यविभूतिस्थवस्तुगतसादृश्योपजीवकत्वकृतम् । अप्राकृतवस्तुसमानसन्निवेशा एव हीह प्राकृतास्सर्वे । त्रिधाम्नः, ''अम्भस्यपारे'' इत्युक्तविधया त्रिस्थानकस्य । अधिजिगमिषुरित्युक्त्या लब्धविद्यो विरक्तश्च सन् प्राप्यतृष्णावशाद्यदावितमः पदमधिजिगमिषति ।

**मूः - श्रुतिविविधपरीक्षाशोधिते क्वापि पात्रे ।**
**अनघगुणदशायामाहितस्नेहमार्यः,**
**प्रदिशति..............................**

(सा.दीः) श्रुतीत्यादिना, ''संवत्सररात्रोषिताय'' इत्यादिरूपेण श्रविக்கப்பட்ட, विविधங்களான, समिञ्जलपुष्पाद्याहरण होमधेनुपरिरक्षण - प्रेरणादिरूपेण बहुविधமான परीक्षैகளால். शोधिते, निश्चलमनस्कமான. क्वापि पात्रे, योग्यரான पुत्रशिष्यादिகளில். अनघगुणदशायां, सत्त्वोन्मेषादि दशैயில் अनघगुणत्वदशायाமென்றபடி. अन्यत्र वर्तियில். आहितस्नेहं, विहितप्रेम यथा तथा । अन्यत्र निहिततैलम् ।

(सा.स्वाः) श्रुतिविविघपरीक्षाशोधिते । ''संवत्सरं तदर्धं वा मासत्रयमथापि वा । परीक्ष्य विविधोपायैः कृपया निःस्पृहो वदेत् ।।'' इत्यादौ श्रुताः । विविधाः, समित्पुष्पाद्याहरणहोम-धेनुरक्षणप्रेरणादिरूपेण विविधाः परीक्षाः । ताभिः शोधिते = निश्चलमनस्के । अन्यत्र मलापनोदक-विविधत्रिन्त्रिणीभस्मादिभिः शोधिते । क्वापि, एवंभूतपात्रस्य दुर्लभत्वात्क्वापीत्युक्तिः । पात्रे, पुत्रशिष्यादौ, अन्यत्र दीपपात्रे । अनेन सर्वदा झटित्या रहस्यार्थोपदेशो न कर्तव्यः सर्वेष्वपि गुणादिविमर्शमन्तरेण न कर्तव्य इति व्यज्यते । अनघगुणदशायां, वक्ष्यमाणसत्त्वोन्मेषादिदशायाम् । यद्वा, ''श्रुतादन्यत्र सन्तुष्टस्तत्रैव च कुतूहली''என்னலாம் अवस्थैயிலே इति अग्रे आचार्यैरभिधा-नात्तादृशावस्थायां वा । अन्यत्र - निर्मलसूत्रनिर्मितवर्त्याम् । आहितस्नेहम्, आहितः, निहितः स्नेहः यस्मिन् कर्मणि तद्यथा तथा । ''पुत्रमिवैनमनुकाङ्क्षन्'' इत्यभिधानात् । अन्यत्र - निक्षिप्ततैलम् । अनेनार्थाद्युपाधिमन्तरेण केवलं कारुण्य वात्सल्य मात्रेणोपदिशेदिति व्यज्यते ।

(सा.प्रः) गच्छ प्रभो रक्ष चास्मान्प्रपन्नान् कल्पेकल्पे जायमानस्स्वमूर्त्या इत्याद्युक्तं प्रधानस्थानं परमपदं गन्तुमुद्युक्त इत्याचार्यविशेषणम् । ''नापुत्राय नाशिष्याय वा संवत्सर रात्रोषिताय नापरिज्ञात कुलशीलाय दातव्या । संवत्सरं तदर्धं वा मासत्रयमथापि वा । परीक्ष्य विविधोपायैः कृपया निस्स्पृहो वदेत् ।।'' इत्यादिश्रुतिस्मृत्यवगत विविध परीक्षाभिः शोधिते शिष्ये इत्यर्थः । अन्यत्र निष्कल्मष दीपभाजनं पात्रमित्यर्थः । अनघेत्यादि । शिष्यस्य रजस्तमो विजृम्भणा समानाधिकरणसत्त्वो-न्मेषावसर इत्यर्थः । निष्कलङ्कतूलारव्धतन्तुकृत वर्तिकायामित्यर्थः । आहितस्नेह मिति क्रियाविशे-षणम् । उपदेश्यान् स्निह्यन्नुपदिशेदित्यर्थः । यथा लोके स्नेहयुक्तानां प्रवृत्तयः प्रीतिविषयभूतचेतन प्रयोजनैक प्रयोजनाः, एवं शिष्योज्जीवनैकप्रयोजन उपदिशेदित्यर्थः । अन्यत्र - स्नेहस्तैलम् ।

(सा.सं:) तदा कृपापरतन्त्रस्सन् ''पात्रस्थमात्मविज्ञानम्'' इति विविधकैङ्कर्यरुच्या उपदिशेन्न ख्यात्यादि-कामनयेति फलितम् । क्वापीत्युपदेश्यदौर्लभ्योक्तिः । सच्छिष्य इति भावः । प्रदीपोऽपि निष्कल्मषे पात्रे निष्कल्मषवर्त्यामारोपित एव अत्युज्ज्वल इति । शोधिते अनघगुणदशायामिति श्लिष्टतयोक्तिः । सत्त्वोन्मेषावस्थायामित्यर्थः । स्नेहाभावे दीप इवविद्याप्यस्नेहदत्ता अचिरमेव निष्प्रभा विरमेदिति सूचयितुमाहितस्नेहमित्युक्तिः । पूरित स्नेहो यथा भवति तथा । आर्यः, ''श्रोत्रियं ब्रह्मनिष्ठम्'' इत्याचार्यलक्षणलक्षितः । सद्देशिकेन सच्छिष्ये समारोपितज्ञानदीपस्य यावदात्मभाव्यसङ्कुचितविकास फलकतया इह उत्तरोत्तराधिकौज्ज्वल्यवत्तया च ।

...

**मूः - ........... निरपायं संप्रदायप्रदीपम्'' ।। ७० ।।**

(सा.दीः) निरपायं, नित्यम् । लौकिकदीपव्यावृत्तम् । संप्रदायप्रदीपं, संप्रदायமாவது? परमाचार्यனைத்துடங்கி अविच्छेदेन परम्परया उपदेशिத்துவருகிற अर्थविशेषशास्त्रविशेषங்கள், तद्रूपமான प्रदीपத்தை. अज्ञानान्धकारनिरसनத்தாலும், ज्ञातव्यार्थप्रकाशनத்தாலும் प्रदीपत्वम् । प्रदिशति, उपदिशति । उपदिशेदिति विवक्षैயாதல். ।। 70 ।।

परमाचार्यனான श्रीमन्नारायणன் முதலாக सदाचार्यपरम्परासमागतமான रहस्यत्रयार्थங்களை सङ्ग्रहित्துு, தாங்களும் अनुसन्धित्து, सात्त्विकतास्तिक्यादिगुणங்களையுடைய देवप्रकृतिகளான शिष्यादिகளுக்கு परीक्षामूलगुणनिश्चयपूर्वकமாக शुश्रूषावस्थैயிலே अषट्कर्णமாக तत्त्वहितपुरु-षार्थங்களையும், उत्तरकृत्यங்களையும் சுருங்க उपदेशित्து, असुरप्रकृतिகளுக்கு மறைத்து कृतार्थராய் वर्तिப்பர்கள் पूर्वाचार्यர்களென்றும், இவர்கள் तत्त्वत्रयरूपतत्त्वத்தையும், शरणागतिயாகிற हितத்தையும், उत्तरकृत्यத்தையும் சுருங்கவருளிச் செய்வர்கள் - शिष्यादिகளுக்கு; அல்லாத आसुरप्रकृतिகளுக்கு வெளியிடார்களென்றும் இவ் अधिकारத்தின் सङ्ग्रहार्थम् ।

(सा.स्वाः) निरपायं, प्रसिद्धदीपस्तु सापाय इति व्यतिरेकस्सूच्यते । सम्प्रदायप्रदीपं, भगवन्त-मारभ्यैतावत्पर्यन्तमविच्छिन्नतया उपदेशपारम्पर्येण समागततत्त्वहितपुरुषार्थविषयकसमीचीनज्ञानरूपं प्रदीपम्, अज्ञानान्धकारनिवर्तकत्वात्प्रदीपत्वोक्तिः । प्रदिशति, उपदिशेत् । वर्तमाननिर्देशेनाविच्छिन्न-संप्रदायागतत्वं व्यज्यते । ''तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्''इत्यत्र प्रोवाच प्रब्रूयात् ।'' इति श्रीभाष्यकारैर्विवरणात्तदनुसार्ययं श्लोकः । अनेन सर्गाद्यकाले उपदेष्टभावनिमित्तामूलकत्वशङ्का निवर्त्यते । सत्पात्रलाभे दानं च व्यज्यते । एवं सर्वार्थस्याप्यामरणं गोपनीयत्वे कैमुत्यन्यायेन मा शुच इति वरमश्लोक-चरमभागार्थस्यातिश्रेष्ठतया आमरणं गोपनीयत्वमन्त्यकाले सत्पात्रलाभे उपदेश्यत्वं च व्यज्यते ।। ७० ।।

இப்படி आचार्यனுக்கு सत्पात्रलाभे विधिबलத்தாலே अवश्यमुपदेशिக்கவேண்டுமாகில் विस्तरेण उपदेशिக்கிறதோ? सङ्ग्रहेणोपदेशिக்கிறதோ? आद्ये बहून्विचारानधिकृताधिकारिகளுக்கு वेदान्त श्रवणाभावं प्रसङ्गिக்கும் । अन्त्ये ''आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानु-सन्धत्ते सधर्मं वेद नेतरः ।'' என்கிற शास्त्रं विरोधिக்கும்? किञ्च, सम्प्रदायगतार्थங்கள் उपदेश्यங்களாகில் श्रोताக்களுக்கு अत्यल्पबुद्धिमत्त्व - विस्मरणशीलत्वादि संभावितமாகையாலே அதடியாக

(सा.प्रः) सम्प्रदायप्रदीपं, प्रदीपवत्तत्तदर्थव्यवहारहेतुतया संप्रदाय परम्परागतमर्थपञ्चक प्रतिपादकं रहस्यत्रयं दीपत्वेन निरूप्यते । निरपायमिति ऐहिकामुष्मिकतत्त्साधनविषय प्रमाणानि व्यावर्त्यन्ते ।।७०।।

(सा.सं:) निरपायत्वं-संप्रदायप्रदीपं, संप्रदायागतमर्थपञ्चकज्ञानाभिधानं दीपमित्यर्थः ।। ७० ।।

मूः - இப்படி ''गुरुर्गरीयान्''என்றும்,
''तमिमं सर्वसम्पन्नमाचार्यं पितरं गुरुम्''என்றும் சொல்லுகிறபடியே परमाचार्यனான सर्वेश्वरன் முதலாக सदाचार्यसम्प्रदायसमागतங்களாய் सिंहीस्तन्यंபோலே विजातीयர்க்கு रसं தெரியாதே रहस्यत्रयार्थங்களை सङ्ग्रहेण சேர்த்துத் தாங்களும் अनुसन्धिத்து,

''यो गोपायत्ययोग्यानां योग्यानां संप्रयच्छति ।
इममर्थं स मान्यो मे स्वस्ति वोऽस्तु व्रजाम्यहम् ।।
इदं ते नातपस्काय नाभक्ताय कदाचन ।

(सा.दीः) இவ் अर्थங்களில் प्रमाणं मध्ये मध्ये उपन्यसिக்கப்படுகிறது. இப்படி गुरुर्गरीया-नित्यादि । त्वमस्य पूज्यश्च गुरुर्गरीयान्என்று पितासि लोकस्येत्यादिः गुरुर्गरीयानित्यस्य पूर्वखण्डः । विजातीयர்க்கு, अस्मत्सिद्धान्तबहिर्भूतர்க்கு. रसं, याथार्थ्यं शेषत्वादि । यो गोपायतीति सात्त्वतवचनं, இதுக்கு अर्थம். யாதொருவனிவ் अर्थங்களை अयोग्यர் பக்கல் நின்றும் रक्षिக்கிறான். अयोग्यர்க்கு उपदेशिயாதேயிருக்கிறான். पूज्यரான पुत्रशिष्यர்களுக்கு நன்றாக उपदेशिக்கிறான். அவனெனக்கு पूज्यனென்று. इदं ते नातपस्कायेति भगवद्गीतावचनम् । இதுக்கு अर्थம். अतपस्काय, सदाचार-रहितனுக்கு.

(सा.स्वाः) सम्प्रदायोच्छेदं प्रसङ्गिயாதோ? किञ्चाचार्यன் उपदेशिக்க வேணுமாகில் अर्थयशोलाभप्रयोजनकत्वे ''कृपया निस्स्पृहो वदेत्''என்கிறது विरोधिயாதோ? இனி अर्थयशोलाभं प्रयोजनமன்றாகில் ''प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'' इति न्यायं प्रसङ्गिயாதோ? इत्यादि-शङ्कैகளையும், पूर्वोक्तशङ्कैகளையும், विस्तरेण परिहरिக்கிறார் - இப்படி इत्यादिना சுருங்கவருளிச் செய்வர்கள் इत्यन्तेन । गुरुर्गरीयानिति । ''पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्'' என்று वचनम् । गरीयान् गुरुः, श्रेष्ठो गुरुः । सदाचार्येति । शङ्कराद्युन्नीतार्थங்கள் असदाचार्योन्नीतங்களென்றும் सर्वेश्वरोपज्ञங்களென்றும் கருத்து. இப்படியாகிலிந்த रहस्यार्थங்கள் इतरர்களுக்கு रसिயாதேயிருக்கை கூடுமோ? என்ன सिंहीस्तन्यंபோலே इति । विजातीयர்க்கு, अस्मत्सिद्धान्तबहिर्भूतர்க்கென்றபடி. विजातीयர்க்கென்கையாலே जात्यन्तरர் போலே स्वभावत एव तत्तज्ञात्यापादकदुष्कर्ममूलமாக रसं தெரியாதென்றபடி. सङ्ग्रहेणेति । अनपेक्षितविस्तरமும், अपेक्षितसङ्कोचமுமற निबन्धनங்களிலே சேர்த்தென்றபடி. தாங்களும் अनुसन्धिத்து इति । उपदेशकालத்திலேயும் विमर्शं பண்ணி என்றபடி. இதினாலே अल्पबुद्धिश्रोतृमूलமாக संप्रदायविच्छेदशङ्कैயில்லையென்று கருத்து. यो गोपायतीति सात्वतसंहितायां भगवद्वचनम् । इदं ते इति गीतावचनम् । अतपस्काय, सद्वृत्तरहिताय । ''आचारहीनं न पुनन्ति वेदाः । वृत्तहीने तथा श्रुतम्'' इत्युक्तत्वात् ।

(सा.प्रः) एवं श्लोके सङ्गृहीतमाचार्यकृत्यं विस्तरेणाह - இப்படி गुरुर्गरीयानित्यादिना । पिताऽसि लोकस्येत्यादिः गुरुर्गरीयानित्यस्य पूर्वखण्डः ।

(सा.संः) सङ्गृहीतमेव विवृणोति । இப்படி इत्यादिना । रहस्यत्रयार्थங்களை इत्यन्तेन संप्रदायशब्दार्थ उक्तः । अथ पात्रशोधकानि श्रीसात्वतभगवद्गीता - वसिष्ठकरालसंवाद शाण्डिल्यस्मृति - सात्यकि-तन्त्रादिगतानि वचनान्युपादत्ते । यो गोपायतीत्यादिना ।

**मूः - न चाशुश्रूषवे वाच्यं नच मां योऽभ्यसूयति ।।**

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयम् ।।,**

**नावेदनिष्ठस्य जनस्य राजन् प्रदेयमेतत् परमं त्वया भवेत् ।**
**विवित्समानस्य विबोधकारकं प्रबोधहेतोः प्रणतस्य शासनम् ।।**

**न देयमेतच्च तथाऽनृतात्मने शठाय क्लीबाय न जिह्मबुद्धये ।**
**न पण्डितज्ञाय परोपतापिने देयं त्वयेदं विनिबोध यादृशे ।।**

**श्रद्धान्वितायाथ गुणान्विताय परापवादाद्विरताय नित्यम् ।**
**विशुद्धयोगाय बुधाय चैव क्रियावतेऽथ क्षमिणे हिताय ।।**

---

(सा.दीः) अभक्ताय, प्रेमरूपभक्तिरहितனுக்கு. अशुश्रूषवे, शुश्रूषा, श्रोतुमिच्छा । वरिवस्या च । तद्रहितனுக்கு. योमामभ्यसूयति तस्मै च । யாதோருவன் भगवद्द्वेषि அவனுக்கும் न वाच्यமென்கை. य इदमिति । भक्तिं मयि परां कृत्वा, मयि परां भक्तिं लब्ध्वाஎன்றபடி. नावेदनिष्ठस्येत्यादिश्लोकाः भारते वसिष्ठकरालसंवादगताः । विवित्समानस्य, विद ज्ञाने इति धातुः । ज्ञातुमिच्छोः । शुश्रूषोः என்றபடி. विबोधकारकं, ज्ञानजनकम् । ज्ञानार्थं प्रणतायஎன்கை. प्रबोधहेतोः, प्रबोधार्थम् । शासनं शास्त्रम् । अनृतात्मने, नास्तिकबुद्धयेஎன்கை. शठाय, वञ्चकाय । क्लीबाय, नपुंसकाय । जिह्मबुद्धिः, कुटिलबुद्धिः । पण्डितंमन्याय-यादृशे पुंसि देयमिदं तन्निबोध என்று अन्वयம். गुणान्विताय, शमदमाद्यन्विताय । विशुद्धयोगाय, विशुद्धभक्त्यन्वितायஎன்கை. क्रियावते, अनुष्ठानवते ।

---

(सा.स्वाः) अभक्ताय, आचार्यभगवद्भक्तिरहिताय । नचाशुश्रूषवे, शुश्रूषा, श्रोतुमिच्छा । वरिवस्या च-तद्रहिताय । मां योऽभ्यसूयति तस्मै च न वाच्यमित्यन्वयः । प्रतिवाक्यं नञा उक्त तपआदिषु एकहीनत्वेऽपि इतरसद्भावो न प्रयोजक इति भावः । नच मां योऽभ्यसूयतीत्यसमानविभक्ति-निर्देशः भगवद्भागवतादावप्यभ्यसूयुः विशेषतः परिहरणीय इति द्योतकः । अन्वयमुखेनाप्याह । य इदमिति । मद्भक्तेष्वित्युपलक्षणम् । तपआदिविशिष्टमद्भक्तेष्वित्यर्थः । कृत्वेति । मयि परां भक्तिं लब्ध्वेत्यर्थः । नावेदनिष्ठस्येत्यादयः भारते वसिष्ठकराल संवादगताः । अवेदनिष्ठस्य, वेदनिष्ठा रहितस्य । प्रबोधहेतोः, प्रबोधनिमित्तं प्रणतस्य । विवित्समानस्य । वेत्तुमिच्छोः । प्रबोधकारकं परमं एतच्छासनम् । शास्त्रं नदेयमिति पूर्वेणान्वयः । अनृतात्मने, असत्यबुद्धये । असत्यशीलायेत्यर्थः । शठाय, वञ्चकाय । क्लीबाय, नपुंसकाय । जिह्मबुद्धये, कुटिलबुद्धये । पण्डितज्ञाय, पण्डितं मन्याय । परोपतापिने, परोपतापकृते च न देयमित्यन्वयः । यादृशे पुंसीदं देयं तन्निबोध । श्रद्धान्विताय, रहास्यार्थश्रवणेत्वरान्विताय । गुणान्विताय, शमदमादिगुणान्विताय । विशुद्धयोगाय, विशुद्धयुक्त्यन्विताय । बुधाय, उपदिष्टग्रहणक्षमाय । क्रियावते, अनुष्ठानवते । क्षमिणे, क्षमावते । अनुष्ठानजनितदुःखसहिष्णवे । हिताय, लोकहिताय ।

---

(सा.प्रः) विवित्समानस्य, विद ज्ञान इति धातुः । ज्ञातुमिच्छोरित्यर्थः । प्रबोधहेतोः, बोधार्थम् । शासनं, शास्त्रम् । निर्णयार्थमात्मज्ञानजनकमित्यर्थः । विशुद्धयोगाय, निर्दोषयुक्तियुक्तायेत्यर्थः ।।

मूः - विविक्तशीलाय विधिप्रियाय विवादभीताय बहुश्रुताय ।
विजानते चैव तथा हित(म्) क्षमादमाय नित्यात्मसमाय देहिनाम् ।।
एतैर्गुणैर्हीनतमे न देयमेतत् परं ब्रह्म विशुद्धमाहुः ।
न श्रेयसा योक्ष्यति तादृशे कृतं धर्मप्रवक्तारमपात्रदानात् ।।
पृथ्वीमिमां यद्यपि रत्नपूर्णां दद्यान्न देयं त्विदमव्रताय ।
जितेन्द्रियायैतदसंशयं ते भवेत् प्रदेयं परमं नरेन्द्र ।।
कराल मा ते भयमस्तु किञ्चित् एतत् परं ब्रह्म श्रुतं त्वयाऽद्य ।
यथावदुक्तं परमं पवित्रं विशोकमत्यन्तमनादिमध्यम् ।।,
विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि च घोरायां न त्वेनामिरिणे वपेत् ।।
मूर्खाश्च पण्डितंमन्या अधर्मा धार्मिका इव ।
धर्मयुक्तान् प्रबाधन्ते साधूनां लिङ्गमास्थिताः ।।

---

(सा.दीः) विविक्तशीलाय, एकान्तप्रियाय । विधिः, विधानम् । तत्प्रियाय । विजानते, कृतज्ञाय । तथा हितं विजानते, हितमात्मान इच्छते என்கை. क्षमादमाद्यन्विताय என்கை. देहिषु नित्यमात्म समबुद्धये । एतन्मयोक्तं रहस्यं विशुद्ध परब्रह्मप्रतिपादक माहुः तादृशे, गुणहीने । धर्मप्रवक्तारं श्रेयसा नयोक्ष्यति । कुतः? अपात्रदानात् । करालेति संबोधनम् । परं ब्रह्म, परबह्मवाचकम् । विद्ययैव समं काममित्यादि शाण्डिल्यवचनानि । ब्रह्मवादिना, विद्यावता । पात्रालाभத்தில் विद्यया सह कामं मर्तव्यम् । घोरायामापद्यपि । एनां, विद्याम् । इरिणे, अयोग्यस्थले என்றபடி. न वपेत्, नोपदिशेत् என்கை. लिङ्गम्, वेषम् ।

---

(सा.स्वाः) विविक्तशीलाय, शान्तवासप्रियाय । विधिः, विधानम् । तत्प्रियाय, बहुश्रवणयुक्ताय । अत एव विजानते, कृतज्ञाय । हितौ क्षमादमौ यस्य सः तस्मै । यद्वा, हितमिति भेदेन पाठः । हितं विजानते इत्यन्वयः । क्षमादमाय, क्षमासहितदमायेति योजना । नित्यात्मसमाय । नित्येषु देहिषु आत्मसमबुद्धये । एतन्मयोक्तं रहस्यं विशुद्धं परं ब्रह्म । विशुद्धपरब्रह्मप्रतिपादकमाहुः । तादृशे, गुणहीने । धर्मप्रवक्तारं श्रेयसा न योक्ष्यति । कुतः? अपात्रदानात् । करालेति संबोधनम् । शेषं स्पष्टम् । परं ब्रह्म, तद्वाचकम् । अथ शाण्डिल्यवचनमाह । विद्ययैवेति । पात्रलाभ इति शेषः । न त्विति । एनां, विद्याम् । इरिणे, ऊषरे । अपात्रे न वपेत् । मूर्खाश्चेति । लिङ्गम्, वेषम् ।

---

(सा.प्रः) युक्तिदोषाः व्याप्त्यभावप्रतितर्कप्रतिहत्यादयः । इरिणशब्दविवक्षितार्थः क इत्याकाङ्क्षायामाह । मूर्खाश्चेत्यादिना । ननु मुमुक्षोः प्रपन्नस्य मोक्षप्रतिबन्धकभागवतापचारराहित्येन स्थितिरेवोचिता । न तूपदेशादि सदसद्विवेक इत्यत्र ''पात्रस्थमात्मविज्ञानं कृत्वा देहं समुत्सृजेत्'' इत्यादिवचनादुपदेशावश्यकत्वमभिप्रयन् तथात्वे च ''आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम् ।।'' इत्यादेरनुसर्तव्यत्वान्मूर्खाणामनुपदेश्यत्वोक्तिरनुचितेति शङ्कां च ''अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु'' इत्यादिप्रमाणात्साधुबाधकानामुपदेशो लोकविद्विष्ट इत्यवगमात्तेषामनुपदेश्यत्वोक्तौ

**मूः - एकतस्त्वपवर्गार्थमनुष्ठानादि कौशलम् ।
लोकानुसारस्त्वेकत्र गुरुः पश्चादुदीरितः ।।
भवन्ति बहवो मूर्खाः क्वचिदेको विशुद्धधीः ।
त्रासितोऽपि सदा मूर्खैः अचलो यः स बुद्धिमान् ।।
न विश्वासः क्वचित्कार्यो विशेषात्तु कलौयुगे ।
पापिष्ठाः वादवर्षेण मोहयन्त्यविचक्षणान् ।।
गोपयन् आचरेद्धर्मं नापृष्टः किञ्चिदुच्चरेत् ।
पृष्टोऽपि न वदेदर्थं गुह्यं सिद्धान्तमेव च ।।
आश्रितायातिभक्ताय शास्त्रश्रद्धापराय च ।
न्यायेन पृच्छते सर्वं वक्तव्यं शौचयोगिने ।।**

(सा.दीः) एकतः इति । यो गुरुः एकत्र अपवर्गार्थमनुष्ठानादिकौशलं प्रकाशयति । अन्यत्र लोकानुसरणं च करोति । सः पश्चादुदीरितः । अधमो गुरुः என்றபடி. अचलः, अचञ्चलबुद्धिः । नेति, क्वचिदपि पुरुषे विश्वासो न कार्थः । कलौ युगे विशेषतो न कार्यः । कुतः? पापिष्ठाः वादिनः अविचक्षणान्, मन्दबुद्धीन् । मोहयन्ति । धर्मं, धर्मविशेषं गोपयन्, अप्रकाशयन्नेवाचरेत् । अपृष्टस्स्वयमेव किमपि वचनं न ब्रूयात् । गुह्यमर्थं सिद्धान्तं च पृष्टोऽपि न वदेत् । तर्हि कस्मै वक्तव्यमित्यत्राह । आश्रितायेत्यादि । न्यायेन, शास्त्रोक्तन्यायेन । शिष्यः प्राप्तैरनुसरन् पृच्छते । नतु बलात् । शौचमत्र करणशुद्धिः ।

(सा.स्वाः) एकत इति । यो गुरुः । एकतः, एकत्र । अपवर्गार्थमनुष्ठानादि कौशलं प्रतिपादयति । एकत्र, परत्र लोकानुसरणं च करोति । सः गुरुः पश्चादुदीरितः । अथ यो गुरुरुदीरितः । अचलः, अचञ्चलबुद्धिः । न विश्वास इति । क्वचिदपि पुरुषे विश्वासो न कार्यः । कलौ युगे विशेषान्न कार्यः । कुत इत्यत आह? पापिष्ठा इति । दुर्वादिनः मन्दबुद्धीन् मोहयन्ति । दुर्वादियुक्तिमोहिताः अन्यथा भवेयुः । तत्तस्मात् क्वचिद्विश्वस्य विद्यादानं न कर्तव्यमिति भावः । धर्मविशेषं गोपयन्, अप्रकाशयन् आचरेत् । अपृष्टः, स्वयमेव किमपि न ब्रूयात् । पृष्टोऽपि । गुह्यं, रहस्यमर्थम् । सिद्धान्तमेव च न ब्रूयात् । तर्हि कस्मै वक्तव्यमित्यत्राह । आश्रितायेति । न्यायेन पृच्छते, "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इत्याद्युक्तप्रकारेण पृच्छते । न तु बलात्पृच्छते । शौचयोगिने, करणत्रयशुद्धियुक्ताय ।

(सा.प्रः) नानौचित्यमिति परिहरति । एकतस्त्वित्यादिना । "साधूनां लिङ्गमास्थिताः" इत्युक्तसाधवः कीदृशा इत्याकाङ्क्षायां तत्स्वरूपं तादृशस्य क्वाचित्कत्वं चाह । भवन्ति बहव इत्यादिना । तत्त्वहितपुरुषार्थविषयस्थिरबुद्धित्वं साधुत्वमिति भावः । एवम्भूतो विशुद्धधीः "पाषण्डिनो विकर्मस्थान् बैडाल व्रतिकान् शठान् । हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।।" इत्युक्तरीत्या पञ्चकादिष्वविश्वसन् वाग्व्यवहारादिभिस्सम्यक् ज्ञात्वा तैस्संभाषणादिकं कुर्यात् । तैरेव पृष्टोऽप्यन्यदेव ब्रूयादित्याह न विश्वासः क्वचिदित्यादिना श्लोकद्वयेन । एवं च "आचार्योऽप्यनाचार्यो भवति । श्रुतात् परिहरमाणः" इत्युपदेशाकरणे अनिष्टोक्तेः गुणवत्पात्रे स्वावगतं सर्वमुपदेष्टव्यमिति वदन् शिष्योज्जीवनं विहाय किञ्चिद्दृष्टार्थमयोग्यानामुपदेशे बाधकं प्रदर्श्य तथोपदेष्टुराचार्यस्य तच्छिष्यस्य च यत्किञ्चिद्दृष्टपुरुषार्थसिद्धिमपि सोदाहरणमाह । आश्रितायेत्यादिना श्लोकत्रयेण ।

(सा.संः) एकतस्त्विति, एकत्रेत्यर्थः । अनुष्ठानादिकौशलमेकत्र पुरुषे अपवर्गार्थमिति मत्वा स्थितिमत् । अपरत्र पुरुषे लोकानुसरणमिति मत्वा तयोर्मध्ये प्रथममुदीरितः न रहस्यत्रयार्थोपदेशयोग्यः ।

मूः - आत्मपूजार्थमर्थार्थं डम्भार्थमपि खिन्नधीः ॥
अयोग्येषु वदञ्छास्त्रं सन्मार्गात् प्रच्युतो भवेत् ।
ऊषरे निवपेद्बीजं षण्डे कन्यां प्रयोजयेत् ॥
सृजेद्वा वानरे मालां नापात्रे शास्त्रमुत्सृजेत् ।,
न नास्तिकायानृजवे नाभक्ताय कदाचन ॥
नैव हिंसाभिरुचये न लुब्धाय विशेषतः ।
दातव्यो मन्त्रराजोऽयं मन्त्रोऽयं हि न तादृशः ॥
ऋजवे गुरुभक्ताय वैष्णवाय विशेषतः ।
सर्वप्राण्यनुकूलाय दातव्यो देशिकेन तु ॥''
''தொண்டர்க்கமுதுண்ணச் சொல்மாலைகள் சொன்னேன்.''
''அந்தாதி மேலிட்டறிவித்தேனாழ்பொருளைச் சிந்தாமல் கொள்மினீர் தேர்ந்து.''
என்று श्रीसात्वत-भगवद्गीता - वसिष्ठकरालसंवाद-शाण्डिल्यस्मृति - सात्यकितन्त्रादिகளில்

(सा.दीः) पूजार्थम्, अर्थार्थं, डम्भार्थं, ख्यातिलाभपूजार्थமென்றபடி. अपि खिन्नधीः- खिन्नधीरपि । वृत्तिकर्शितत्वात् खिन्नधीत्वं भवति । ऊषरे वा कदाचिद्बीजं निवपेत् । एवं सर्वत्र, अयोग्ये शास्त्रं सर्वदा नोत्सृजेत् । न नास्तिकायेत्यादि सात्यकितन्त्रवचनानि । अनृजवे, कुटिलाय । न तादृशः । अयोग्येषूपदेष्टव्यो न भवति । தொண்டர்க்கமுதுண்ண, தொண்டர்தமக்கே अमृतपानार्थமாக. சிந்தாமல் கொள்மின், अयोग्यரிடத்தில். சிந்தாமல், இரையாமல். கொள்மின், परिगृहीயுங்கோள். நீர், நீங்கள். தேர்ந்து, இதின் वैभवத்தைப் परामर्शिத்து.

(सा.स्वाः) आत्मपूजार्थमिति ख्यातिलाभपूजार्थमित्यर्थः । अपि खिन्नधीः, खिन्नधीरपि । वृत्तिकर्शितोऽपीति यावत् । न नास्तिकायेत्यादि सात्यकितन्त्रवचनम् । न तादृशः, अयोग्येषूपदेष्टव्यो न भवति । தொண்டர்க்கு इति । தொண்டர்க்கு, दासர்களுக்கு. भगवद्भक्तர்களுக்கென்றபடி. அமுதுண்ண, अमृतरूपभगवदनुभवार्थமாக. சொல்மாலைகள், सूक्तिகளாகிற மாலைகள். शरण्यனுக்கு भोग्यतया हृदयङ्गममालारूपसूक्तिகளை. சொன்னேன், அந்தாதி इत्यादि । அந்தாதி रूपप्रबन्धத்தின். மேலிட்டு, निर्माणव्याजेन । रहस्यार्थங்களை ज्ञापिத்தேன். சிந்தாமல், अपात्रங்களிலே இரையாமல். தேர்ந்து, वैभवத்தைப் परामर्शिத்து. நீர், நீங்கள். கொள்மின், परिग्रहीயுங்கோளென்றபடி.

(सा.प्रः) एवं सामान्येनाध्यात्मविद्योपदेशयोग्यायोग्यविभाजकमुक्त्वा विशिष्य प्रपत्तिशास्त्रोपदेशयोग्यायोग्यविभाजकमप्याह । न नास्तिकायेत्यादिना सार्धश्लोकद्वयेन । योग्यानामेवोपदेष्टव्यत्वस्य सांप्रदायिकत्वमाह - தொண்டர்க்கு इत्यादिना । தொண்டர்க்கு इति । भगवद्दास्यैकरसिकानाममृतपानार्थं भगवद्गुणप्रतिपादकपदग्रथिताः गाथाः अकरवमित्यर्थः । भगवद्दास्यरसिकतोक्तिरितरव्यावृत्त्यर्थेति भावः । அந்தாதி மேல் इत्यादि । पूर्वगाथान्तिमपदोपक्रमकोत्तरगाथाभिः कृते प्रबन्धे अतिगम्भीरान् भगवद्गुणान् प्रतिपाद्यतयावस्थाप्य भागवतानामेव बोधार्थमुक्तवान् अतो यूयं सम्यग्विचार्य एकदेशस्याप्यपरित्यागेन अमुं प्रबन्धं स्वीकुरुध्वमित्यर्थः ।

(सा.विः) स्वयमज्ञत्वात् यः पश्चादुदीरितस्स एव तद्योग्यः । सर्वज्ञत्वादित्यर्थः । தொண்டர்க்கு इति । भक्तानां भोग्यतमभगवदनुभवाय मालारूपास्सूक्तीरुक्तवान् । அந்தாதி रूपगाथानिर्माणव्याजेन सुज्ञापितवान् दुर्ज्ञेयार्थान् । சிந்தாமல், अनधिकारिष्वनुपदिश्य रक्षामीति बुद्ध्या स्वीकुरुध्वं सावधानैरित्यर्थः ।

**मूः** - சொல்லுகிறபடியே **शरण्य**ன் **अनुमति**பண்ணும்படிக்கீடான **सात्त्विकतास्तिक्यादि-गुण**ங்களையுடையராய்,

**''अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।।**
**अहिंसा सत्यमक्रोधः त्यागश्शान्तिरपैशुनम् ।**

---

(सा.दीः) शरण्यன், शरण्यत्वेन वरणीयனான श्रियः पतिः । अनुमति, अभ्यनुज्ञैபண்ணும்படி. सात्यकितन्त्रादीति दिव्यप्रबन्धादिरादि शब्दार्थः । अभयं सत्त्व संशुद्धिरित्यादि । अभयं, शरीरविरोधिகள் பக்கல். सत्त्वगुणस्य संशुद्धिः, सत्त्वोद्रेकः । ज्ञानानुष्ठानयोर्व्यवस्थितिः । तपः, स्वकर्मनिष्ठा ।

---

(सा.स्वाः) उपात्तवचनங்களில் தோற்றாத आत्मगुणங்களுமில்லாமல் अनुक्तदोषங்களு முண்டாகில் विद्याप्रदानं प्रसङ्गியாதோ? என்ன அந்த वचनங்கள் शरण्यன் अनुमति பண்ணும்படிக்கீடான उक्तानुक्तगुणदोषसाहित्य राहित्योपलक्षणपरங்களென்கிற अभिप्रायத்தாலே யருளிச்செய்கிறார் शरण्यன். इति । अभयमित्यादि । अत्र श्रीमद्गीताभाष्यम् । ''इष्टानिष्ट संयोगवियोगरूपदुःखहेतुदर्शनजं दुःखं भयम् । तन्निवृत्तिरभयम् । सत्त्वसंशुद्धिः । सत्त्वस्य, अन्तः करणस्य । रजस्तमोभ्यामस्पृष्टत्वम् । ज्ञानयोगव्यवस्थितिः, प्रकृतिविविक्तात्मस्वरूपविवेकनिष्ठा । दानं, न्यायार्जितधनस्य पात्रे प्रतिपादनम् । दमः, मनसो विषयौन्मुख्यनिवृत्तिसंशीलनम् । यज्ञः, फलाभिसन्धिरहित भगवदाराधन पञ्चमहायज्ञाद्यनुष्ठानम् । स्वाध्यायः, सविभूतिकस्य भगवतस्तदाराधन-प्रकारस्य च प्रतिपादकः कृत्स्नो वेद इत्यनुसन्धाय वेदाभ्यासनिष्ठा । तपः, कृच्छ्रचान्द्रायण-द्वादश्युपवासादे र्भगवत्प्रीणन कर्मयोग्यतापादनस्य करणम् । आर्जवम्, मनोवाक्कायवृत्तीनामेकनिष्ठा । अहिंसा, परपीडावर्जनम् । सत्यम्, यथादृष्टार्थगोचरभूतहितवाक्यम् । अक्रोधः, परपीडाफलचित्तविकार-रहितत्वम् ।

---

(सा.प्रः) सात्यकितन्त्रादीति । दिव्यप्रबन्धादिरादिशब्दार्थः । शमादिरास्तिक्यादि इत्यादिशब्दार्थः । एकमेव भगवद्गीतायां दैवासुरविभागेनापि अतिविस्तरेण पात्रापात्रविवेकोपयुक्तागुणादोषाश्च भगवतैवोक्ता इत्याह । अभयं सत्त्वसंशुद्धिरित्यादिना । आगाम्यनिष्टानुसन्धानजन्यं दुःखं भयम् । तदभावः अभयम् । रजस्तमसोरुद्रेकशून्यत्वे सति सत्त्वगुणस्य उद्रिक्ततत्वं सत्त्वसंशुद्धिः । ज्ञानयोगव्यवस्थितिः ।, प्रकृति विविक्तात्मस्वरूप निष्ठा । दानं, न्यायार्जितधनस्य सत्पात्रे प्रतिपादनम् । मनोनिग्रहो दमः । यज्ञः पञ्चमहायज्ञादिः निराशीः कर्म । ''सर्वे वेदा यत्पदमामन्ति'' इत्युक्तप्रकारेण कृत्स्नोऽपि वेदो भगवत्तदाराधनप्रतिपादक इत्यनुसन्धानेन विशिष्टो वेदाभ्यासः स्वाध्यायः । तपः, कृच्छ्रचान्द्रायणादिना कायक्लेशः । आर्जवम्, मनोवाक्कायानामैकरूप्यम् । अहिंसा, परपीडावर्जनम् । भूतहितयथार्थवाक्यं, सत्यम् । अक्रोधः, परपीडाफलकमनोविकारराहित्यम् ।

---

(सा.सं:) अभयं, मरणभयविधुरता । सत्त्वसंशुद्धिः, परिशुद्धान्तःकरणत्वम् । ज्ञानयोगव्यवस्थितिर्नाम? ''ईदृशः प्रत्यगात्माऽसौ परमात्मा तथेदृशः । तत्संबन्धानुसन्धानमिति योगः प्रकीर्तितः ।।'' इत्युक्तविधया स्वपरस्वरूपयाथात्म्याख्यसम्बधानुसन्धानशीलता ।

**मूः - दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ।।**
**तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ।।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ।।''** என்றும்,
**''द्विविधो भूतसर्गोऽयं दैव आसुर एव च ।**
**विष्णुभक्तिपरो दैवः.....''** என்றும் சொல்லப்பட்ட **दैवप्रकृति**களுக்கு-
**''संवत्सरं तदर्धं वा मासत्रयमथापि वा ।**
**परीक्ष्य विविधोपायैः कृपया निस्स्पृहो वदेत् ।।**

---

(सा.दीः) अपैशुनं, परानर्थावहवाक्यराहित्यम् । अलोलुप्त्वम्, अलोलुपता अलब्धत्वமென்றபடி. ह्रीः, अकृत्यविषयलज्ञा । अचापलं, विषयेषु चापल्यराहित्यम् । तेजः, पटुत्वम् । ग्रहणसामर्थ्यम् । शौचं சொல்லிற்று. नातिमानिता, गर्वाभावम् । दैवीं सम्पदमभिजातस्य, सत्त्वप्रकृतिकस्य एते गुणा भवन्ति । भूतसर्गे, भूतसृष्टिर्द्विविधा । दैव आसुरश्चेति । दैवी, देवसंबन्धिनी प्रकृतिः स्वभावो येषां ते दैवप्रकृतयः । विविधोपायैः, समिज्ञलाद्याहरणार्थप्रेषणादिभिः । परीक्षानन्तरं निश्चलबुद्धये शिष्याय निस्स्पृहस्सन् केवलकृपया रहस्यमर्थं वदेत् ।

---

(सा.स्वाः) त्यागः, आत्महितप्रत्यनीकविमोचनम् । शान्तिः, इन्द्रियाणां विषयप्रावण्यशीलनम् । अपैशुनम्, परानर्थकरवाक्यनिवेदनाकरणम् । दया, भूतेषु दुःखासहिष्णुता । अलोलुप्त्वं, अलोलुपत्वम् । विषयेषु निःस्पृहत्वमित्यर्थः । मार्दवं, अकाठिन्यम् । साधुजनसंश्लेषार्हतेत्यर्थः । ह्रीः, अकार्यकरणे व्रीडा । अचापलम्, स्पृहणीयविषय सन्निधानाचञ्चलत्वम् । तेजः, दुर्जनैरनभिभवनीयत्वम् । क्षमा, परनिमित्तव्रीडानुभवेऽपि परेषु चित्तविकाररहितता । धृतिः, महत्यामप्यापदि कृत्यकर्तव्यतावधारणम् । शौचम्, बाह्यान्तरकरणानां कृत्ययोग्यता शास्त्रीया । अद्रोहः, परेष्वद्रोहः । परेषु स्वच्छन्दवृत्तिनिरोधरहितत्वमित्यर्थः । नातिमानिता, अस्थाने गर्वोऽतिमानिता । तद्रहितता - एते गुणाः दैवीं सम्पदमभिजातस्य भवन्ति । देवसंबन्धिनी संपद्दैवी । देवाः भगवदाज्ञानुवर्तनशीलाः । तेषां संपत्, सा च भगवदाज्ञानुवृत्तिरेव । तामभिजातस्य, तामभिमुखीकृत्य जातस्य । तां निर्वर्तयितुं जातस्य भवन्तीत्यर्थः'' इति । परीक्ष्येति । समित्पुष्पाद्याहरणादिभिर्विविधैरुपायैर्निश्चलबुद्धिरिति निर्णीय तस्मै निस्स्पृहस्सन् केवलकृपया रहस्यतमार्थं वदेत् । अत्र विशेषमाह । - त्यागः, आत्महित विरोध्यैहिकामुष्मिकरूपानुबन्धत्यागः । शान्तिः, बाह्येन्द्रियनिग्रहः । अपैशुनं, परानर्थकर वाक्यानुक्तिः । दया, स्वार्थनिरपेक्षपरदुःख निराचिकीर्षा । अलोलुप्त्वं, विषयेषु निस्स्पृहत्वम् । मार्दवं, साधुजनसंश्लेषानर्हता । ह्रीः, अकार्यकरणे व्रीडा । अचापलं, स्पृहणीये सन्निहितेऽप्यविकृतत्वम् । तेजः, दुर्जनैरनभिभवनीयत्वम् । क्षमा, परैः पीडनेऽप्यविकृतत्वम् । धृतिः, महापद्यपि कृत्येष्वेव कर्तव्यता धीः । शौचं, स्थाने विष्णु चिन्तनादिः । अद्रोहः, परेषां स्वच्छन्दवृत्त्यनिरोधः । अस्थाने गर्वोऽतिमानिता, तद्राहित्यं नातिमानिता । एते गुणा दैवीं संपदमभिजातस्य भवन्ति । देवाः भगवदाज्ञानुवर्तनशीलाः । तेषां संपत्, भगवदाज्ञानुवृत्तिः । तामभिमुखीकृत्यजातस्य भवन्तीत्यर्थः । पुरुषेष्वेवंविधत्वस्य ''शीलं संवसता ज्ञेयं तच्च काले न भूयसा'' इत्युक्तकालविलम्बाभावे ज्ञानं न स्यादित्यत्रोक्तं संवत्सरमित्यादि

**मूः - ''यदृच्छयोपसन्नानां देशान्तरनिवासिनाम् ।**
**इष्टोपदेशः कर्तव्यो नारायणरतात्मनाम् ।।''**
**इत्यादि**களிற்சொன்ன **परीक्षादिमूलगुणनिश्चयपूर्वक**மாக **''श्रुतादन्यत्र सन्तुष्टस्तत्रैव च कुतूहली''** என்னலாம் **अवस्थै**யிலே **अषट्कर्ण**மாக வெளியிட்டு,
**''डम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ।।''** என்றும் **''विपरीतस्तथाऽऽसुरः''** என்றும் சொல்லப்பட்ட **आसुरप्रकृति**களுக்கு மறைத்து,

(सा.दीः) अत्र विशेषमाह । ये देशान्तरनिवासिनः यदृच्छयोपपन्नाः नारायणे ऐकान्त्यङ्गताश्च तेभ्यः इष्टोपदेशश्चिरपरीक्षां विनापि कर्तव्य इति । श्रुतादिति । अर्थविशेषश्रवणादन्यत्र = लोभादौ प्रीतिर्यस्य नास्ति । तत्रैव च कुतूहली, अर्थविशेषश्रवण एवादरवान् । अषट्कर्णமாக, மூன்றாம் பேரில்லாதவிடத்தில் என்கை. डम्भ इत्यादि । आसुरीप्रकृतिः स्वभावो येषां ते आसुरप्रकृतयः ।

(सा.स्वाः) यदृच्छयेति । देशान्तरनिवासिनां नारायण ऐकान्त्यं भजतां यदृच्छयोपपन्नानां चिरपरीक्षां विनाऽपीष्टोपदेशः कर्तव्य इत्यर्थः । श्रुतादिति । भावेक्तः । रहस्यार्थश्रवणादन्यत्र लाभादौ । सन्तुष्टः, अलंबुद्धिः, निस्स्पृहः । तत्रैव च कुतूहली । आदरवान् । यद्वा, आशंसायं क्तः, श्रोतुमभीप्सितादन्यत्र शास्त्रान्तरेऽलम्बुद्धिरित्यर्थः । अषट्कर्णமாக, மூன்றாம் பேரில்லாதவிடத்திலே. வெளியிட்டு इति । समीचीनन्यायोपेतपूर्वाचार्योपदिष्टप्रमाणसरणिप्रतिपादकग्रन्थविस्तारத்தினாலே வெளியிட்டென்றபடி. डम्भ इत्यादि । डम्भः, धार्मिकत्वख्यापनाय धर्मानुष्ठानम् । दर्पः, कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षः । अतिमानश्च, स्वविद्याभिजनाननुगुणोऽभिमानोऽतिमानः । क्रोधः, परपीडाकरचित्तविकारः । पारुष्यं, साधूनामुद्वेगकरस्वभाववत्त्वम् । अज्ञानं, परावरवस्त्वविवेकता । एते स्वभावा आसुरीं संपदमभिजातस्य भवन्ति । असुराः, भगवदाज्ञातिवृत्तिशीलाः । यद्वा, सात्यकितन्त्रादिகளில் சொல்லுகிறபடியே इत्यस्य दैवप्रकृतिகளுக்கு வெளியிட்டு असुरप्रकृतिகளுக்கு மறைத்து इत्यत्रान्वयः ।

(सा.प्रः) दूरदेशादागतस्याप्येवंविधत्वं ज्ञातुं शक्यमित्याह । यदृच्छयेत्यादिना । ज्ञानव्यतिरिक्तप्रयोजनराहित्येनेत्यर्थः । श्रुतादन्यत्र सन्तुष्ट इति । श्रुतम्, श्रवणम् । तस्मादन्यत्र सन्तुष्टः, तद्व्यतिरिक्तेष्वभिलाषरहित इत्यर्थः । ज्ञानार्थोपदेशकव्यतिरिक्तातिशयितप्रयोजनेभ्यो विरक्त इति यावत् । डम्भ इत्यादि । धार्मिकत्वाप्रायार्थर्मानुष्ठानं डम्भः । कृत्याकृत्यविवेकाभावहेतुर्विषयानुभवजो हर्षो दर्पः । अभिजनविद्यावृत्ताननुगुणो अभिमानोऽतिमानः । परोद्वेगकरं वाक्यं पारुष्यम् । यद्वा, परपीडाफलकमनोविकारः पारुष्यम् । साधूद्वेगकरस्वभावत्वमित्यर्थः । अज्ञानम्, तत्त्वहितपुरुषार्थानामविवेकः ।

(सा.सं:) यदृच्छया, दैवात् । यथा शास्त्रं स्वपरीक्षितगुरुलक्षणलक्षितोऽयमिति निश्चित्यातिदूरादागतो यस्स भगवदनुग्रहविशेषविषय इति यदृच्छयोपसन्न इत्युच्यते । श्रुतादन्येषु, उपदिष्टादन्येषु । असन्तुष्टः, वाङ्मनःप्रवृत्तावरुचिमान् । तत्रैव, उपदिष्ट एव । कुतूहली, मननादिकुतूहलवान् । इति शिष्यगुणे विज्ञाते तदनन्तरमित्यर्थाभिप्रायेण என்னலாம் अवस्थैயிலே इत्युक्तम् । विपरीताः, दैवसंपद्विपरीताः ।

**मूः** - சீரிய **धन**முடையார் சேமித்து வாழுமாப்போலே **चरितार्थ**ராய் **वर्ति**ப்பார்கள் **पूर्वाचार्य**ர்கள். இவர்கள் **देहेन्द्रियादिव्यतिरिक्त**னாய் **नित्य**னாயிருப்பானொரு **आत्मा**உண்டு, இச் **चेतनाचेतन**ங்களிரண்டுமொழியவிவற்றுக்கு **अन्तर्यामि**யாய் **शेषि**யாயிருப்பானொரு **परमात्मा**உண்டு, இப்**परमात्मा**வையொழியவிவ் **आत्मा**வுக்குத் தானும் பிறரும் **रक्षक**ராக மாட்டாரென்று **तत्त्व**த்தையும், **अनादिकालं**அந்தாதியாக **संसरि**த்துப் போந்த அடியேனுக்கு இனியொரு **गर्भवासादिक्लेशं**வாராதபடி திருவடிகளைத் தந்து **रक्षि**த்தருள வேண்டுமென்று **आचार्य**ன் **प्रसादि**த்த **गुरुपरम्परापूर्वकद्वय**த்தாலே **श्रीमन्ना(श्रीमा**னான) **नारायण**ன் திருவடிகளை **शरण**மாகப் பற்றி **आत्मात्मीय**ங்களையும், அவற்றைப்பற்றவரும் சுமைகளையும் அங்கே **समर्पि**ப்பதென்று **हित**த்தையும், **सदाचार्य**ன் காட்டிக்கொடுக்கக் கைக்கொண்ட-

(सा.दीः) சீரிய, श्लाघ्यமான. சேமித்து, निक्षेपित्तु चरितार्थராய் उपदेशप्रकारं காட்டுகிறார். இவர்கள் इत्यादि

(सा.स्वाः) இப்படியாகில் सत्पात्रं दुर्लभமாகையாலே परिमितமாகையால் பிறருக்கு மறைக்குமாகில் अरण्यचन्द्रिकैபோலே யாகையாலே अतुष्टिकरமாகாதோ? என்னவருளிச் செய்கிறார். சீரிய इति । சீரிய, श्लाघ्यமான । சேமித்து, பிறருக்குக் கொடாதே निक्षेपित्तु. चरितार्थராய் इति । "பொன்னுலகாளீரோ புவன முழுதாளீரோ" என்கிறபடியே स्वयंपुरुषार्थமாக उपदेशिக்கையாலே "प्रयोजनमनुद्दिश्ये"त्यादि न्यायप्रसङ्गமில்லையென்றபடி. இப்படியாகில் अल्पश्रुतரான परमास्तिकशिष्यர்களுக்கு अनुपदेशं प्रसङ्गियாதோ? என்ன अधिकारिभेदेन विस्तरेण श्रवणरुचिகளுக்கு विस्तरेणोपदेशिப்பர்களென்றும், सङ्ग्रहरुचिகளுக்கு सङ्ग्रहेणोपदेशिப்பர்களென்றும் व्यवस्थैயாலே विरोधமில்லை என்றருளிச் செய்கிறார். இவர்கள் इति । அந்தாதியாக इति । मरणजननமாக என்றபடி. रक्षित्तருளவேண்டுமென்கிறத்துக்கு शरणமாகப்பற்றி என்கிறத்தோடே अन्वयம். शरणமாகப்பற்றி, प्राप्यமாகப் பற்றி என்றபடி. द्वयத்தாலே रक्षित्तருளவேண்டுமென்று फलाभिसन्धिபண்ணி तदर्थமாக समर्पिப்பது इत्यन्वयः । सङ्ग्रहरुचिக்களுக்கு इति पूर्वं வெளியிட்டென்றது विस्तारப்படி என்று கருத்து.

(सा.प्रः) சீரிய, श्लाघ्येत्यर्थः । சேமித்து வாழுமாப்போலே, दस्युभूयिष्ठसमये निक्षेपादीनां सुगुप्तङ्कृत्वा दस्युविनाशे उद्धृत्यानुभवन्यायेनेत्यर्थः । उपदेष्टव्यमित्युक्तं? तत्रोपदेश प्रकारः क इत्याकाङ्क्षायां स्त्रीशूद्रादीनां संस्कृतप्रियाणां च द्रमिडभाषावाक्येन श्लोकेन च तमाह । இவர்கள் इत्यादिना । இவர்கள் इत्यस्य அருளிச் செய்வர்கள் इत्यनेन अन्वयः । அந்தாதியாக इति । पूर्वशरीरावसानकाले तत्सूक्ष्मांशोद्धारेणोत्तरशरीरारम्भो यथा स्यात्तथेत्यर्थः । स्वर्गगामिनां देवमनुष्यादि शरीरपरिग्रहान्तरालेऽपि भूतसूक्ष्मसंबन्धः "तदन्तरप्रतिपत्तौ रंहति" इत्यादिभिरवगन्तव्य इति । तृतीयस्थानगतानां तु "अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावृत्तीनि भूतानि भवन्ति-

(सा.सं:) சீரிய, स्वाधिकाराधिक உடையார் इत्यनन्तरमशक्ताः इति शेषः । ननूक्तयावद-र्थोपदेशानधिकारिस्त्रीशूद्रादीनां विषये आचार्यस्य कथमुपदेशप्रवृत्तिप्रकार इत्युक्ते तं प्रकारं दर्शयति । இவர்கள் इत्यादिना ।

